The Department of Public Instruction, Bombay.

# THE RÂJATARAṄGIṆÎ

OF

# KALHAṆA.

EDITED

BY

DURGÂPRASÂDA, SON OF VRAJALÂLA.

VOL. III.

CONTAINING THE SUPPLEMENTS TO THE WORK OF JONARÂJA, SRÎVARA AND PRÂJYABHAṬṬA.

EDITED

BY

P. PETERSON, M. A.

500 COPIES.





Bombay:

GOVERNMENT CENTRAL BOOK DEPÔT.



1896.

*Price 2¼ Rupees.*

Bombay Sanskrit Series No. LIV.

जोनराज श्रीवर प्राज्यभट्टकृताः

# राजतरङ्गिण्यः

एल्फिन्स्तनविद्यालयस्थसंस्कृताध्यापकवरेण

डाक्टर पीटर् पीटर्सनाख्येन

संशोधिताः

ताश्च

राजानुशासनेन मुम्बापुरवर्तितत्त्वविवेचकाभिधाने मुद्रायन्त्रालये मुद्रिताः

अस्य च ग्रन्थस्य स्वामित्वं (१८६७) सप्तषष्ट्युत्तराष्टादशशतस्य
पञ्चविंशं स्वनियममनुसृत्य संगृहीतम्।

१८९६.

मूल्यं सपादं रूप्यकद्वयम्।



अथ

जोनराजकृता

# द्वितीया राजतरङ्गिणी ।

---

सिद्धे यत्र सति त्रपाकुलमिव स्पर्धोभिलाषाहते-
रन्तर्धिं वहति त्रिलोकमहितं शेषं निजार्धद्वयम् ।
स्नेहैकीभवदाशयद्वयजयाकाङ्क्षीव गाढं मिल-
द्देहार्धद्वयमस्तु तद्भगवतोरद्वैतसंपत्तये ॥ १ ॥

दातुं भक्ताय कल्याणं गर्भे बिभ्रदिवान्वहम् ।
तुन्दिभो गणराजः स विघ्नशान्तिं करोतु नः ॥ २ ॥

श्रीगोनन्दमुखैर्धर्मसंमुखैरा कलेः किल ।
कश्मीरकाश्यपी भूपैरपालि गुणशालिभिः ॥ ३ ॥

तेषामभाग्यहेमन्तनिशातमसि तिष्ठति ।
नैव कश्चिदपश्यत्तान्काव्यार्कोनुदयाच्चिरम् ॥ ४ ॥

रसमय्या गिरा वृद्धां नित्यतारुण्यमापिपत् ।
अथ श्रीजयसिंहान्तं तत्कीर्तिं कल्हणद्विजः ॥ ५ ॥

ततो देशादिदोषेण तदभाग्यैरथापि वा ।
कविर्वाक्सुधया कश्चिन्नाजिजीवत्परान्नृपान् ॥ ६ ॥

श्रीजैनोल्लाभदीने क्ष्मां संप्रत्यक्षति रक्षति ।
जोनराजाभिधस्तेषामुद्यतो वृत्तवर्णने ॥ ७ ॥

दर्पग्लानिभवां राजपान्थानां तापसंततिम् ।
हर्तुं संरोपितः काव्यद्रुमो भाविफलोदयः ॥ ८ ॥
उपस्काररसं क्षिप्त्वा विनयामृतशीतलैः ।
सज्जनैर्वर्धनीयोयमपि यत्नेन भूयसा ॥ ९ ॥
मग्नान्विस्मृतिपाथोधौ जयसिंहादिभूपतीन् ।
श्रीजैनोल्लाभदीनस्य कारुण्यादुज्जिहीर्षतः ॥ १० ॥
सर्वधर्माधिकारेषु नियुक्तस्य दयावतः ।
मुखाच्छ्रीशिर्यभट्टस्य प्राप्याज्ञामनवज्ञया ॥ ११ ॥
राजावलिं पूरयितुं संप्रति प्रतिभासमः ।
कवीनामाभिलाषेण न तु स्वस्मान्ममोद्यमः ॥ १२ ॥
क्व चुण्ठीजलवन्मद्वाक्क्व च काव्यं तरङ्गितम् ।
छायामात्रानुकारेण किं नडं पुण्ड्रकायते ॥ १३ ॥
अन्तःशून्यां लघुप्रज्ञां तुम्बीमेतां वहन्नहम् ।
पारं राजतरङ्गिण्या गन्तुं हन्तोद्यमं श्रितः ॥ १४ ॥
पृथ्वीनाथगुणाख्याने चापलं मे न दूषणम् ।
अलंकारैरहंकारात्कुरूपापि हि वल्गति ॥ १५ ॥
कवीनामुपभोग्या वा मद्वाक्स्वान्तरसिद्धये ।
गङ्गाजलं जलं तेषां यैर्न पीतं जलान्तरम् ॥ १६ ॥
राजोदन्तकथासूत्रपातमात्रं कृतं मया ।
कुर्वन्तु रचनामत्र चतुराः कविशिल्पिनः ॥ १७ ॥
मणीनां घर्षणायैव महाशाणस्य नैपुणम् ।
कान्तिप्रणयने तेषां मुखसारमणेस्तु तत् ॥ १८ ॥
विनैव प्रार्थनां काव्यं कवेः पश्यन्ति साधवः ।
किमर्थितः शशी विश्वं सुधासारेण सिञ्चति ॥ १९ ॥

अनुनीतोपि कालुष्यं खलः काव्ये न मुञ्चति ।
सुधाधौतोपि नाङ्गारः शुभ्रतामेति जातुचित् ॥ २० ॥
पश्यन्तु मत्काव्यमिति चिरं दूरं गता कवेः ।
अतः परं मुखप्रेक्षिभावदैन्यकदर्थना ॥ २१ ॥
समः स्यादप्रवीणानां गीतसंस्कृतयो रसः ।
वानरा गुञ्जते गुञ्जान् शीते वह्निकणभ्रमात् ॥ २२ ॥
काव्यं श्रुतमपि प्रीत्यै नाबोधोपहतात्मनाम् ।
हीनदन्तबलस्येक्षुर्मुखे न्यस्तः करोति किम् ॥ २३ ॥
पदार्थसुन्दरे काव्ये दर्शिते निर्मलात्मनाम् ।
दुर्वारं गुणिरत्नानां मत्सरप्रतिबिम्बनम् ॥ २४ ॥
लक्ष्मणा दूषयन्निन्दुं बुधं मत्सरयक्ष्मणा ।
विधाता वाच्यतामेति परोद्रेकासहाग्रणीः ॥ २५ ॥
मद्वाक्कल्हणकाव्यान्तःप्रवेशादेतु चर्वणम् ।
निर्गमाम्बु सरित्तोये पतितं पीयते न किम् ॥ २६ ॥
जगदानन्दनो देवद्विजातिकृतवन्दनः ।
क्षितिसंक्रन्दनः साक्षादासीत्सुस्सलनन्दनः ॥ २७ ॥
गजराजैकवाहत्वप्रसिद्धिमपि बिभ्रती ।
जयसिंहाभिधाने श्रीश्चित्रं यस्मिन्सदावसत् ॥ २८ ॥
वाग्देव्या लालिते मात्रा श्रियो भोक्तरि भूपतौ ।
तयोः श्वश्रूस्नुषत्वेन नैवादर्शि विरोधिता ॥ २९ ॥
त्रिगर्ताधिपतेर्वश्यं मल्लं जातु सुशर्मणः ।
वैरिनिर्वासितं प्राप्तं वृत्तिकामं नृपोग्रहीत् ॥ ३० ॥
सर्वत्रौषधयस्तृणानि मणयो ग्रावाण एवाखिलै-
र्मन्यन्ते गुणिनो दिगन्तरगतास्तावज्जनाः प्राकृताः ।

यावन्नैव नयन्ति कर्मभिरभिध्येयप्रकर्षप्रथै-
श्चित्रप्रायदशैश्च निर्मलमतिस्फारं जनं रञ्जनम् ॥ ३१ ॥

वसुधावासवे याते जेतुं यवनमेदिनीम् ।
सैन्यस्य वल्लभो मल्लः शौर्योद्रेकादथाभवत् ॥ ३२ ॥

हतशेषं तुरुष्केशसैन्यं तुलयितुं निशि ।
शिबिरं मल्लचन्द्रोगाद्रिपूर्णां साहसोर्जितः ॥ ३३ ॥

यत्र न प्राविशद्वायुर्भीत्येव सुभटैर्वृते ।
ध्रुवं मन्त्रौषधिबलात्प्रविश्यान्तर्बलान्तरे ॥ ३४ ॥

सुप्तस्नेहांहसो भीतेरनिघ्नन्यवनेश्वरम् ।
उपानहौ स्वनामाङ्के निनायास्य शिरस्त्रताम् ॥ ३५ ॥

उपानहौ परिज्ञाय गृहीत्वा चाथ सोप्यरिः ।
भूपतेः शिबिरं यातः श्रियं कीर्तिमिवादित ॥ ३६ ॥

द्वे मूर्ती तपनानलावथ तथा शंभोः शशाङ्काम्भसी
नेता हन्त मिथो गतानुगतिको लोकस्तुलां तां द्वयीम् ।
सूर्याचन्द्रमसोर्यथास्वमुपलैः कान्तैर्विशेषं परं
तेषां तत्द्युतियोगिसंभविगुणैर्लब्ध्वा जनो रोचकी ॥ ३७ ॥

त्रिशेब्दे फाल्गुने कृष्णद्वादश्यां भूमिवल्लभः ।
स्वसौभाग्येन दिव्यस्त्रीदृशामप्रीणयत्तराम् ॥ ३८ ॥

अथाभ्यषेचि तत्पुत्रो जडैः स परमाणुकः ।
अणीयःपत्रविस्फारः कुन्दो माघदिनैरिव ॥ ३९ ॥

अवधूय प्रजात्राणमवधीर्य च दिग्जयम् ।
कर्तुं प्रारभताखिन्नं राजा कोशस्य संचयम् ॥ ४० ॥

दातुं भोक्तुमनीशस्य श्रोत्रियस्येव संपदम् ।
प्रयागजनकौ धूर्तौ राज्ञो मुमुषतुः श्रियम् ॥ ४१ ॥

तौ हि स्वभृत्यैर्निःसत्त्वं कारितै राक्षसाकृतिम्।
तमत्रासयतां रात्रौ रात्रौ चित्रेण कर्मणा ॥ ४२ ॥
मिथ्यात्मनीनतां तस्य नाटयन्तौ कुमन्त्रिणौ।
रक्षासूनिति तं वित्तं त्याजयामासतुर्नृपम् ॥ ४३ ॥
स्थाने भिषायकस्यैतावादिश्य स्वानुजीविनम्।
तृणच्छन्नं महारत्नैश्चैत्र्यां पूजयतः स्म तौ ॥ ४४ ॥
स पुनः कृतसंकेतः पश्यत्स्वेव जनेष्वहो।
राज्ञः कृत्वाशिषं रात्रौ सालंकारो ययौ वनम् ॥ ४५ ॥
भिषायको बलिं यत्ते गृहीत्वा व्यधिताशिषः।
निर्विघ्नं भावि तद्राज्यमिति तौ भूपमूचतुः ॥ ४६ ॥
भिषायकदिने भृत्यं स्वं कृत्वा तौ भिषायकम्।
रत्नैरभ्यर्च्य विपिनं नीत्वाथ प्रत्यमुञ्चताम् ॥ ४७ ॥
कुबेरस्त्वयि तुष्टोद्य नानारत्नविभूषितः।
कृत्वा तवाशिषं लोकसमक्षमतिरोहितः ॥ ४८ ॥
इत्युक्त्वा भूपतेस्तस्य मुग्धस्य कृपणस्य च ॥
प्रयागजनकौ धूर्त्तौ प्रसादं प्रत्यदापिताम् ॥ ४९ ॥
एवं कदीश्वरस्यास्य बालस्येव विभीषिकाः।
संदर्श्य कोशं निःशेषं लुण्ठयां चक्रतुर्विटौ ॥ ५० ॥
राजा सार्धान्नवाब्दान्स क्ष्मां भुक्त्वा दिवसान्दश।
चत्वारिंशाब्दनाभस्यसिताष्टम्यां लयं ययौ ॥ ५१ ॥
वन्तिदेवाभिधः सप्तचत्वारिंशेथ वत्सरे।
भाद्रशुक्लदशम्यां स तस्य पुत्रो व्यपद्यत ॥ ५२ ॥
वुप्पदेवाभिधः पौरैर्योग्यालाभान्नृपः कृतः।
प्रापितो घासरचितः पूजामिव भिषायकः ॥ ५३ ।

दृष्ट्वा स्थूलशिलां हृष्टो मूढः सोथ स्वमन्त्रिणः ।
आदिशत्स्तन्यदानेन वर्ध्यन्तामितरा इति ॥ ५४ ॥
श्रुत्वा तत्स्थानमाहात्म्यं बालिशो मन्त्रिभिः सह ।
आगात्सुरेश्वरीक्षेत्रं नौपथेन स जातुचित् ॥ ५५ ॥
अप्सु स्वप्रतिबिम्बेस्य कुर्वतो मुखवैकृतम् ।
रुषा चपेटां ददतो न्यपतन्मणिमुद्रिका ॥ ५६ ॥
राज्ञः क मणिमुद्रेति पृच्छतः सोभ्यधादिति ।
पतिता सा जले रेखां तत्राभिज्ञानमाचरम् ॥ ५७ ॥
एवं निदर्शनीभूय मूर्खाणां नाम राजताम् ।
नवाब्दांश्चतुरो मासान्सार्धे द्वे च दिने व्यधात् ॥ ५८ ॥
तस्यानुजोथ भूभारमनिच्छन्नपि जस्सकः ।
स्ववृद्धिकामैरत्यज्ञो लवन्यैरभ्यषिच्यत ॥ ५९ ॥
बध्यन्ते न शुका इवोदितवचः संवादिनो वायसा
भूमिः शर्करिलोर्वरेव भजते नो कर्षकाक्षोदनम् ।
अश्मा सैन्धववन्न जातु गमितो निष्पिष्य चूर्णाकृतिं
केषांचिद्गुणवद्गुणाय महते दोषोपि संजायते ॥ ६० ॥
सोदरौ क्षुक्षभीमाख्यौ द्विजौ तस्य महीभुजः ।
धूर्तत्वेन प्रियावाज्ञामचिरादुदलङ्घताम् ॥ ६१ ॥
सहार्थौ समसामर्थ्यौ स कथं नौ सहिष्यते ।
भूपं मत्वापि सामर्षं नान्यं वव्रतुरित्यमू ॥ ६२ ॥
स्वयं यच्च न संभेजे तयोरेको नृपश्रियम् ।
लवन्योत्सिक्तता हेतुर्न त्वनौचित्यशङ्किता ।
तत्र हेतुर्लवन्येन्द्रभयं नानौचिती पुनः ॥ ६३ ॥
यान्त्यङ्गसंगममनङ्कुशमङ्कयन्ति
रागं प्रदर्श्य हृदि कम्पमुदञ्चयन्ति ।

व्यापादयन्ति विषवेदनया विशेषा-
द्विश्वास्य दुष्टपिटिका युवतिश्च हा धिक् ॥ ६४ ॥
वार्धकक्षीणशक्तित्वाद्विरक्ताम्बुवधूरपि ।
हत्वा क्षुक्षं विषेणाशु भीमं भोगमकारयत् ॥ ६५ ॥
सा देवरस्य सङ्गेन श्वित्रसंचित्रिता सती
दानेन माधवादीनां स्वपापं पर्यणीनमत् ॥ ६६ ॥
सोष्टादशाब्दान्क्ष्मां भुक्त्वा सत्रयोदशवासरान् ।
युगागाङ्काब्दमाघान्त्यदशम्यां प्रलयं ययौ ॥ ६७ ॥
ततः श्रीजगदेवस्तत्तनयो विनयोर्जितः ।
ततान जनताहर्षं मधुमास इवाधिकम् ॥ ६८ ॥
परस्परविरुद्धानां भृत्यानां तुल्यवृत्तिता ।
तत्राभूदुत्पलाब्जानामिव संध्याक्षणागमे ॥ ६९ ॥
उज्जहार महीनाथः पृथुविज्ञानकौशलः ।
भूतले दुर्व्यवस्थानं शल्यं शल्यहरो यथा ॥ ७० ॥
मनःशल्यायमानः स निःसामान्यगुणो नृपः ।
कुचक्रिकाबलाद्देशान्मन्त्रिभिर्निरवास्यत ॥ ७१ ॥
निग्रहानुग्रहाधायिमन्त्रज्ञं गुणराहुलम् ।
स प्राप सचिवं मित्रं कपीन्द्रमिव राघवः ॥ ७२ ॥
उदयप्रातिलोभेन शूरद्विजपती समम् ।
अगातामथ कश्मीरदेशं तौ विस्मयावहौ ॥ ७३ ॥
चिरं भुक्तां श्रियं त्यक्तुमनीशाः समरोद्यताः ।
तन्मन्त्रौजोहुताशान्तः प्रापुः शलभतां द्विषः ॥ ७४ ॥
जित्वा क्ष्मां बुभुजे भूपश्छत्रचामरहासिनीम् ।
लक्ष्मीमराजलक्ष्मां तु श्रीगुणाकरराहुलः ॥ ७५ ॥

राजा रज्जुपुरे राजद्राजतच्छत्रधारिणम् ।
हर्षेश्वरस्य प्रासादं निर्ममे निर्ममेहितः ॥ ७६ ॥
वाल्लभ्याद्द्वारपतितां पद्मेनामवता ततः ।
दुरात्मनावधि च्छत्रविषदानेन भूपतिः ॥ ७७ ॥
रक्षित्वा क्षितिमब्दान्स सत्र्यहर्तूंश्चतुर्दश ।
नन्दाष्टाङ्काब्दचैत्रान्त्यचतुर्दश्यां लयं ययौ ॥ ७८ ॥
तत्पुत्रो राजदेवोथ काष्ठवाटं भयाद्गतः ।
आनिन्ये वामपार्श्वस्थैर्द्वारेशस्य विरोधिभिः ॥ ७९ ॥
तं सल्हणाख्यदुर्गान्तःप्रविष्टं दुष्टचेष्टितः ।
अवेष्टयद्बलैः पद्मो मण्डलैरिव पन्नगम् ॥ ८० ॥
उपायनीकृतापूर्वपादुकालोककौतुकात् ।
प्रमत्तं कोपि चण्डालो द्वारेशमवधीद्रणे ॥ ८१ ॥
अभिषिक्तस्ततो भट्टैः सभेरीशङ्खनिःस्वनम् ।
प्रणतानन्तसामन्तः सेवकानन्वजिग्रहत् ॥ ८२ ॥
असामान्यो लवन्येन्द्रान्स वास्तव्यकुटुम्बितान् ।
निन्ये क्षोणीपरिवृढो रूढिमारोढिमादिशन् ॥ ८३ ॥
लवन्यवन्यकारिणां दर्पनिर्दलनं व्यधात् ।
नरसिंहो महातेजा वनानामिव पावकः ॥ ८४ ॥
माल्लैर्बलाढ्यचन्द्रस्य बलिनो लहरेशितुः ।
हरतो नगरार्धं स शक्तो नाभून्निवारणे ॥ ८५ ॥
पुण्यं राशीभवन्मूर्त्तमिवाथ स्वाभिधाङ्कितम् ।
बलाढ्यचन्द्रः सान्द्रौजा नगरान्तर्मठं व्यधात् ॥ ८६ ॥
अयं खशो मृदुः कश्चिदस्माभिरभिषिच्यते ।
अमन्त्रयन्निदं भट्टा राज्ञावगणितास्ततः ॥ ८७ ॥

न भट्टोहं न भट्टोहमित्यश्राव्यि पदेपदे ।
भट्टेभ्यः क्रुध्यता तेन निर्दिष्टे भट्टलुण्ठने ॥ ८८ ॥
तदैव विमलाचार्यः शाके खेषुनवाङ्किते ।
षडद्रिनन्दमासस्य मलभ्रममवारयत् ॥ ८९ ॥
निर्ममे निर्ममो राजपुरीं राजोलकं तथा ।
राजदेवः स राजेन्दू राजन्मार्जितमङ्गलः ॥ ९० ॥
अहानि सप्तविंशानि त्रयोविंशांश्च वत्सरान् ।
मासत्रयीं च राजा स क्ष्मां रक्षित्वा क्षयं ययौ ॥ ९१ ॥
संग्रामदेवस्तत्पुत्रो गोत्रसुत्रामतां भजन् ।
त्रासमासूत्रयद्राजसिंहः शात्रवदन्तिनाम् ॥ ९२ ॥
विश्रम्भात्सूर्यमनुजं चक्रे प्रतिनिधिं स्वयम् ।
कुचक्रिकः स भोगेभ्यो लुभ्यन्द्रोहमचिन्तयत् ॥ ९३ ॥
श्रुतद्रोहो महीभर्ता भीतः स लहरीशितुः ।
चन्द्रस्य मण्डलं सूर्यः प्राविक्षदुदयेच्छया ॥ ९४ ॥
दारुणेरुणकाले स सूर्यं चन्द्रान्वितं तदा ।
स्वर्भानुरिव भूभानुश्चित्रं सममगीमिलत् ॥ ९५ ॥
शमालाधिपतिस्तुङ्गः सूर्यं पार्श्वे नयन्मदात् ।
कृतयात्रेण राज्ञाथ नीचभावमनीयत ॥ ९६ ॥
मार्गैर्निरिन्दुरविभिश्चौरवद्रजनौ भ्रमन् ।
विटत्यक्तस्ततः सूर्यो बद्ध्वा राज्ञा व्यपाद्यत ॥ ९७ ॥
स्वलक्ष्मीं रक्षितुं साक्षात्तस्मिन्नात्तक्षणे प्रभौ ।
अकारयन्नहिंभयं स्तेनाः कल्हणनन्दनाः ॥ ९८ ॥
गोत्रजेषु बलिष्ठेषु नष्टाशः सोथ पार्थिवः ।
शिष्टमिष्टं च शरणमगाद्राजपुरीपतिम् ॥ ९९ ॥

तस्मिन्दण्डधरे दूरं याते डामरफेरवः ।
अन्त्राण्यपि विशामाशुरशेषं रक्तपायिनः ॥ १०० ॥
राज्ञा सुमनसा त्यक्तं द्विजैश्च स्पर्शदूषितम् ।
भोज्यं डामरडोम्बानां तद्राज्यान्नमभूच्चिरम् ॥ १०१ ॥
स्वमण्डले विशीर्णेथ परमण्डलमाविशन् ।
न कैरनुमतो राजा प्रत्यासन्ननवोदयः ॥ १०२ ॥
प्रत्यागतो राजपुर्याः स रिपून्समरे जयन् ।
ब्राह्मणान्काल्हणी रक्षन्राज्यं पुण्यं च लब्धवान् ॥ १०३ ॥
एकविंशतिशालं स श्रीविशालं विशांपतिः ।
गोद्विजानां निवासाय चकार विजयेश्वरे ॥ १०४ ॥
काल्हणिप्रणिधीनां स द्विषां लुण्ठनकाङ्क्षिणाम् ।
चौराणामिव दीपोभूद्वेषणीयो महीपतिः ॥ १०५ ॥
शाखाक्रान्तदिगन्तः स सुदुराशैर्दुराशयैः ।
कविकल्पद्रुमो राजा विच्छिन्नः कल्हणात्मजैः ॥ १०६ ॥
नायकीकृत्य तं भूपं कविः पण्डितयःशकः ।
स्वोक्तिहारलतां विद्वत्कण्ठभूषात्वमानयत् ॥ १०७ ॥
षोडशाब्दान्दशाहानि स भुक्त्वा क्ष्मां व्यपद्यत ।
जगद्द्रोथ पञ्चम्यां भाद्रेष्टाविंशवत्सरे ॥ १०८ ॥
रामदेवोथ तत्पुत्रो हत्वा स्वपितृघातकान् ।
पृथ्वीराजे प्रजाभारं सर्वमेव समार्पिपत् ॥ १०९ ॥
लेदर्या दक्षिणे पारे सल्लारे स महीपतिः ।
स्वनामाङ्कं व्यधात्कोट्टं यशोराशिमिवापरम् ॥ ११० ॥
प्रमादाद्भङ्गमानीतः शमालाविजयोद्यमे ।
तेनोत्पलपुरे विष्णोः प्रासादो नूतनीकृतः ॥ १११ ॥

वैशाखे मासि पक्षे शशधरविशदे त्रिंशदब्दे स भक्त्या
द्वादश्यां रामराजे क्षितिमवति निजप्रेयसीं सोमवारे।
पृथ्वीराजः शमालाविजयनसमये दस्युभग्नं मुरारिं
संपूर्णाङ्गं विधायोत्पलपुरनगरे स्वप्रतिष्ठां चकार॥ ११२॥

पुष्पं चन्दनवृक्षस्य फलं चम्पकभूरुहः।
अपत्यं तस्य राज्ञश्च हन्त नाकारि वेधसा॥ ११३॥

भिषायकपुरस्थस्य कस्यचिद्ब्राह्मणस्य सः।
पुत्रं लक्ष्मणनामानं पुत्रीयामास भूपतिः॥ ११४॥

अकृत्रिमपिता पुत्रप्रीतिं प्रीतिः प्रथीयसी।
वस्त्विवोचितमालेख्यं तयोरतुलयत्तराम्॥ ११५॥

श्रीसमुद्राभिधा देवी विमुद्रितसमुद्रजा।
वितस्तायां स्वनामाङ्कं नगरान्तर्मठं व्यधात्॥ ११६॥

त्रयोदशदिनं मासं वत्सरांश्चैकविंशतिम्।
क्ष्मां भुक्त्वैकोनपञ्चाशे वर्षे स द्यामगादिषे॥ ११७॥

कथंचिल्लक्ष्मदेवोथ पात्यमानाङ्गविह्वलः।
नम्रः कण्टकिनीं वल्लीमिव क्षोणीं बभार सः॥ ११८॥

क्षत्रीकृतोपि नामुञ्चत्स्वधर्मं धरणीपतिः।
न माणिक्यश्रियं धत्ते रञ्जितोश्मापि जातुचित्॥ ११९॥

वितस्तायास्तटे श्वश्रूमठोपान्ते मठं नवम्।
निष्पङ्का निजनामाङ्कं महेला महिषी व्यधात्॥ १२०॥

कज्जलेन तुरुष्केण बहिरेत्यात्र मण्डले।
लुण्ठाकेन प्रजादृष्टिरुत्पाद्यास्त्रुवता हता॥ १२१॥

त्रयोदशाब्दान्मासांस्त्रीन्द्वादशाहं च भूपतिः।
भुक्त्वा द्वाषष्टिवर्षेथ पौषान्ते स व्यपद्यत॥ १२२॥

कज्जलोपद्रवात्तस्माल्लेदरीमात्रनायकः ।
सिंहदेवोथ संग्रामचन्द्रेणाक्षोभि भूपतिः ॥ १२३ ॥
नगरान्तर्मठं कृत्वा लहरेन्द्रे मृते सति ।
सिंहदेवो नृसिंहोथ क्ष्मां ररक्ष क्षयाकुलाम् ॥ १२४ ॥
सिंहदेवो नृसिंहस्य सिंहेन गुरुणान्वितः ।
प्रतिष्ठां सिंहलग्नेथ ध्यानोड्डारेकरोत्कृती ॥ १२५ ॥
कर्ता कार्यं च लग्नं च गुरुः सिंहश्च कोविदः ।
पतितेयं भवेत्तस्य बत सिंहपरम्परा ॥ १२६ ॥
स निष्कलक्षविक्रीतक्षीरेण विजयेश्वरम् ।
एकाह एव स्नपयन्बत शुद्धिं ययौ नृपः ॥ १२७ ॥
राज्ञा श्रीशंकरस्वामी गुरुर्मन्त्रोपदेशकृत् ।
अष्टादशमठैश्वर्यदक्षिणाभिरपूज्यत ॥ १२८ ॥
परलोकजयोपायं वाग्देवीप्राभृतं नृपः ।
आत्मोपज्ञमिमं श्लोकं शय्योत्थायं सदापठत् ॥ १२९ ॥
पावकनिर्मलदृष्टिं विबुधगणैरर्च्यमानपादमहम् ।
शशिशकलादर्शयुतं गौरीशं शंकरं वन्दे ॥ १३० ॥
पान्थानां तोयदानाय पितॄणां तर्पणाय च ।
दंपत्योः पापनाशाय धर्मसंवर्धनाय च ॥ १३१ ॥
निजालंकारदानेन निपानं रचितं पथि ।
मडवाश्रमग्रामान्ते गौर्या शंकरभार्यया ॥ १३२ ॥
खोनमोषाधिपस्यासीत्कन्या प्रज्ञद्विजस्य सा ।
सत्यशीलान्विता भक्ता गौरी गौरीव शंकरे ॥ १३३ ॥
दुहितुर्दुश्चरित्रेण योभूद्दण्डः पितुः पतन् ।
इडागल्यार्थितो राजा नर्तक्या तं न्यवारयत् ॥ १३४ ॥

स दुर्जनपरिष्वङ्गादास्तिकप्रज्ञयोज्झितः।
धात्रीपुत्र्यां स्मरादर्शे स्वात्मानं प्रत्यबिम्बयत् ॥ १३५ ॥
दर्याख्यो गणानास्वामी कामसूहोपबृंहितः।
तं विरक्तप्रजं मुक्तविनयं छद्मनावधीत् ॥ १३६ ॥
चतुर्दशाब्दान्षण्मासांश्चयहन्यूनान्महीपतिः।
भूत्वा शुचौ दिवमगात्स वर्षे सप्तसप्ततेः ॥ १३७ ॥
तद्भ्राता सूहदेवोथ कामसूहोपबृंहितः। .
जडोपि सकलामेव कश्मीरक्ष्मां वशे व्यधात् ॥ १३८ ॥
दिगन्तरादुपागत्य बहवो वृत्तिलिप्सया।
तमाश्रयन्महीपालं पुष्पद्रुममिवालयः ॥ १३९ ॥
वृत्त्यै लंकारचक्रोपि दरद्देशात्तदाययौ।
संततेर्भाविसाम्राज्यः प्राज्यं कश्मीरमण्डलम् ॥ १४० ॥
क्रमराज्याभिधे राष्ट्रे त्राहग्रामं नृग्रामणीः।
ददौ वसतये तस्मै नियतेः स नियोगतः ॥ १४१ ॥
पार्थोन्य इव पार्थोभूत्पञ्चगह्वरसीमनि।
यो गह्वरपुरं चक्रे तत्पुत्रो बभ्रुवाहनः ॥ १४२ ॥
तद्वंश्यः कुरुशाहोभूद्यद्वाहृदयपर्वते।
ज्याकिणच्छद्मना भेजे यशःशुभ्रत्विषं निशा ॥ १४३ ॥
काश्मीराः पार्वती तत्र राजा ज्ञेयो हरांशजः।
इत्येतत्प्रत्ययायेव यस्यासीच्चक्षुषां त्रयम् ॥ १४४ ॥
काश्मीरेषु हि साम्राज्यं कुरुशाहस्य संततिः।
शंशदीनमुखीमुख्या ख्यातकीर्तिः करिष्यति ॥ १४५ ॥
ताहराजोजनिष्ठास्माद्यस्य चापलताश्रिता।
मृद्वुर्मुहुरहो मौर्वी श्रुत्यन्तमगमत्तराम् ॥ १४६ ॥

शाहमेरः स शौर्योष्मा ग्रीष्मो भानुस्ततोजनि ।
यस्य वैरिवधूबाष्पैः प्रतापाग्निरदीप्यत ॥ १४७ ॥
वने विहरतस्तस्य शाह्मेरस्य कदाचन ।
मृगया प्रथमं दृष्टिं पश्चान्निद्रा व्यलोभयत् ॥ १४८ ॥
राज्यमा संततेर्भावि कश्मीरेषु तवेति सः ।
स्वप्ने वाक्सुधया तत्र महादेव्याभ्यषिच्यत ॥ १४९ ॥
पश्चाग्न्यर्कमिते शाके नवाष्टाङ्कितवत्सरे ।
ततः सपरिवारः स कश्मीरानविशच्छनैः ॥ १५० ॥
सकुटुम्बं तमायान्तं वृत्तिदानेन भूपतिः ।
अनुजग्राह सोत्कर्षं चूतद्रुम इवालिनम् ॥ १५१ ॥
डुलुचाख्यः कर्मसेनचक्रवर्तिचमूपतिः ।
कश्मीरान्स तदैवागात्सिंहो मृगगुहामिव ॥ १५२ ॥
षष्टिग्रामसहस्रेषु स्वाम्यं दातुमिवात्र सः ।
तावत्संख्यसहस्राणि स्वसैन्ये सादिनोवहत् ॥ १५३ ॥
डुल्चं धनप्रयोगेण निर्विवर्तयिषुर्नृपः ।
सर्वेषामेव वर्णानां दुर्वर्णो दण्डमक्षिपत् ॥ १५४ ॥
प्राणाहुत्या प्रभोः कोपे तत्प्रतिग्रहसांहसः ।
प्रायस्था ब्राह्मणाः प्रायश्चित्तीयांचक्रुरक्रमम् ॥ १५५ ॥
दण्डदुःखेन विप्रैर्यैः शापो दत्तो महीभुजः ।
भविष्यन्वंशविच्छेदो ध्रुवं तस्यैव तत्फलम् ॥ १५६ ॥
तस्मिन्नवसरे कालमान्याख्यैर्भौट्टपार्थिवैः ।
स्वदेशे वकतन्याख्यो गोत्रजस्यात्मजो हतः ।
सबन्धुर्गोत्रजो व्याजाद्वकतन्यो व्यहन्यत ॥ १५७ ॥
मान्योसामान्यधीः कालमातृवंशदवानलः ।
अवाशिष्यत तत्पुत्रो दैवादेकः स रिञ्चनः ॥ १५८ ॥

व्यालट्टक्कमुखैर्मन्त्रसूत्रसंयोजितैरथ ।
बद्ध्वा संहतिकन्थां स ताञ्जडाञ्जेतुमिष्टवान् ॥ १५९ ॥
निपास्यमानकोशं मा भृत्यत्वे वृणुतेति सः ।
तान्प्रत्यश्रावयद्दूतमुखेन स्वाततायिनः ॥ १६० ॥
नृसिंहः स नदीतीरे सिकतास्थगितायुधः ।
तान्प्रत्यैक्षत रक्तस्य न तु कोशस्य पीतये ॥ १६१ ॥
व्यालाद्यैरागतास्तत्र कालमान्या निरायुधाः ।
सिकतान्तर्निविष्टस्य परश्वग्रैस्तृणीकृताः ॥ १६२ ॥
प्रक्षाल्य वैरिरक्तेन पितृद्रोहरजोमलम् ।
शेषारिभयतो यातः कश्मीरान्बान्धवैः सह ॥ १६३ ॥
पूर्वस्य रामचन्द्रस्य रुचिहान्यै धरार्यमा ।
नीलाशाभ्रे रिञ्चराहोरुदयं सोथ सोढवान् ॥ १६४ ॥
हेतिभिस्तापयत्याशा डुलुचे कृष्णवर्त्मनि ।
काश्मीरकैर्जनैः सर्वैः शलभत्वमलभ्यत ॥ १६५ ॥
रुद्धयोर्डुल्चरिञ्चाभ्यां प्राच्युदीच्योर्बहुर्जनः ।
वसतेः पश्चिमामाशां प्राग्यमाशामथागमत् ॥ १६६ ॥
अधो डुल्चाम्बुपूराद्भीर्गिरौ रिञ्चनमारुतात् ।
छायाजुषां फलाढ्यानां पुंनागानामभूत्तदा ॥ १६७ ॥
पक्षिशावमिव स्थानच्युतं चिल्लोल्लसद्रया ।
बलश्री रैञ्चनी लोकं काश्मीरकमपाहरत् ॥ १६८ ॥
घनाम्बु प्राप्य भोट्टेभ्यः काश्मीरजनविक्रयात् ।
गर्जन्नाशाः प्यधात्सर्वास्तदा रिञ्चनवारिदः ॥ १६९ ॥
तुरुष्कताजिकम्लेच्छसैन्यच्छादितभूतलः ।
डुलुच्यो नगरं प्रापदथागस्त्य इवार्णवम् ॥ १७० ॥

मृगाः सिंहमिवोदग्रं गरुत्मन्तमिवाण्डजाः ।
तमापतन्तमालोक्य पलायन्त पुरौकसः ॥ १७१ ॥
बद्धाः पलायिनस्तेन मान्त्रिकेणैव पन्नगाः ।
केचित्पलायिता भीत्या प्रविष्टा गिरिगह्वरम् ॥ १७२ ॥
राजापि क्वापि संछन्नो भीत्या घूकवदास्त सः ।
इतरेषां तु लोकानां का कथा तत्र वासिनाम् ॥ १७३ ॥
विप्रशापो नरेन्द्राणां वृथा जातो न जातुचित् ।
सलक्ष्मा राजयक्ष्मा हि नाहत्वा विनिवर्त्तते ॥ १७४ ॥
गूढार्थं दापिताः पूर्वं गाढया बन्धपीडया ।
विक्रीता वाजिभिः पश्चात्तुरुष्कैर्हस्तगा जनाः ॥ १७५ ॥
विद्धाः केचित्परे बद्धा विराद्धास्तेन केचन ।
प्लोषं केचित्परे शोषं दोषं यान्त्यनला द्रुमाः ॥ १७६ ॥
जत्रुवेधेन बद्धानामेकया चर्मवध्रया ।
तेषां दुरापमप्यासीदन्योन्यमुखदर्शनम् ॥ १७७ ॥
घासेन्धनादिसंभारढौकनाय क्षणं क्षणम् ।
बद्धा म्लेच्छैरमुच्यन्त बिडालैरिव मूषकाः ॥ १७८ ॥
येषामन्ने जुगुप्साभूद्बिडालस्पर्शदोषतः ।
म्लेच्छोच्छिष्टं गवांश्चास्थि निबद्धैर्भक्षितं क्षुधा ॥ १७९ ॥
वैतस्तमपि ये वारि न पपुः पङ्कसंकुलम् ।
बद्धैर्मरुषु तैर्नीतैर्मूत्रं पीतं भृशं तृषा ॥ १८० ॥
क्व म्लेच्छान्नं क्व वंशो नो दुःसहा क्षुत्कृतेन किम् ।
निद्रा नाद्यापि मार्गेण तेन्तरेवमचिन्तयन् ॥ १८१ ॥
गच्छतां तिष्ठतां तेषामश्नतां जल्पतामपि ।
सोभून्नैव क्षणो यत्र न ते कार्यमसाधयन् ॥ १८२ ॥

म्लेच्छैः केचित्खशैः केचिद्दरद्भिरपरे तथा।
भोट्टैः केचित्तुरुष्कैश्च केचिद्बन्दीकृता जनाः ॥ १८३ ॥
अन्नं गृहे वने वित्तं मार्गे बन्धून्विहाय च।
पलायामासुरपरे तुरुष्कभयसंभ्रमात् ॥ १८४ ॥
करुणागौरवघृणा द्रुतं गन्तुमशक्तिषु।
बालवृद्धाबलास्वेते त्यक्तवन्तः पलायिनः ॥ १८५ ॥
न भुक्तं क्षुधितैर्मार्गे न पीतं तृषितैरपि। *
किमन्यद्भयसंभ्रान्तैः पश्चात्तैर्नापि वीक्षितम् ॥ १८६ ॥
क्षुधा केचित्तृषा केचिद्भिया केचित्परे न्हिया।
भयाद्विलदरीष्वेव प्रविश्यान्तर्विपेदिरे ॥ १८७ ॥
बिलप्रविष्टांस्ताञ्छ्रुत्वा ततो निष्कासनेच्छवः।
निष्कारुण्यास्तुरुष्कास्ते धूमं बिलमुखे ददुः ॥ १८८ ॥
धूमेनान्तर्विपन्नानां नराणामस्थिराशयः।
दृश्यन्तेद्यापि धूमोत्थं मालिन्यं च गुहामुखे ॥ १८९ ॥
राजापचारमकरोत्प्रजासु फलितस्तु सः।
नारीणां चपला दृष्टिर्दन्तैर्गण्डस्तु खण्ड्यते ॥ १९० ॥
नाशिताशेषदेशोथ हिमपातभयाकुलः।
डुल्चः कश्मीरतस्तारबलमार्गेण निर्ययौ ॥ १९१ ॥
ओताविव गते तस्मिन्काश्मीरा मूषका इव।
मन्दं मन्दं विनिर्याता मृतशेषा बिलान्तरात् ॥ १९२ ॥
नालब्ध पितरं पुत्रः पिता तं च न कंचन।
भ्रातॄंश्च भ्रातरो डुल्चराक्षसोपप्लवात्यये ॥ १९३ ॥
मितलोकाखिलक्षेत्रा निर्भोज्या दर्भनिर्भरा।
सर्गारम्भ इव प्रायस्तदा कश्मीरभूरभूत् ॥ १९४ ॥

सामर्थ्यान्यग्रहीड्डुल्चो रिञ्चनः प्राभवत्ततः ।
विश्वमन्धयति ध्वान्तं सुखभाजोभिसारिकाः ॥ १९५ ॥
डुल्चराहुविनिर्मुक्तं राजानं तुङ्गिमस्पृशा ।
अरुरुत्सत्स शृङ्गेण रिञ्चनास्ताचलस्ततः ॥ १९६ ॥
दृष्ट्वा गगनगिर्यग्रे भास्वन्तं रिञ्चनं स्थितम् ।
अशङ्क्यत न कै राज्ञः प्रत्यासन्नोस्तसंस्तवः ॥ १९७ ॥
रिञ्चनश्येनराजस्य जिहीर्षोर्नगरामिषम् ।
कुलचन्द्रो रामचन्द्रो विघ्नं चक्रे पदे पदे ॥ १९८ ॥
भोट्टाँल्लहरकोट्टान्तः पट्टविक्रयकैतवात् ।
प्रत्यहं वञ्चनोद्योगी रिञ्चनोथ विसृष्टवान् ॥ १९९ ॥
तथैव लहरस्यान्तर्भोट्टलोके प्रवेशिते ।
अपिप्यद्रामचन्द्रास्रमधु शस्त्राणि रिञ्चनः ॥ २०० ॥
रामचन्द्रकुलोद्यानकलहवल्लीं स रिञ्चनः ।
वक्षःस्थले महाबाहुः कोटादेवीमरोपयत् ॥ २०१ ॥
श्रीरिञ्चनभयाद्राजा नगरं त्यक्तवांस्ततः ।
विप्रशापाग्निदग्धानां कुतः स्यादुदयाङ्कुरः ॥ २०२ ॥
प्रमण्डलगुहां राजजम्बुर्भीतोविशत्ततः ।
पापस्य तादृशो मृत्युः संमुखस्य रणे कथम् ॥ २०३ ॥
वैरिधाराधरश्चित्रं रणे राजास्रवर्षणैः ।
दण्डदानां द्विजातीनां चक्रे नेत्रेष्ववग्रहम् ॥ २०४ ॥
पञ्चाहोनांश्चतुर्मासान्वर्षांश्चैकोनविंशतिम् ।
स राजराक्षसो रक्षाव्याजात्क्षोणीमभक्षयत् ॥ २०५ ॥
श्रीरिञ्चनसुरत्राणो श्रान्तां यवनविप्लवैः ।
अनयद्विश्रमं तुङ्गे भुजवातायने महीम् ॥ २०६ ॥

पूर्वदृष्टमिवाशेषं तिमिरापगमे पुमान् ।
कश्मीरमण्डलः पूर्वराजसौख्यं तदैक्षत ॥ २०७ ॥
दीपैरिव प्रतिस्थानं यैर्लेवन्यैः स्थिरैः स्थितम् ।
अकम्पन्त प्रभातस्य ते राज्ञो बलवायुना ॥ २०८ ॥
मन्त्रसूच्या कृते भेदे बाणसूत्रे प्रवेशिनि ।
अभूल्लवन्यकन्थायाश्चित्रं विश्लथता तदा ॥ २०९ ॥
वने कण्टकिनीवाङ्गनग्नो यत्राकुलोभवत् ।
तत्रैव व्योम्नि पत्रीव देशे समचरन्नृपः ॥ २१० ॥
तस्य दाक्षिण्यदक्षस्य प्रजानां हितहेतुना ।
पुत्रे मन्त्रिणि मित्रे वा दुष्टे नालक्ष्यत क्षमा ॥ २११ ॥
छेदं यच्छन्नतुच्छानां वैरिणामुच्छलच्छ्रियाम् ।
आच्छोदनमगच्छत्स च्छत्रशाली कदाचन ॥ २१२ ॥
टुक्कभ्राता तिमिर्नाम मार्गे संतापखेदतः ।
गोपाल्याः कुत्रचिद्ग्रामे क्षीरं निष्पीतवान्हठात् ॥ २१३ ॥
राज्ञा विज्ञापितेनाथ सद्यो गोपालयोषिता ।
अनुयुक्तस्तिमिर्भीत्या व्यधात्सर्वस्य निन्हवम् ॥ २१४ ॥
असत्ये भाविता गोपी यदा धैर्यान्न सास्खलत् ।
पानाशयं तिमेरेव स सत्यैक्षी व्यदारयत् ॥ २१५ ॥
तस्य पानाशयाद्दीर्णान्निर्यान्त्या क्षीरधारया ।
राज्ञः कीर्तिर्मुखश्रीश्च गोप्याः प्राप प्रसन्नताम् ॥ २१६ ॥
वानवाले निवसतोरसुवातां कयोश्चन ।
अश्वे किशोरकौ तुल्यौ कस्मिन्नपि वनान्तरे ॥ २१७ ॥
सिंहसंज्ञापितापत्या तयोरन्यतमा वने ।
अश्वसादृश्यवात्सल्यादपुपुत्रीयिषत्परम् ॥ २१८ ॥

मदीयोयं मदीयोयमित्यसंजातनिश्चयौ ।
वडवाधिपती क्षोभाद्राजान्तिकमगच्छताम् ॥ २१९ ॥
स विवादं तयोः श्रुत्वा स्वान्तिकं स्वीयमानुषैः ।
वडवे च किशोरं च राजाभ्यानाययत्ततः ॥ २२० ॥
तस्मिन्किशोरके बाल्याद्दूरं धावति लीलया ।
माता धात्री च नितरामस्निह्यच्चाप्यहेषयत् ॥ २२१ ॥
सभ्येष्वनेलमूकेषु वादिनोः क्षोभसज्जयोः ।
अश्वे नावानयन्मध्येवितस्तं सकिशोरके ॥ २२२ ॥
बालाश्वं पातितं नद्यां नावो राज्ञा महाधिया ।
हठादन्वपतन्माता परा परमहेषयत् ॥ २२३ ॥
संदिग्धव्यवहाराणामेवं निश्चयकर्तरि ।
तस्मिन्राज्ञि जनोमंस्त कृतं युगमिवागतम् ॥ २२४ ॥
श्रीदेवस्वामिनं शैवीं दीक्षां याचन्नराधिपः ।
नान्वग्राहि स भोट्टत्वात्तेनापात्रत्वशङ्कया ॥ २२५ ॥
अनुजस्तनुजो बन्धुर्मन्त्री सहचरः सखा ।
व्यालराजो नृपस्याभूत्सत्यैकव्रतनिष्ठया ॥ २२६ ॥
जहौ व्यालः कृतं राज्ञा न स व्यालकृतं पुनः ।
मनो हि कायिकं हन्ति तत्कृतं न वपुः पुनः ॥ २२७ ॥
कलानिधौ रसमये व्याले भूलोकभास्वतः ।
मूर्च्छिता रुचिरच्छैत्सीदच्छेद्यं जगतां तमः ॥ २२८ ॥
प्रवेष्टुकामं कश्मीरान्निवर्त्तयितुमञ्जसा ।
डुल्चं धनप्रयोगेण यो विसृष्टो महीभुजा ॥ २२९ ॥
अवमन्त्य प्रविष्टेथ डुलुच्ये भयतो गतः ।
गान्धारदेशमुद्यानदेवो लब्धान्तरस्ततः ॥ २३० ॥

श्रीमानुद्यानदेवोथ रन्ध्रप्रहरणोद्यतः ।
समादिक्षत टुक्कादीनुपगान्धारमाश्रयन् ॥ २३१ ॥
जीवतामेव गन्तव्यं जाने तन्नरकान्तरम् ।
यत्सेव्यते विशेषज्ञः स्वामी संमानलिप्सया ॥ २३२ ॥
भुङ्क्ते व्यालः श्रियं प्राणपणैर्युष्माभिरर्जिताम् ।
करौ साधयतो यत्नाद्रसना भोगभागिनी ॥ २३३ ॥
ईश्वरो भूतिलिप्ताङ्गो व्यालं हारीचिकीर्षति ।
अनास्थां तु सुवर्णेषु युष्मासु विदधाति सः ॥ २३४ ॥
क्षीरमात्रैकपायित्वं निमित्तीकृत्य भूपतिः ।
युष्मच्छौर्याभिशङ्कित्वात्तिमिं तिमिमिवावधीत् ॥ २३५ ॥
एवं संदेशनिर्भिन्नाष्टुक्काद्याः शुक्ललङ्किताः ।
विंशप्रस्थे कदाचित्ते प्रजन्हुरथ भूभुजम् ॥ २३६ ॥
तत्खड्गधारासंपातैर्व्यालस्तेषां हृदन्तरात् ।
स्वैश्वर्यतापमनुदद्राजा मूर्च्छेतु केवलम् ॥ २३७ ॥
तेथ लब्धजयंमन्यास्तद्वधापोढमन्यवः ।
नगरान्तर्ययू राज्यग्रहणार्थमहंकृताः ॥ २३८ ॥
क्षणं मृत इव स्थित्वा भूयो घातभयान्नृपः ।
दूरं गतान्रिपून्दृष्ट्वा राज्ये राजोदतिष्ठत ॥ २३९ ॥
आरुक्षन्राजधानीं ते यावत्तावन्नराधिपम् ।
अपेतमूर्च्छमायान्तमद्राक्षुः क्षुद्रबुद्धयः ॥ २४० ॥
त्वया किं न त्वया किं न हतो राजेत्यनीतयः ।
परस्परविवादात्ते तत्कालं चुक्षुभुर्जडाः ॥ २४१ ॥
सान्योन्यमन्यवोन्योन्यलोठनाद्राजसद्मनः ।
कर्तव्यं मरणं राज्ञो व्यधुः स्वस्य स्वयं जडाः ॥ २४२ ॥

शेषान्राजाथ दुःशीलाङ्कुलारोपेण केवलम् ।
उच्चैस्तामानयन्मानी सर्वथाधोगतिं ततः ॥ २४३ ॥

सगर्भां वैरिभोट्टस्त्री रोषवान्स व्यदीदरत् ।
असिभिर्भूपतिर्गर्भशालिशिम्बीर्नखैरिव ॥ २४४ ॥

तद्द्रोहरोषजा पीडा राज्ञस्तत्कुलमारणात् ।
चित्ते शान्तिमगात्खड्गघातोत्था न तु मूर्धनि ॥ २४५ ॥

दुःस्वप्नमिव तद्दृष्ट्वा टुकादिचरितं क्षणम् ।
प्रबुद्धेव पुनः प्रापदभयेन सुखं मही ॥ २४६ ॥

अद्रोहमध्यगे राजा शाहमेरे प्रसन्नधीः ।
सकोटामातृकं वृद्ध्यै स्वपुत्रं हैदरं ददौ ॥ २४७ ॥

वर्धितः कोटया देव्या प्रावृषीव महीरुहः ।
सच्छायत्वं स्फुरत्पत्रः शहमेरो न्यषेवत ॥ २४८ ॥

परिखाछलतोकीर्त्या स्वपराजयजातया ।
परितो वलितं राजा स्वनामाङ्कं पुरं व्यधात् ॥ २४९ ॥

पौषदुर्दिनमार्तण्डसंनिभो धरणीपतिः ।
मासांश्च कतिचिद्भूयः प्रकाशमकरोद्भुवः ॥ २५० ॥

हेमन्ते शैत्यपारुष्यदोषेण धरणीपतेः ।
मरुत्कोपेन नैविड्यं शिरःपीडाग्रहीत्तराम् ॥ २५१ ॥

सदानेकोत्तमाङ्गानां पीडाहरगुणश्रियः ।
भूपतेरुत्तमाङ्गस्य पीडा कष्टमवर्धत ॥ २५२ ॥

एकादश्यां ततः पौषे नवनन्दाङ्कवत्सरे ।
निरस्ता मृत्युवैद्येन भूपतेर्मूर्धवेदना ॥ २५३ ॥

एकादशदिनैरूनौ मासौ त्रीन्वत्सरानपि ।
क्षमा संरक्ष्य स स्वर्गं ययौ रिञ्चनभूपतिः ॥ २५४ ॥

पुत्रं हैदरनामानं बाल्यादनभिषिक्तवान्।
अतथाविधशक्तित्वाद्राज्यं स्वेनाप्यसंवहन् ॥ २५५ ॥
लवन्यैः कुलनाथत्वाद्रिञ्चने प्रतिघादपि।
अव्याहतप्रवेशाशो मतिमाञ्शाहमेरकः ॥ २५६ ॥
समं श्रीकोटया देव्या मूर्तयेव जयश्रिया।
तदोदयनदेवं तं कश्मीरक्ष्मामलम्भयत् ॥ २५७ ॥
राज्यलक्ष्मीमहादोला गुणबद्धा गरीयसी।
रिञ्चनोच्चैःपदं गत्वा राजाधःपदमाश्रयत् ॥ २५८ ॥
राजा शह्मेरपुत्रौ तौ ज्यंशराह्लेशरौ तदा।
क्रमराज्यादिदेशानां स्वाम्यदानादरञ्जयत् ॥ २५९ ॥
धीरिवासीत्तदा कोटा देवी सर्वाधिकारिणी।
राजा देह इवात्यर्थं तदादिष्टं समाचरत् ॥ २६० ॥
तेजसा पिहितान्यासन्यानि रिञ्चनभास्वतः।
लवन्यज्योतिषां राजप्रदोषेभूत्तदोदयः ॥ २६१ ॥
यस्याक्रम्यत सौम्यस्य गृहिण्या कोटया गृहम्।
विषयाक्रमणं तस्य लवन्यैः किं नु शोच्यते ॥ २६२ ॥
लवन्यदेशचण्डालगृहस्पर्शविवर्जकः।
स श्रोत्रिय इवानैषीत्कालं स्नानतपोजपैः ॥ २६३ ॥
आस्तिकत्वं कियत्तस्य वर्ण्यते वर्णधारिणः।
क्रिमिमर्दभयाद्घण्टां योबध्नाद्वाजिनो गले ॥ २६४ ॥
तावद्द्रविणतामेव कोशालंकरणं दधत्।
कण्ठभूषां समौलिं स चक्रिणेदित काञ्चनीम् ॥ २६५ ॥
अथ मुग्धपुरस्वामिदत्तानीकिन्यहंकृतः।
कश्मीरानचलोविक्षद्दलाडुल्च इवापरः ॥ २६६ ॥

स्वपक्षैराक्षिपत्याशाबलेनाक्रम्य मेदिनीम् ।
नाचले गोत्रभित्त्वं स कर्तुमैष्ट महीवृषा ॥ २६७ ॥
प्राप्ते भीमानकं तस्मिन्ससैन्ये दैन्यमाश्रितः ।
भौट्टदेशमगात्तूर्णमुर्वीपरिवृढो भयात् ॥ २६८ ॥
निवर्तय चमूमन्यां किं मिथ्यादेशपीडया ।
अराजकास्त्वया पाल्याः कश्मीराः कुलनाथवत् ॥ २६९ ॥
इति श्रीकोटयामात्यैः प्रेरितैर्लेखधारिभिः ।
आसारसैन्यमचलः प्रत्यमुञ्चद्विमोहितः ॥ २७० ॥
प्रतिमुक्तनिजासारः सारहीनोचलः स तैः ।
मार्गोत्सवच्छलात्कंचित्कालं मार्गे विलम्बितः ॥ २७१ ॥
तावच्छ्रीकोटया देव्या तदा पालयितुं प्रजाः ।
भोट्टः खे रिञ्चनो नाम राजभावे न्ययुज्यत ॥ २७२ ॥
प्रमीतभर्तृकोत्पन्नमृतापत्येव सा तदा ।
अदूयत निजैः सर्वैश्चिरस्याचलशेमुषी ॥ २७३ ॥
तुषारलिङ्गपूजाभिः कृतार्थीकृत्य वासरान् ।
भोट्टदेशान्विजं देशमगच्छद्भीतभीर्नृपः ॥ २७४ ॥
उदयाद्रिभुवा पूर्णः शशीवाथ स कोटया ।
खे रिञ्चनतमोनाशी शिरसाधारि सादरम् ॥ २७५ ॥
यं कोटासूत जट्टाख्यं भिक्षणाख्यस्य मन्त्रिणः
वर्धनायात्मजं राजा स तं मृत्युमिवादित ॥ २७६ ॥
शहमेरः स वीरोथ परिपालितरैञ्चनिः ।
अचक्षुष्यः क्षमाभर्तुः पुत्रप्रेमभरादभूत् ॥ २७७ ॥
देव्यास्तु समदृष्टित्वात्पुत्रयोरुभयोरपि ।
राज्ञो द्वेष्योपि शह्मेरो न भयेन स पस्पृशे ॥ २७८ ॥

अचलोपप्लवातङ्के भयाल्लोकैः समाश्रितः ।
शह्मेरः स च राजानं न तृणायाप्यजीगणत् ॥ २७९ ॥
शह्मेरो हैदरश्येनं दर्शयित्वा मुहुर्मुहुः ।
अभाययत्तरां राजपक्षिणं तं दिवानिशम् ॥ २८० ॥
रक्षंस्तटस्थानुद्वेगरहितो जलवर्जितः ।
अल्लेश्वराम्बुपूरः स प्रजाश्चित्रमतापयत् ॥ २८१ ॥
शिरःशाटकहिन्दाख्यौ समभूषयतामुभौ ।
चन्द्रार्काविव तस्याशां शूरौ पौत्रौ गुणोच्छ्रितौ ॥ २८२ ॥
द्वारैश्वर्यात्स्फुरद्दर्पो राजाज्ञालङ्घनोद्यतः ।
शह्मेरः स विपद्द्वारमभूद्भूपतिसेविनाम् ॥ २८३ ॥
सोल्लेश्वरसुतां दत्त्वा लुस्तस्य तदधीशितुः ।
श्रीशंकरपुरं जित्वा राज्ञः शङ्कामवर्धयत् ॥ २८४ ॥
वशोतेलाकशूरोस्य भाङ्गिलैश्वर्यभाजनम् ।
ज्यंशरस्य सुतां हस्तेकृत्य कृत्यविदोभवत् ॥ २८५ ॥
बहुरूपजयी लक्ष्मीनिधिरच्युततापदम् ।
शमालां स नृसिंहोथ दैत्यश्रियमिवाद्रुनोत् ॥ २८६ ॥
मकरालयगाम्भीर्यैः करालम्बो जयश्रियः ।
कराले स करालौजाः करमालम्बयज्जनान् ॥ २८७ ॥
असिस्मरत्स्मेरयशा दह्यमानमितस्ततः ।
राज्ञः कलशदेवस्य विजयेशपुरं ततः ॥ २८८ ॥
स्थित्यै प्रकल्प्य चक्रस्य स्वस्य चक्रधराचलम् ।
शह्मेरोचलकार्याणि जनस्य समदर्शयत् ॥ २८९ ॥
कम्पनेश्वरलक्ष्मस्य लक्ष्मीमिव सुतां दधत् ।
अल्लेशो लब्धवाञ् शुद्धं स्वदायमिव सद्यशः ॥ २९० ॥

नारिङ्गरङ्गशैलूषं कोटराजमथाग्रहीत् ।
शह्मेरस्तनया रत्नगुहरोन्मालिकेन सः ॥ २९१ ॥

साम्नः केचित्परे भेदाद्दानादन्ये परे भयात् ।
मान्यतामनयन्धन्या लवन्यास्तस्य शासनम् ॥ २९२ ॥

लवन्यलोकस्तत्पुत्रीर्माला इव बभार ताः ।
नाजानाद्भुजगीर्घोरविषाः प्राणहरीस्तु ताः ॥ २९३ ॥

राजबीजिविधेयत्वान्मन्त्राद्विक्रमतश्च कः ।
शहमेरहरेर्नाभूल्लवन्यद्विरदो वशे ॥ २९४ ॥

शहमेराम्बुपूरेण सर्वतः क्रान्तमण्डलः ।
भूपतिस्तुङ्गमृद्राशिस्थायिवृक्षतुलामगात् ॥ २९५ ॥

पुरमात्राधिपत्योत्थलज्जयेव महीपतेः ।
जीवितं दूरमगमच्छुद्धेन यशसा समम् ॥ २९६ ॥

शिवरात्रित्रयोदश्यां वर्षे राजा चतुर्दशे ।
क्षमावान्स क्षमामौज्झीच्छह्मेरस्पर्शदूषिताम् ॥ २९७ ॥

अब्दान्पञ्चदश द्वौ च मासौ द्वौ वासरावपि ।
कश्मीरकाश्यपीभोगमकार्षीत्स महीपतिः ॥ २९८ ॥

अथ शह्मेरभीत्या श्रीकोटा चत्वार्यहानि सा ।
गूढेङ्गितानयद्गुप्तिं भूपालप्रमयादिकम् ॥ २९९ ॥

शम्हेरो मत्सुतद्वारा साम्राज्यं स्वीकरोतु मा ।
इति ज्यायांसमुत्सृज्य बालत्वाच्च परं सुतम् ॥ ३०० ॥

पुत्रस्नेहेन वृद्धत्वदोषेण च विमोहिता ।
अवरुद्धमनिच्छन्ती श्रीकोटा महिषी ततः ॥ ३०१ ॥

स्त्रीभावाद्बन्धुभावाच्च लवन्यैरुपबृंहिता ।
असान्त्वयत्स्वयं भूमिं विधवां स्वां सखीमिव ॥ ३०२ ॥

सा राज्ञी शुक्रप्रतिपच्छीतभीता भवन्त्यथ ।
राजानं गुरुभिः स्वीयैश्चरमेष्टिमवापिपत् ॥ ३०३ ॥
पूर्वोपकारस्मरणाच्छाहमेराद्योखिलाः ।
तां प्राणमन्नमात्याः स्वाश्चान्द्रीमिव नवां कलाम् ॥ ३०४ ॥
शमयन्त्या रजः सर्वं तापापहृतिदक्षया ।
तया निदाघवृष्ट्येव लताः संवर्धिताः प्रजाः ॥ ३०५ ॥
शह्मेरात्स्वोदयभ्रंशशङ्किनी भट्टभिक्षणम् ।
तदुद्रेकविनाशार्थं मानं देवी निनाय सा ॥ ३०६ ॥
दुस्तरेषु महाभीतिजलपूरेषु सा ततः ।
तत्प्रज्ञानावमारुह्य कार्ये पारं परं ययौ ॥ ३०७॥
अन्तः सेहे न शह्मेरस्तद्दत्तं भिक्षणोदयम् ।
मानवन्तः सहन्ते हि च्छायासाम्यं कथंचन ॥ ३०८ ॥
वत्स्यतो धूमतापादि लक्षणं जातवेदसः ।
धीमतोस्य न किंचित्तु रोषलिङ्गमलक्ष्यत ॥ ३०९ ॥
छलाभिनीतरोगेण शहमेरेण धीमता ।
प्रत्यासन्नविनाशत्वमात्मनः समकथ्यत ॥ ३१० ॥
तस्यार्थप्रत्यवेक्षार्थमवतारादिभिः सह ।
व्यसर्जि कोट्या देव्या स श्रीमान्भट्टभिक्षणः ॥ ३११ ॥
स्वेदः कुपितपित्तस्य हितो नैवेतिवादिभिः ।
संप्रवेशान्न्यषिध्यन्त द्वाःस्थैस्तदनुयायिनः ॥ ३१२ ॥
तौ भिक्षणावतारौ द्वौ तत्समीपमविक्षताम् ।
सांकस्यादिव तत्प्राणरक्षिण्यो देवता न तु ॥ ३१३ ॥
अनुयुक्तामयोदन्तः स कालेथ तयोर्निजैः ।
गात्रे न्यखानयच्छस्त्रीराधीन्स्वस्योदखानयत् ॥ ३१४ ॥

शिराभिः शोणितं बाष्पं दृशाङ्गैः सकलैरसून् ।
तौ द्वावमुञ्चतां सद्यस्तद्वेषं स च चेतसा ॥ ३१५ ॥
रक्तार्द्रव्रणदीपाङ्कपूर्णपात्राभतच्छिरः ।
रोगमोक्षोचितं स्नानं स तयोः शोणितैर्व्यधात् ॥ ३१६ ॥
भवन्नन्दनसंरक्षापरावेतावुभावपि ।
तयोरन्यतमं दूरीकृत्यान्यमहरद्विधिः ॥ ३१७ ॥
प्रमीतनिजशोकोत्थतापशान्त्यै जडः परम् ।
परप्राणाग्रोषवह्नौ प्रदीप्ते जुहुयादिति ॥ ३१८ ॥
शह्मेरं रोद्धुकामां तां समर्थामपि दुर्धियः ।
कोटादेवीममात्याः स्वम नेयबुद्धि न्यवारयन् ॥ ३१९ ॥
केदारमिव कुल्या सा पानीयेन महर्द्धिना ।
लोकमाप्याययामास साम्राज्योत्पलचन्द्रिका ॥ ३२० ॥
आज्ञाव्यतिक्रमाज्जातु कम्पनाधिपतिं प्रति ।
युयुत्सुरकरोद्यात्राममित्राब्जशशिप्रभा ॥ ३२१ ॥
संकटात्कम्पनेशस्तां कुलायादिव पक्षिणीम् ।
जीवग्राहं गृहीत्वाथ कारापञ्जरमानयत् ॥ ३२२ ॥
मन्त्री कुमारभट्टाख्यस्तस्याः सचिवपुंगवः ।
तन्मोक्षसिद्धयेकार्षीत्तदामात्यैश्छलात्कलिम् ॥ ३२३ ॥
राज्ञ्याः पुंभावमात्रेण भिन्नमाकारसंनिभम् ।
कमण्डलुकरं कंचित्सहादाय मनोरमम् ॥ ३२४ ॥
गत्वा स कम्पनाधीशं धीप्रशंसाविमण्डितः ।
सौष्ठवौदार्यसंपत्तिशालिनीं वाचमभ्यधात् ॥ ३२५ ॥
स्वशिरो मलिनीकृत्य जीवतां योषिदाज्ञया ।
पुरुषत्वं त्वया स्वामिन्कृतार्थीक्रियतेद्य नः ॥ ३२६ ॥

स्त्रीत्वात्कार चित्ताया दानभोगोत्सवद्विषः ।
राज्ञ्या बन्धुषु सैन्यान्तर्द्रविणं वर्तते महत् ॥ ३२७ ॥
गत्वा त्वदाज्ञया कारां तस्यास्तर्जनसान्त्वनैः ।
धनं जनस्त्वदीयोयं स्वामिसात्कर्तुमिच्छति ॥ ३२८ ॥
साध्यतां भवतास्मांश्च जानीयादुपकारिणः ।
इत्युक्त्वा कम्पनाधीशो व्यसृजत्तत्र तं ततः ॥ ३२९ ॥
कारायां निर्गमिष्यन्तीं देवीं कोटामिवेक्षितुम् ।
तत्कालमेव संध्यागाज्जगद्रञ्जनकोविदा ॥ ३३० ॥
संध्यावन्दनयोग्याम्बुवाहिना बटुना सह ।
असौ कारामविक्षच्च राज्ञ्याश्च निरगुः शुचः ॥ ३३१ ॥
राज्ञीवेषभृतं तत्र स्थापयित्वा बटुं स तम् ।
तद्वेषधारिणीं कोटामन्वादाय विनिर्ययौ ॥ ३३२ ॥
रक्षितारोपि नाजानंस्तद्यावंत्तावदेव सा ।
कम्पनाधिपतिं चक्रे स्वचक्रेभशकृत्करिम् ॥ ३३३ ॥
सान्वशेत कुमारेण मोचिता भट्टभिक्षणम् ।
एकदन्तहतारेः किं नान्येनेभमुखाद्भयम् ॥ ३३४ ॥
तयानपोषितोप्यौज्झि शह्मेरो नैव शङ्कया ।
कृतवैराः समर्थेन प्राज्ञा नैव ह्युदासते ॥ ३३५ ॥
न प्रासीदन्न चाकुप्यत्तस्मिन्सा बलशालिनि ।
घृणा प्रमादसहिता विनाशप्रथमाङ्कुरः ॥ ३३६ ॥
देव्या वासं विमुञ्चन्त्यास्तस्या धनरसाश्रयम् ।
शह्मेरे विषवल्लीव द्रोहधीरभ्यवर्धत ॥ ३३७ ॥
वर्धनोन्यतरस्याभूत्पक्षोन्यस्य क्षयावहः ।
कोटाशह्मेरयोरस्ति क्षितिमारुतयोरिव ॥ ३३८ ॥

जयापीडपुरं यान्त्यां तस्यां कार्यानुरोधतः ।
शहमेरो बली जातु नगरं स्वीचकार सः ॥ ३३९ ॥
तस्मिल्लवन्यलोकेन गृहीताज्ञे बलीयसि ।
राज्ञी समवृणोत्कोट्टद्वारं सह जयाश्रिया ॥ ३४० ॥
निवृत्तनेत्रचारस्य चपलत्वैककारणम् ।
आखुर्बिलगतो वीतोः शहमेरस्य साभवत् ॥ ३४१ ॥
निरुद्धे बलिना कोट्टगुहाग्रे शौर्यशालिना ।
नृसिंहेनाभजत्कोटा शृगालीव मुहुर्भयम् ॥ ३४२ ॥
तुङ्गत्वं मङ्गलासङ्गमभङ्गुरतरश्रियम् ।
राज्याङ्गैश्च निजाङ्गैश्च दत्तै राज्ञी करोतु मे ॥ ३४३ ॥
अध्यशेततरां राज्ञी मत्पुत्राणां न केवलम् ।
प्राणानामपि चैश्वर्यं श्लाघ्या सुखपरंपरा ॥ ३४४ ॥
सिंहासने मया साकं श्रिया सार्धं ममोरसि ।
क्षमया सह चित्ते मे राज्ञी निविशतां स्वयम् ॥ ३४५ ॥
तामेवमादिसंदेशैर्मुग्धां संमोह्य यत्नतः ।
हस्ते चकार कोट्टक्ष्मां कोटादेवीं च बुद्धिमान् ॥ ३४६ ॥
एकस्मिञ्छयने रात्रिमतिवाह्य तया समम् ।
स प्रातरुत्थितो जातु तीक्ष्णैर्देवीमरोधयत् ॥ ३४७ ॥
वर्षे पञ्चदशे शुक्लदशम्यां नभसस्ततः ।
तारेव नभसो राज्याद्राज्ञी भ्रंशमलब्ध सा ॥ ३४८ ॥
तत्पुत्रावपि तौ द्वौ स करणीयविचक्षणः ।
बबन्ध बन्धुसंकल्पकल्पवृक्षो भटाग्रणीः ॥ ३४९ ॥
स्वं रूपं चिदचिद्भिरेभिरभितो व्यञ्जन्स्वयं निर्मितै—
यस्योन्मीलति देशकालकलनानिष्कीलितं तन्महः ।

आत्मा वास्तु शिवोस्तु वास्त्वथ हरिः सोप्यात्मभूरस्तु वा
बुद्धो वास्तु जिनोस्तु वास्त्वथ परस्तमै नमः कुर्महे ॥३५०॥
भियं लवन्यलोकेषु कीर्तिं दिक्षु महीभुजे ।
लक्ष्मीं वक्षसि कोटां च कारायां स ततो व्यधात् ॥ ३५१ ॥
नीत्वावस्थान्तरं दौःस्थ्यशमात्कश्मीरमण्डलम् ।
श्रीशंसदीन इत्याख्यामन्यां स्वस्य व्यधान्नृपः ॥ ३५२ ॥
राजा सतीसरःक्षोणिशुक्तिमुक्तामणिस्ततः ।
अर्थचिन्तामणिर्वैरिरत्नवज्रमणिर्बभौ ॥ ३५३ ॥
महावने भुजे तस्य काष्ठोद्दीपनशालिनः ।
मौर्वीकिणः प्रतापाग्नेरधूमायत संततम् ॥ ३५४ ॥
अहरन्मन्त्रिणां राजा संशयं न तु तस्य ते ।
भिनत्त्यन्यान्मणीन्वज्रो नान्यरत्नानि तं पुनः ॥ ३५५ ॥
राज्याधिकारानखिलान्स्त्रीभावाद्दुःसहात्स्वयम् ।
येषु विश्वासपात्रेषु श्रीकोटा स्वयमार्पिपत् ॥ ३५६ ॥
तेजोमहिम्नेव रविस्तमांसीव गुहान्तरात् ।
काष्ठवाटान्नृपो राजस्थानीयात्कष्टवाटगात् ।
भयात्ततोपि विद्राव्य श्लाघनीययशा बभौ ॥ ३५७ ॥
यत्र संध्यातपस्येव लवन्यैस्तिमिरैरिव ।
अरोधि रुचिसंचारः स्वामिनो बलशालिभिः ।
कश्मीरमण्डलं चण्डशौर्यदण्डितविद्विषा ।
क्रमागतमिवाशेषं क्षणात्तेन वशीकृतम् ॥ ३५८ ॥
हृत्वेव हृदयात्कम्पं संपदापि तदा स च ।
वामेतरेण लोकस्य बहुना नयनेन च ॥ ३५९ ॥
चिरं धुरं परिन्यस्य पुत्रयोः स्वादनूनयोः ।
नयोच्छ्रितयशा राज्यं सुखं भुङ्क्ते स्म भूपतिः ॥ ३६० ॥

स पञ्च वासरान्भुक्त्वा त्रीनब्दान्मेदिनीपतिः ।
अष्टादशेऽब्दे राकायामाषाढ्यां स व्यपद्यत ॥ ३६१ ॥

अथ प्रथमसामन्तसंमताज्ञः स ज्यंशरः ।
सतीसरःक्षिते रक्षामक्षामश्रीरटङ्कयत् ॥ ३६२ ॥

राज्यतोरणसंवाहस्तम्भाभ्यां धरणीपतेः ।
अनुजो बलबुद्धिभ्यामगमच्छङ्कनीयताम् ॥ ३६३ ॥

नैव दानं न चादानं निग्रहं नाप्यनुग्रहम् ।
विहारं न न चाहारं राज्ञो न्यूनं स हि व्यधात् ॥ ३६४ ॥

विद्याप्रणयविज्ञातप्रज्ञातिशयशालिनः ।
युवराजान्महाराजो वयसैवाधिकोभवत् ॥ ३६५ ॥

प्राग्वद्विश्वाससंपत्तिमकुर्वति महीभुजि ।
युवराजो मनाक्चक्रे निकटस्थैर्विरक्तधीः ॥ ३६६ ॥

तद्वैमनस्यवृत्तान्तश्रवणच्छिद्रलाभतः ।
युवराजं ततो राजस्थानीयाः प्रापुरञ्जसा ॥ ३६७ ॥

आगते विग्रहे व्यक्तिं राजस्थानीयसंश्रयात् ।
सोगादवन्तिनगरं तन्मूलस्थानमुद्धतः ॥ ३६८ ॥

अथोत्पलपुरं राजा भटैः सह रणोद्भटैः ।
अशिश्रियदिदं भ्रातुर्वाचिकं च विसृष्टवान् ॥ ३६९ ॥

दुर्जनप्रेरणात्त्वं चेन्मत्स्नेहं नाभ्यजीगणः ।
लोकापवादज्वरतः कथं कम्पो न जायते ॥ ३७० ॥

अन्योन्यपालनायाज्ञां राज्ञस्त्रिदिवगामिनः ।
पालनीयामनुध्याय प्रत्यानय दयां मयि ॥ ३७१ ॥

इति संदिश्य दूतं च व्यसृजत्स नरेश्वरः ।
कम्पनाधिपतिं हन्तुं व्यसृजच्च निजात्मजम् ॥ ३७२ ॥

मृगयां युवराजोगादिति दूतं निरोधयन् ।
भ्रातृपुत्रं निहन्तुं च श्रुतद्रोहोगमच्च सः ॥ ३७३ ॥
दूतः किमिति नायातः कालो हि सुचिरं गतः ।
इति चिन्ताकुलो लक्ष्मभट्टो राजान्तिकं ययौ ॥ ३७४ ॥
ऊचे च जाने स द्रोहं लक्षयित्वा तवानुजः ।
त्वत्पुत्रमारणायागाद्यद्दूतस्य चिरागमः ॥ ३७५ ॥
स्नाति भुङ्क्ते स्वपित्येव युवराज इति च्छलात् ।
त्वदुद्योगनिषेधाय नूनं रुद्धो वचोहरः ॥ ३७६ ॥
तदवन्तिपुरं तस्मिञ्छ्रीदेवसरसंगते ।
सद्यो निःस्वामिकं हन्मो जयोस्माकं ततो ध्रुवः ॥ ३७७ ॥
अथावन्तिपुरं गत्वा सत्वातिशयशालिना ।
राज्ञा युद्धं तथाकारि तद्भटैरुद्भटैः समम् ॥ ३७८ ॥
अल्लेश्वराय भृत्यानां वधं नूनं निवेदितुम् ।
वितस्ता शवरुद्धौघा प्रतीपमगमद्यथा ॥ ३७९ ॥
भ्रातृपुत्रं पराभूय तावदल्लेश्वरे द्रुतम् ।
व्यावृत्तरणखेदान्तः प्रापलायत ज्यंशरः ॥ ३८० ॥
दीपस्येव शिखाध्वान्ते यस्य धीरापदि स्फुरेत् ।
स रत्नं रत्नजातेश्च पाषाणेभ्यः किमन्तरम् ॥ ३८१ ॥
समधित्सत भेदाय कंचित्कालं स वैरिणम् ।
अमोघा दूरगा बुद्धिः शास्त्राण्यप्यतिवर्तते ॥ ३८२ ॥
आवयोर्नैव कर्तव्यः कलिर्मासद्वयीमिति ।
राज्ञा समं विदांचक्रे धीमानल्लेश्वरस्ततः ॥ ३८३ ॥
प्रतिमोच्य निजान्योधानवन्तिपुरमुत्सृजन् ।
अथ क्षीरीपथेनासावल्लेशोगमदीक्षिकाम् ॥ ३८४ ॥

5

नगरी रक्षतां न्यस्य सय्यराजे स्वमन्त्रिणि ।
क्रमराज्यं विराजच्छ्रीर्ज्यैशरश्चागमत्तदा ॥ ३८५ ॥
दानमानौ प्रतिश्रुत्य सय्यराजं विभिन्दता ।
युवराजेन नगरी स्वीकृता मन्त्रयुक्तिभिः ॥ ३८६ ॥
नामराजतया दुःखं भुक्त्वा कश्मीरमण्डले ।
मासद्वयोनौ द्वौ वर्षाववसानमगान्नृपः ॥ ३८७ ॥
जानन्नलावदेनोथ तं कालं कलहाक्षमम् ।
द्वारैश्वर्यं ददौ भ्रातुस्ततो वैरनिवृत्तये ॥ ३८८ ॥
सलिलोत्तरणोपायं सेतुं सय्यपुरे व्यधात् ।
विपत्संतरणोपायं न पुनर्ज्यैशरोस्मरत् ॥ ३८९ ॥
पथिकानां निवासाय तेन पर्वतसीमनि ।
कक्ष्याविभागसहितः स्वनाम्ना रचितो मठः ॥ ३९० ॥
कपटापत्रपारोपाद्राज्ञः प्राप्तविभीषकः ।
स्वयं द्वारं त्यजन्सोगाद्ग्रामं ज्येष्ठेश्वराभिधम् ॥ ३९१ ॥
एवं विक्रमनीतिभ्यां देशं शोधयतो निजम् ।
श्रीशिरःशाटको राज्ञो द्वारैश्वर्यमवाप्तवान् ॥ ३९२ ॥
राजपुत्रः स वाक्पुष्टाटवीं लीलारसादटन् ।
योगिनीचक्रमद्राक्षीत्कदाचिद्गिरिगह्वरे ॥ ३९३ ॥
उदयश्रीस्तथा चन्द्रडामरश्चास्य वल्लभौ ।
अपश्यतां न किं लभ्यं महतामनुयानतः ॥ ३९४ ॥
अचलल्लाडनादण्डघण्टानां चण्डटांकृतम् ।
मनांसि न पुनस्तेषां वीराणां साहसस्पृशाम् ॥ ३९५ ॥
घटिताशातटं स्वाट्टहाससंवाहनादिभिः ।
योगिन्यो डमरुध्वानैर्भयादिव चलैर्बभुः ॥ ३९६ ॥

मान्तर्धासिषुरेवैताः प्रष्टुं द्रष्टुं च काङ्क्षिताः ।
इति तेऽश्वादवारोहन्प्रवीरा न तु तद्भयात् ॥ ३९७ ॥
शनैः शनैस्ततो यान्तो मौनपूर्वं महाशयाः ।
योगिनीनिकटं प्रापुर्विकटप्रकटौजसः ॥ ३९८ ॥
योगिनीनायिका दूरात्परिज्ञाय नृपात्मजम् ।
साशिषं सीधुचषकं प्राहिणोन्मन्त्रितं ततः ॥ ३९९ ॥
चन्द्रस्तदमृतं तृप्तिभाजा राज्ञावशेषितम् ।
उदयश्रीमुखापेक्षी न संतृप्तस्त्वशेषयत् ॥ ४०० ॥
भवितव्यबलादश्वपालं सपदि विस्मरन् ।
उदयश्रीरशेषं तत्पीत्वा तृप्तिं परामगात् ॥ ४०१ ॥
आश्चर्यातृप्तनेत्रेषु तेषु तृप्तेषु योगिनी ।
निमित्तज्ञावदद्राजपुत्रं बद्धाञ्जलिं ततः ॥ ४०२ ॥
अखण्डं भावि ते राज्यं चन्द्रस्त्वद्विभवांशभाक् ।
आजीवमुदयश्रीश्च मण्डितोखण्डया श्रिया ॥ ४०३ ॥
अश्वपालस्त्वसावस्मदनुग्रहविवर्जितः ।
अचिरेणैव कालेन नूनं प्राणैर्वियुज्यते ॥ ४०४ ॥
भविष्यत्सूचयित्वैवं योगिनीभिः समन्विता ।
सान्तर्दधे पुरः प्राणाः पश्चात्तुरगपालिनः ॥ ४०५ ॥
अविचारतमोमग्नाञ्जन्तूनुद्धर्तुमीश्वराः ।
संभवन्ति प्रजापुण्यैः प्रकाशोत्कर्षहेतवः ॥ ४०६ ॥
श्वशुराद्भर्तृभागं यद्वीरा पुंश्चली वधूः ।
हरन्त्यासीत्स तं राजा दुराचारं न्यवारयत् ॥ ४०७ ॥
काष्टवाटागतान्राजस्थानीयान्व्यूहतत्परान् ।
युक्त्यानीय महीपालो बद्ध्वा राज्यं सुखं व्यधात् ॥ ४०८ ॥

कोटराजस्य जामातुः कारावास्तव्यतां व्यधात् ।
भीत्या प्रत्यहमेवाथ जीवन्मृत्युमवारयत् ॥ ४०९ ॥
बुभुजे क्षेमराजश्रीस्वस्थां शस्त्रनखैः शतैः ।
विदार्य खटिकाभूमिं राजा सौकर्यभाजनम् ॥ ४१० ॥
जयापीडपुरे कृत्वा राजधानीं महामतिः ।
श्रीरिञ्चनपुरे चक्रे बोद्धा बुद्धगिराभिधम् ॥ ४११ ॥
एकोनविंशे वर्षेथ दुष्कृतोद्भवमद्भुतम् ।
दुर्भिक्षं क्षोभयामास लोकं शोकाकुलं महत् ॥ ४१२ ॥
मासानष्टौ द्वादशाब्दांस्त्रयोदश दिनानि च ।
क्ष्मां भुक्त्वा त्रिंशवर्षेथ चैत्रे राजा व्यपद्यत ॥ ४१३ ॥
मन्दराजकथाख्यानाज्जाड्यं मद्वाचि संस्तुतम् ।
तीक्ष्णप्रतापशाहावदीनाख्यानाद्विनश्यतु ॥ ४१४ ॥
राज्ञि शाहावदीनेथ स्मरणं क्षितिरत्यजत् ।
ललितादित्यसंपत्तिविपत्तिसुखदुःखयोः ॥ ४१५ ॥
श्रीमान् शाहावदीनोथ प्राज्यं साम्राज्यमग्रहीत् ।
येन राजन्वती भूर्यामहसत्तद्यशोमिषात् ॥ ४१६ ॥
ग्रीष्मार्के द्यौरिवान्यर्तूंप्राज्ञोतीत्य बहून्मही ।
ध्रुवमापज्जयापीडमेतं न तु स किल्विषी ॥ ४१७ ॥
पूर्वे परे च भूपाला नायकेनैव भूषिताः ।
क्ष्मानायकेन तेनाथ मुक्तागुणलसच्छ्रिया ॥ ४१८ ॥
सिन्धौ वाडवतप्ताम्बुन्यपि बिम्बितमम्बरम् ।
यत्प्रतापाग्नितापार्तं मज्जतीव दिवानिशम् ॥ ४१९ ॥
तदीयो जयलक्ष्मीभिः प्रविष्टाभिः पदे पदे ।
न प्रतापानलोतृप्यत्सरिद्भिरिव सागरः ॥ ४२० ॥

जयं विना गणयतः क्षणमात्रं वृथा गतम् ।
वृद्धस्य तरुणीवाभूद्यात्रा तस्यातिवल्लभा ॥ ४२१ ॥
न मृगाक्षी न वा सीधुपानलीला न चन्द्रिका ।
यात्रैव केवलं तस्य भूमिभर्तुर्मनोहरत् ॥ ४२२ ॥
न तापो न हिमं तस्य न संध्या न निशा तथा ।
न क्षुन्न वा पिपासा च राज्ञो यात्रामविघ्नयत् ॥ ४२३ ॥
न सरिद्दुस्तरतरा दुरारोहो न पर्वतः ।
दुर्लङ्घ्यो न मरुश्चाभूद्यात्रायां मानिनः प्रभोः ॥ ४२४ ॥
अजितां पूर्वभूपालैः पारसीककुलाकुलाम् ।
उत्तराशां विजेतुं स प्रस्थानं प्रथमं व्यधात् ॥ ४२५ ॥
जगतां विजये कामो मधुसीधुवधूरिव ।
चन्द्रलौलकशूरान्स सहायत्वेवृणोत्प्रभुः ॥ ४२६ ॥
सैन्यचेतांसि सत्त्वेन तमसा स्वविरोधिनः ।
अपूरयत्स रजसा दिगन्तानुद्धतान्तकः ॥ ४२७ ॥
प्रविष्टं तस्य गोविन्दखानपालनशालिनि ।
उद्भाण्डपुरे पूर्वं बाणैस्तदनु सैनिकैः ॥ ४२८ ॥
शैलशृङ्गं नृपानीके प्राप्ते तस्य विरोधिभिः ।
भयातुरैरवारोहः शृङ्गात्तुङ्गाद्व्यधीयत ॥ ४२९ ॥
सदृशं प्राभृतं दातुमसमर्थोस्य सिन्धुपः ।
उपधीकृतवान्कन्यारत्नं त्राणाय भूपतेः ॥ ४३० ॥
राज्ञस्तु गौरवं बाहौ गान्धाराणां भुवोढया ।
चित्रं तु लाघवं तेषां भयभाराभिषङ्गतः ॥ ४३१ ॥
भङ्गस्तुङ्गस्य शृङ्गस्य खड्गानां नैव भूभुजा ।
शितानामपि देशेस्मिन्विहितः शौर्यशालिना ॥ ४३२ ॥

आकर्ण्य राजसिंहस्य सिंहनादमयीं चमूम् ।
मदं तत्याज चस्खाल बिभाय गजिनी पुरी ॥ ४३३ ॥
स्नानं रक्तैर्द्विषां भुक्तं प्राणवातैर्महीतले ।
व्रतस्थाभिरिवास्वापि तस्याहो धीरहेतिभिः ॥ ४३४ ॥
श्रोत्रियक्षत्रियैरष्टनगरेरोदि शाम्यतोः ।
तरुणाग्निप्रतापाग्न्योर्धूमेनेव भयातुरैः ॥ ४३५ ॥
यशसा सह संपत्तिं तस्मिल्लुँण्ठयति प्रभौ ।
प्रापत्पुरुषवीराख्यदेशाख्या रूढिशब्दताम् ॥ ४३६ ॥
दत्तबाष्पनिवापाम्भोनगराग्रहरस्त्रियः ।
जीवतः स्वस्य पत्युश्च पिण्डौ स्तननिभाद्ददुः ॥ ४३७ ॥
अश्वक्षोददलद्धिन्दुघोषधातुतटच्छलात् ।
उदक्पतितिरस्कारप्रशस्तिं स व्यधात्प्रभुः ॥ ४३८ ॥
ततो व्यावृत्य गच्छन्स दक्षिणाशां स्ववाजिनाम् ।
मार्गखेदोचितं तापं शतद्रुर्वारिणाहरत् ॥ ४३९ ॥
ढिल्लीमुल्लङ्घ्य तत्कालमुदक्पतिमुपागतम् ।
मार्गरोधेन नृपतिर्नितान्तमुदवेजयत् ॥ ४४० ॥
योगिनीपुरपौरान्यान्धाख्या नैषीदुक्पतिः ।
मार्गदानोपकारेण स तानादित भूभुजे ॥ ४४१ ॥
तुरङ्गवस्त्रदानेन स तान्संमान्य भूपतिः ।
स्वदेशं प्राहिणोत्कीर्तिराशीन्मूर्तान्बहूनिव ॥ ४४२ ॥
सुशर्मपुरराजेन तस्मात्स्वाशर्मशङ्किना ।
दुर्गाहंकारमुत्सृज्य देव्येव शरणीकृता ॥ ४४३ ॥
तत्प्रतापानलः पीत्वा केदाराश्रयिणां रसम् ।
जातानां शिवलिङ्गानां बत भङ्गमदर्शयत् ॥ ४४४ ॥

स्वयं नत्यम नतून्नत्या भोट्टान्क्रमस्य भूपतेः ।
अर्वतां पर्वतारोहदोहदो विनिवारितः ॥ ४४५ ॥
दुस्तरत्वात्तटस्थस्य देवताभिस्तनूकृतः ।
सिन्ध्वोघो भूपतेरेवं पूर्वेभ्यः श्रुतमद्भुतम् ॥ ४४६ ॥
एवं नित्यजयोद्योगात्स्वदेशः परदेशवत् ।
परदेशस्तु तस्यासीत्स्वदेश इव भूपतेः ॥ ४४७ ॥
प्रतापेनेति संपाद्य दिङ्मुखे तिलकश्रियम् ।
व्यधात्प्रविश्य कश्मीरान्स पौरनयनोत्सवम् ॥ ४४८ ॥
तस्य वर्णयतां शौर्यं प्रसङ्गादतिमानुषम् ।
अस्माकं चाटुकारित्वं ज्ञास्यते भाविभिर्जनैः ॥ ४४९ ॥
यात्रायातः कदाचित्स दूरदेशे महीपतिः ।
अप्सरःसदृशीं कांचिच्छ्रुतवान्हरिणेक्षणाम् ॥ ४५० ॥
निजानुगान्वञ्चयित्वा राजा युक्त्या कयाचन ।
अथैकाकी स तं देशमविशद्भोगलालसः ॥ ४५१ ॥
नर्मणा मोहयित्वा तां द्वितीय इव मन्मथः ।
मनोरथानसिञ्चत्स तदोष्ठामृतपानतः ॥ ४५२ ॥
अपश्यन्तस्तमालोक्य हतं केनापि वैरिणा ।
अथ कोपत्रपावेशमुद्भटास्तद्भटा ययुः ॥ ४५३ ॥
अन्विष्यद्भिस्तमश्वेन निबद्धेनाङ्गनाद्बहिः ।
समभाव्यत तै राज्ञो वैरिभिर्निर्जयः कृतः ॥ ४५४ ॥
शौर्यस्वाम्यनुरागाभ्यां विधातुं युद्धमुद्भटैः ।
तद्भटैः सदनं रुद्धमबद्धकवचान्तरैः ॥ ४५५ ॥
त्रसद्भिरिह तत्सिंहनादपूर्णात्ततः पुरात् ।
कृतास्कन्देषु शूरेषु शत्रुभिर्विपिनं गतम् ॥ ४५६ ॥

अथाश्वास्य प्रियां तां तु शत्रून्मत्वा समागतान् ।
स्वशौर्यं सफलीकर्तुं योद्धुं राजा विनिर्ययौ ॥ ४५७ ॥
शाहावदीनमालोक्य तं तेषामनुजीविनाम् ।
चित्तैः प्रीत्या मुखैर्भीत्या नीत्या मूर्धभिरानतम् ॥ ४५८ ॥
एवं समजयस्तम्भयूपात्रणमखान्बहून् ।
हतवैरिपशूंश्चक्रे स्वप्रतापानलार्चिषः ॥ ४५९ ॥
स्वदेशे मन्त्रिणोस्तस्य कोट्टभट्टोदयश्रियोः ।
समरेषुभरस्त्वासीच्चन्द्रडामरलौलयोः ॥ ४६० ॥
देवशर्मान्वयोदन्वच्चन्द्रो राज्ञार्पितं मुहुः ।
वैराग्याद्विभवं त्यक्त्वा कोट्टशर्मा वनं ययौ ॥ ४६१ ॥
श्रीवृष्ट्या कोट्टभट्टोर्थिसार्थान्संपोष्य यत्नतः ।
व्यलालयद्वनव्योम्नि स स्वं नियममारुतैः ॥ ४६२ ॥
कोट्टशर्मा तथा धर्मद्रुमं दानाम्भसासिचत् ।
न नाशामयो भूयो यथा तत्फलभोगिनः ॥ ४६३ ॥
तस्य दर्शयितुं राज्ञः स्वबलाधिकतां ध्रुवम् ।
कदाचित्तत्प्रजा दैवी व्यापद्गाढमपीडयत् ॥ ४६४ ॥
पुरीकैरविणीसूरः शूरः पादपविद्विषाम् ।
षट्त्रिंशेब्दे जलापूरः क्रूरो व्यप्लवत प्रजाः ॥ ४६५ ॥
तदन्तःप्रतिबिम्बस्थे स्वस्मिन्सद्मान्तरभ्रमात् ।
तद्वीक्षार्थमिवानीके तोये तुम्बीर्व्यधुर्गृहाः ॥ ४६६ ॥
नगरब्रुडनादस्रु मुञ्चन्तो निर्झरच्छलात् ।
तस्योद्द्वीपस्य महतः पर्वतास्तटतामगुः ॥ ४६७ ॥
न स वृक्षो न सा सीमा न स सेतुर्न तद्गृहम् ।
तटस्थमपि यन्नैव जलपूरो व्यनाशयत् ॥ ४६८ ॥

नाद्रिदुर्गाण्यपश्यत्स जातुचिद्वैरिभीतितः ।
अम्बुपूरभयात्तेषु राजा समचरत्तराम् ॥ ४६९ ॥
पीते तत्तेजसेवाम्बुपूरे शान्ते मितैर्दिनैः ।
भूयस्तद्विप्लवाशङ्की सोचिकीर्षद्गिरौ पुरीम् ॥ ४७० ॥
नाम्ना लक्ष्म्या महिष्या स प्रसिद्धां नगरीं व्यधात् ।
त्वराकृतनिजौदार्यन्यूननिर्माणदर्शनात् ॥ ४७१ ॥
शारिकां शैलराजस्य मूले पुण्यजनाश्रिताम् ।
यामद्राक्षीत्तरां लोकः सुमेरोरलकामिव ॥ ४७२ ॥
वितस्तासिन्धुसंभेदे स्वनाम्ना नगरीं व्यधात् ।
प्रतिबिम्बच्छलात्तोये त्रपया स्वर्निमज्जति ॥ ४७३ ॥
सौधोत्सेधमयीं राशीभूतां कीर्तिमिवामलाम् ।
अलोलश्रीः पुरीं लौलडामरः स्वाभिधां व्यधात् ॥ ४७४ ॥
सुधाधौतैर्मठैर्लक्ष्मीं फलयद्भिः कृतैः पुरीम् ।
कुलिशच्छिन्नकैलासशृङ्गभङ्गिमजीजनत् ॥ ४७५ ॥
आजन्मलोलता मह्याः स्वरसाम्याय वर्धिता ।
निहन्ति च्छायया तस्या द्युमणिस्पर्शजं सुखम् ॥ ४७६ ॥
या लक्ष्म्या भागिनेयीत्वाद्बालापालि निजान्तिके ।
लासाख्या सा समक्रामन्नृपतेश्चित्तदर्पणे ॥ ४७७ ॥
यश्चानुरोधतन्तुस्तं चिरं लक्ष्म्यां निबद्धवान् ।
स च्छिन्नो रागवेगेन लासासौन्दर्यजन्मना ॥ ४७८ ॥
बलिजिन्मूर्तिना तेन वसन्त्या वक्षसि श्रियः ।
प्रातिवेश्मिकतां नीता लासा सौभाग्यदायिनी ॥ ४७९ ॥
छाया तद्रचितोदग्रापि दिवसश्रीभोगमातन्वतः
सूर्यात्संमुखतां जहाति वहति श्रेयोहरीं कालताम् ।

स्त्रीणामस्ति चतुर्गुणा मतिरिति स्थाने न हन्त श्रुति-
र्यद्वा दुर्विधिपाकमाकलयितुं शक्तो न कश्चिद्ध्रुवम् ॥४८०॥

प्राकृतस्यावताराख्या वल्लुस्यापि सुता सती ।
लक्ष्मीर्लासानुरक्तेऽधादथ रोषं महीपतौ ॥ ४८१ ॥

रोषात्सिन्धुपतेर्देशं संबन्धित्वाद्गतां नृपः ।
प्रत्यानयन्नपोद्रेकान्न पुनः स्नेहगौरवात् ॥ ४८२ ॥

अलाब्वो न्यमुडन्नन्तरप्लवन्त जले शिलाः ।
लक्ष्मीपक्षः क्षयं वृद्धिं लासापक्षस्तु लब्धवान् ॥ ४८३ ॥

यावद्यावदगाद्दूरं लक्ष्मी रात्रिरिव क्रुधा ।
तावत्तावत्स तां लासां दिवं भास्वानिवाभजत् ॥ ४८४ ॥

अपनीय तापखेदं मरुकरिणी पद्मिनीतोयैः ।
तत्पद्मशैवलाम्भोनिर्माथे कर्मठीभवति ॥ ४८५ ॥

लक्ष्म्या मातृस्वसुः सर्वमातृकृत्यकृतोभवत् ।
राजप्रियाथ राकेव लासा पक्षक्षयोद्यता ॥ ४८६ ॥

सत्कर्मपाकसमयोस्य न चेद्धिकाश-
शोभां न किं परिहरेत्कुमुदाकरस्य ।
विश्वप्रबोधहरणप्रवणा प्रियेण
कुस्त्री निशा च सहसैव सुधाकरेण ॥ ४८७ ॥

चिन्तासूचकनिश्वासम्लानौष्ठी तं कदाचन ।
अवोचद्योगिनीवेति लासाख्या भोगिनी नृपम् ॥ ४८८ ॥

न चेद्धिकाशयेद्भास्वान्पद्मिनीं स्वरुचा स्फुटम् ।
तस्याश्छेदाय शैवालवल्ल्या इव यतेत कः ॥ ४८९ ॥

पतन्तीं प्रेमभारार्द्रां मयि दृष्टिं तवासहा ।
मां निहन्तुमुपायेन क्रमते महिषी तव ॥ ४९० ॥

अभिचारे दुराचारमुपचारप्रियंकरम् ।
सा चाराक्षी मम द्वेषादुदयश्रियमैरयत् ॥ ४९१ ॥
देव्यद्वेषपरे तस्मिन्नभिचारविनिर्मितिः ।
असंभाव्येति तां राजा प्रत्युवाच विचक्षणः ॥ ४९२ ॥
निर्बन्धेनोपजल्पन्तीं तदेव वचनं ततः ।
तां प्रत्याययितुं देवीमुदयश्रियमब्रवीत् ॥ ४९३ ॥
व्ययस्यातिशयेनाहो कोशो रिक्तत्वमागतः ।
प्रार्थयन्ते जना राज्ञः सर्वे कल्पतरूनिव ॥ ४९४ ॥
द्रविणोत्पत्तये तस्मादुपायः प्रतिभात्ययम् ।
प्रतिमा श्रीजयेश्वर्या यातिरीतिमयी पृथुः ॥ ४९५ ॥
तां खण्डयित्वा विहितैष्टङ्कैर्मन्नामचिह्नितैः ।
व्ययनिर्वहणं कीर्तिस्थिरत्वं चोपजायते ॥ ४९६ ॥
साध्वेतर्त्कि तु तन्मूर्तिर्लघ्वी किं प्रभविष्यति ।
बृहद्दुःखेनमुद्रास्तु क्षुद्रस्तं सचिवोऽभ्यधात् ॥ ४९७ ॥
तत्रोपकरणं सज्जीकृत्यान्येद्युरुपागतम् ।
राज्ञीं प्रत्याय्य भूपालो रहो मन्त्रिणमब्रवीत् ॥ ४९८ ॥
पुंनागव्रजमुन्मुमूलयिषति प्रायः कराकर्षणै-
रुद्दामं विजिहीर्षति प्रतिपदं कस्याछिदां काङ्क्षति ।
कां नैच्छन्नृपगन्धसिन्धुरपतिस्तीव्रां न वप्रक्रियां
तीक्ष्णाग्रप्रतिभाङ्कुशोस्य निकटे मन्त्री नियन्ता पुनः॥४९९॥
याः पूर्वैर्निरमीयन्त यशःसुकृतलब्धये ।
अङ्गीकर्तासि मे देवप्रतिमास्ता विभङ्क्त ॥ ५०० ॥
अमरप्रतिमा विधाय केचि-
त्परिपूज्याथ परे प्रसिद्धिमाप्ताः ।

परिपाल्य यथोचितं तथान्ये
विदलय्याहमहो महद्दुरन्तम् ॥ ५०१ ॥
निर्माणाज्जलधेः समस्तसरितां कौमारशोकावधिः
प्रख्यातः सगरो भगीरथनृपो गङ्गावताराच्च सः ।
दुष्यन्तः स च विश्वविश्वविजयादिन्द्रस्य भीतिप्रदो
रामो हन्त दशाननेन विहितात्सीतापहारात्पुनः ॥ ५०२ ॥
राजा शाहावदीनाख्यः सुरमूर्तीरलोठयत् ।
इतीयं दुष्कथा विश्वं कथं न क्षोभयिष्यति ॥ ५०३ ॥
उदयश्रीर्नतशिरा राज्ञीत्युक्तवति स्वयम् ।
महीरन्ध्रमिवैक्षिष्ट द्रागधोगतिवाञ्छया ॥ ५०४ ॥
सर्वंसहा तदा क्ष्माभूदन्वर्था प्राग्वदेव यत् ।
लासानुरक्तमपि तं सा राजानमसेवत ॥ ५०५ ॥
भास्करो द्युपरीरम्भरसासादितकौतुकः ।
स्वपुत्रशनिमुख्यानां ग्रहाणां शान्तिमिच्छति ॥ ५०६ ॥
रागी तद्दोषवादिन्या लासादेव्या प्रबोधितः ।
व्यवासयत्स्वदेशात्स राजपुत्रान्परानिव ॥ ५०७ ॥
कार्येष्वतिमनुष्येषु साहायकविधायिभिः ।
योगिनीपुरनाथस्य तैरभूषि निजं कुलम् ॥ ५०८ ॥
औदार्याद्दत्तवृत्तीन्स हिन्दुखानेन बोधितः ।
म्लेच्छान्सिकन्दरमुखान्राजद्रोहकृतोवधीत् ॥ ५०९ ॥
पिशुनैर्जनिताशङ्कः शूरे मदनलाविके ।
राजा विप्लवसज्ञोपि सेवयास्य निवारितः ॥ ५१० ॥
औदार्यशालिना राज्ञा स्वसमं वर्धितः स्वयम् ।
राजाधिकं व्यवाहार्षीत्तदा मदनलाविकः ॥ ५११ ॥

तुल्यार्थः समसामर्थ्यः शङ्क्योयमिति भूपतिः।
ईर्ष्यालुभिः कुसचिवैस्तस्मै परमकोप्यत ॥ ५१२ ॥

शुचिमप्यशुचिं मत्वा तं ¯तिं भूमिपालधीः।
खलनाशावृतत्वेन न चित्तविरताभवत् ॥ ५१३ ॥

उपप्लवयितुं वाञ्छंस्तं मुहुः क्रोधवेगतः।
राजरत्नाकरोरोधि तदीयगुणवेलया ॥ ५१४ ॥

उत्तराशां नृपो जातु व्यसनेनाभ्यषेणयत्।
नौसेतुकौतुकं सिन्धोः परिखाया इवाहरत् ॥ ५१५ ॥

शूरः खड्गनगर्यां स पर्यटन्मृगयारसात्।
सिंहमन्वद्रवद्राजसिंहः संहतसाहसः ॥ ५१६ ॥

गच्छंश्चित्ताधिकं राजा वाजिना वेगराजिना।
अपारशौर्यभक्तिभ्यां मदनेनानुधावितुम् ॥ ५१७ ॥

आरूढः पौरुषं राजा सोवरूढस्तुरङ्गमात्।
यमेनेव व्यधाद्युद्धं हरिणा क्रौर्यधारिणा ॥ ५१८ ॥

एकाकिनं चिरं बद्धयुद्धमुद्धतकेसरः।
तमधः कृतवान्राजसिंहं सिंहोतिसाहसम् ॥ ५१९ ॥

उत्प्लुत्य वाजिनस्तूर्णं भक्तो मदनलाविकः।
निपातितनृपं सिंहं कृपाण्या सहसावधीत् ॥ ५२० ॥

प्राणरक्षोपकारेण प्रसन्नः पिशुनाञ्जनात्।
युक्त्या मारणमेतस्य शङ्कमानो नरेश्वरः ॥ ५२१ ॥

स विवाहच्छलाद्दत्वा द्रविणं करुणामयः।
मदनं व्यसृजड्ढिल्लीपतेर्निकटमञ्जसा ॥ ५२२ ॥

उत्पन्नचम्पकं व्योम कुर्वतीं जातुचित्त्विषा।
स्वप्ने शंकरसूहाख्यो दृष्टवान्काञ्चनीं पुरीम् ॥ ५२३ ॥

निश्छन्नकौतुकाक्रान्तः सन्नसन्न विशन्नयम् ।
शून्यं पश्यन्नहो शोकविस्मयाभ्यामपूर्यत ॥ ५२४ ॥

रहस्थां राहुभीत्येव मूर्तिमिन्दोरनिन्दिताम् ।
कांचिदेकाकिनीं दृष्ट्वा राजधान्यां स पृष्टवान् ॥ ५२५ ॥

प्रत्यक्षा पुरदेवीव का त्वं कस्य च पूरियम् ।
तेजःसारमिवैकत्र कस्य चेदं कलेवरम् ॥ ५२६ ॥

सा जगादेति कश्मीरांस्तत्रत्यैः सह भुञ्जतः ।
राज्ञः शाहावदीनस्य मूर्ति रक्षाम्यमूमहम् ॥ ५२७ ॥

प्रयोक्ष्यमाणो विधिना पातुमेतां निजां पुरीम् ।
अह्नां शतेन कश्मीरभोगात्स च निवृत्स्यति ॥ ५२८ ॥

प्रत्यवेक्षाप्रयत्नस्य स्वामिनस्तस्य दर्शनात् ।
अचिरेणैव भोक्ष्येहं ध्रुवमस्य फलश्रियम् ॥ ५२९ ॥

इति श्रुत्वा प्रबुद्धः स विस्मयाविष्टमानसः ।
यथावद्वृत्तमाचक्षौ शाहाब्दाय महीभुजे ॥ ५३० ॥

माहात्म्याद्भाविभोगेषु निश्चयाद्वा महीपतिः ।
धनं संत्यक्तवान्सर्वं न तु धैर्यं मनागपि ॥ ५३१ ॥

मदन्तिकमुपागम्यमिति भूमिपतिस्ततः ।
दूरस्थितानां पुत्राणां सद्यो लेखान्विसृष्टवान् ॥ ५३२ ॥

पूर्वराजगुणादर्शो मुमूर्षुर्भूपतिस्ततः ।
अप्राप्तेषु सुपुत्रेषु स्वानुजं राज्यमार्पिपत् ॥ ५३३ ॥

तं भक्तं नेश्वरोनैषीत्सदेहं यत्सधर्मताम् ।
तत्र हेतुर्ध्रुवं तस्मिन्सौभाग्यान्मदनभ्रमः ॥ ५३४ ॥

शौर्योदार्यविधौ विधौतविविधश्लोके नृलोकेश्वरे
तस्मिन्नस्तमुपागते गुणिगणत्राणोन्नरनैपुणे ।

शक्रेणोन्नमितं शिरः परिभवत्रासापसाराद्ध्रुवं
भूभारोद्वहनात्पुनर्विनमितं शेषेण शोकस्पृशा ॥ ५३५ ॥
प्रत्यक्षं ज्वलतः प्रतापशिखिनः स्वीकृत्य यं भुक्तवा-
नन्यान्नाद्रियताधिकं स्पृहयतस्तद्रागबन्धाच्च या।
तां भूमिं प्रविहाय हायमगमद्द्यां शक्रभुक्तां चिरं
पुंसां स्त्रीषु कदापि न प्रभवति प्रेमग्रहप्रत्ययः ॥ ५३६ ॥
ज्येष्ठशुक्लचतुर्दश्यां तानाङ्के वत्सरे नृपः।
आलिङ्गनैः सुरस्त्रीणांस्तनौन्नत्यमपीफलत् ॥ ५३७ ॥
मत्वेव भूजयाद्भूयः पुनरुक्तापवादताम्।
शाहावदीने निर्जेतुं द्यामिव प्रस्थिते सति ॥ ५३८ ॥
कुद्दुदीननरेन्द्रोथ मौलावाज्ञां महीभुजाम्।
चित्ते सुखं मुखे हर्षं स्तुतिं वाचि न्यधात्ततः ॥ ५३९ ॥
तस्य प्रतापकमला सगर्वपदवीमगात्।
जयव्यसनिपूर्वेशविरहान्तेव भूपतेः ॥ ५४० ॥
तद्वियोगासहादेशदेवी जयमधात्स्वयम्।
नातितीव्रो न वा मन्दः सर्वस्यैव महीपतिः।
चित्तमादित लोकस्य वैषुवो भानुमानिव ॥ ५४१ ॥
अह्नायापह्नुतं युद्धे तद्धनुःप्रतिकूजितम्।
शोचद्वैरिवधूवर्गक्रन्दितैर्मत्सरादिव ॥ ५४२ ॥
दिङ्मुखे चन्दनालेपः कीर्तिरम्बरचन्द्रिका।
धरणीरमणस्यास्य द्विषामाम्लापयन्मुखम् ॥ ५४३ ॥
क्षेम लक्ष्मीं प्रजाः क्षोणीपाले तन्वति तन्वति।
भूमावेव स्थिता नाकभोगसौख्यमभुञ्जत ॥ ५४४ ॥
लोहरप्रत्यवेक्षार्थे यान्व्यधात्पूर्वभूपतिः।
लोहराधिपतेर्भीत्या ते पलाय्य गतास्ततः ॥ ५४५ ॥

शाम्यन्त्यौषधयः सर्वाः शशिन्यस्तं गते सति ।
दृष्टो हि सूर्यकान्तानां रवौ याति द्युतिक्षयः ॥ ५४६ ॥
लोहरं प्रतिसंधातुं कुद्बुदीनमहीपतिः ।
शौर्यशालिनमादिक्षत्पुरो डामरलौलकम् ॥ ५४७ ॥
अवेष्टयत्ततो गत्वा लोहराद्रिं स सर्वतः ।
प्राणा हि स्वामिभक्तानां तृणायन्ते महात्मनाम् ॥ ५४८ ॥
असामर्थ्यान्निजं दुर्गं दुर्गेन्द्रोर्पयितुं ततः ।
ब्राह्मणान्व्यसृजद्दूतान्डामराधिपतिं प्रति ॥ ५४९ ॥
द्विजलिङ्गान्स तान्मत्वा सारं द्रष्टुमुपागतान् ।
न्यग्रहीद्विग्रहादुग्राद्द्विजानव्यग्रमानसः ॥ ५५० ॥
द्विजदैवतमप्येनं श्रुत्वा तदपकारिणम् ।
लोहरेन्द्रो न कोट्टाशां जीवाशां च विसृष्टवान् ॥ ५५१ ॥
पश्यन्तो मरणं स्वस्य युद्धे वाथ पलायने ।
क्षत्रियाणां निजं धर्ममग्रहीषुस्ततो रणम् ॥ ५५२ ॥
शरासारशिलावर्षैर्दुर्दर्शा दुर्घना इव ।
लोहराद्रेरवारोहन्नारोहंस्तु यशांसि ते ॥ ५५३ ॥
स्वं खण्डीकृत्य शैलेन विभक्तं स्वामिभक्तितः ।
प्रत्येकं शत्रवस्तेषु शिलावर्षिष्वमंसत ॥ ५५४ ॥
दृषत्सु तद्विकीर्णासु लौलडामरनायकः ।
त्रपयेव तिरोधानं समं कीर्त्यागमत्ततः ॥ ५५५ ॥
शत्रुकीर्णशिलाराशिच्छन्नो डामरलौलकः ।
यवनप्रेतसंस्कारान्न विपद्यप्यहीयत ॥ ५५६ ॥
स्त्रीविधेयतया पूर्वं निर्वास्यापि निजान्सुतान् ।
स्वप्रज्ञापितदृष्टान्तः शाहाब्दीनो महीपतिः ॥ ५५७ ॥

आकारयत लेखैर्यान्स्वाभिज्ञानपरिष्कृतैः ।
तज्ज्यायान्हस्सनस्तावदापन्महेन्द्रमण्डलम् ॥ ५५८ ॥
स नेत्रशुक्तिमुक्ताभिर्मुक्ताभिर्बाष्पवीचिभिः ।
श्रुत्वा तत्र पितुर्मृत्युं निवापाञ्जलिमार्पिपत् ॥ ५५९ ॥
व्यावृत्य गमनेच्छायाः स्वच्छाशयममुं ततः ।
न्यवारयत्पितृव्यस्य लेखः कश्मीरभूपतेः ॥ ५६० ॥
शक्रादिसख्यलोभेन भृत्यानस्मानपेक्ष्य सः ।
समस्कुरुत शाहावदीनभूमिपतिर्दिवम् ॥ ५६१ ॥
स्वःस्त्रीभोगरसेनेव गमनाय त्वरावतः ।
तस्यास्माभिर्भवत्कार्यमशेषं निरपाद्यत ॥ ५६२ ॥
क्ष्मारक्षालक्षणामाज्ञां विचक्षणशिरोमणेः ।
तन्मन्त्रिमानितां मौलिमूले मालां विदध्महे ॥ ५६३ ॥
गमनागमनाभ्यां त्वं पितुः पालितयाज्ञया ।
श्रीराम इव भूलोकं यशोभिः स्वैरपूपुरः ॥ ५६४ ॥
भूतो भावी च संमानो यद्यपि स्वगुणैस्तव ।
यौवराज्यग्रहाद्भारं लघूकुर्यास्तथापि मे ॥ ५६५ ॥
स्वधैर्यं सत्यसंयोगो नानाबन्धुसमागमः ।
जगद्रक्षाधिकारश्च दौर्मनस्यं विलुम्पतु ॥ ५६६ ॥
यशसेव प्रमीतानां परदेशनिवासिनाम् ।
प्राप्तेन विभवेनापि महता न सुखं भवेत् ॥ ५६७ ॥
स्वरूपप्रतिबिम्बेन भवता स्वर्गवासिनः ।
त्वदुत्कण्ठाभरोस्माकं दर्शनेन निवार्यताम् ॥ ५६८ ॥
पुत्रः शाहावदीनस्य सोयमित्यन्यमण्डले ।
अङ्गुल्यग्रेण निर्देशः प्राकृतस्येव मास्तु ते ॥ ५६९ ॥

राज्ञां मदनुकम्प्यानां मुखप्रेक्षी भवन्भवान् ।
कश्मीरैश्वर्यमाहात्म्यं मा नैषीरल्पकल्पतां ॥ ५७० ॥
विभज्य भवति क्षोणीभारं मेरुगिराविव ।
सुखसंपत्तिमतुलामनन्तद्युतिराप्नुयाम् ॥ ५७१ ॥
कीर्तिं सुरवधूगीतां पात्रे श्रीप्रतिपादनात् ।
स कर्णपूरयन्राजा माद्दत स्वर्गमालतीः ॥ ५७२ ॥
प्रिययोरावयोः स्नेहश्रुतिसौख्येन शीतलैः ।
निःश्वासैर्भूपतेः स्वीयैः स्यादस्पृह्यं च चामरम् ॥ ५७३ ॥
येन मानेन मामन्वग्रहीत्स वसुधाधिपः ॥
त्वं संचरस्व तेनैव मयि पालयति प्रजाः ॥ ५७४ ॥
त्राता द्यौः शक्रराजाभ्यामावाभ्यां च समं मही ।
शेषैकनाथां पाताललक्ष्मीं हसतु निःसुखाम् ॥ ५७५ ॥
उदयश्रीमुखामात्यमतानुष्ठानशालिनीम् ।
ममार्थनानिषेधेन लक्ष्मीं नैव वृथा कृथाः ॥ ५७६ ॥
अजानँल्लोलकर्णत्वं राजेन्द्रकरिणामथ ।
पन्थानं लेखवाची स कश्मीराणामगाहत ॥ ५७७ ॥
पवनैः संमुखायातैर्झांकाररवधारिभिः ।
न्यवार्यतेव कश्मीरप्रवेशाद्राजनन्दनः ॥ ५७८ ॥
स विशन्नथ कश्मीरसरणीमुदजिज्वलत् ।
अमलीमसयद्राज्ञः श्रुतिं तु खलचोदना ॥ ५७९ ॥
नक्राः समुद्रमिव केचिदुदेतुकामा
वाता लताग्रमिव केचन दर्पवेगात् ।
दुर्मन्त्रिणो भुवनकाननचक्रवाल-
हव्याशना नरपतिं प्रविलोलयन्ति ॥ ५८० ॥

प्राप्तेथ हस्सनेऽभ्यर्णे क्रौर्यनिर्णयवादिभिः।
वर्णाश्रमगुरुस्तूर्णं पिशुनैरिति बोधितः॥ ५८१॥
सर्वासामेव बुद्धीनामुपरीश्वरबुद्धयः।
तथापि सचिवैर्वाच्यो हिताहितविनिर्णयः॥ ५८२॥
पुरंदरादिलोकेशतेजोंशाश्रयशालिनाम्।
स्ववंश्येभ्यो नरेन्द्राणामन्तरायो विलोक्यते॥ ५८३॥
स्पर्शनाशितया ख्याताद्भ्रातृपुत्राद्धि जिह्मगात्।
कृष्णसर्पादिवाश्लिष्टात्कष्टं दूरे न कस्यचित्॥ ५८४॥
विभवैस्तर्प्यमाणोयं न च स्वीभविता तव।
स्नेहेन सिच्यमानोग्निः शीतलत्वं किमृच्छति॥ ५८५॥
वरं हालाहलो घोरो न दुरात्मा च दुर्जनः।
तस्य पानाद्गलत्येकः परस्य त्वखिलं कुलम्॥ ५८६॥
दैवाद्दूरतरं सर्पं प्रसर्पद्विषधारिणम्।
विना दैवकृतं को नु निधौ स्थापयति स्वयम्॥ ५८७॥
न चिन्त्यं चायमेकाकी राज्ञो मे किं करिष्यति।
हरेः पुरः सयूथोपि कतमो वारणेश्वरः॥ ५८८॥
बुद्धिशस्त्रस्य किं नु स्यात्परिपन्थिपराक्रमैः।
नैतद्युक्तं सौगतौ हि राजपुत्रोदयश्रियौ॥ ५८९॥
आद्ये पक्षे द्रुतं नाशश्चिरं नाशः परे यतः।
नानुग्राह्यो न च त्याज्यस्ततस्ते हन्त हस्सनः॥ ५९०॥
न चैवं प्रायतावृत्तिं तेजस्वी स सहिष्यते।
यस्मिन्दहति नाम्भोधिं स क्षणो वाडवस्य कः॥ ५९१॥
अतस्तस्य निरोधेन निरुपिञ्जसुखाः प्रजाः।
कुण्ठयन्तुतरां पूर्वभूपालोत्कण्ठितां चिरम्॥ ५९२॥

प्रविष्टैरिति दुर्वाक्यैर्निर्गमाद्भिरिव ह्रदः ।
वैरस्यमभजद्राजा खलवाक्यैः स हस्सने ॥ ५९३ ॥

पश्यञ्शृण्वन्ननुभवंस्तस्यैवोत्सुकविक्रियाम् ।
भ्रातुः पुत्र इतिस्नेहात्तं बबन्ध न भूपतिः ॥ ५९४ ॥

उदयश्रीरथालक्ष्य विरक्तं हस्सने नृपम् ।
तद्धात्रीं लौलकवधूं समदिक्षत्तरामिति ॥ ५९५ ॥

स्वामिरागादिवारूढो नाकं डामरलौलकः ।
न यशो नाशयामास कुस्वामिमुखवीक्षणैः ॥ ५९६ ॥

अस्माद्दुर्मनसो राज्ञो विभवाशास्तु दूरतः ।
वर्धितस्य त्वया प्राणसंशयो हस्सनस्य तु ॥ ५९७ ॥

अतः प्रलोभ्य राजेत्थं त्वयानीयो निजान्गृहान् ।
योग्यं स्थानान्तरं नास्मद्विपन्निर्यातनाविधौ ॥ ५९८ ॥

तस्मात्त्वया निजार्थानां ग्रहणार्थं महीपतिः ।
प्रार्थनीयो यथाभ्येति त्वद्गृहानेष लुब्धधीः ॥ ५९९ ॥

विश्वस्तायाः किमर्थैर्मे धर्मकामार्थहेतुभिः ।
राज्ञोर्पयामि तान्सर्वान्यदि मे स्यादनुग्रहः ॥ ६०० ॥

अतः स्वकीर्तये पूर्तसंमानस्फूर्तयेस्तु मे ।
यत्तु त्वच्चरणस्पर्शोदर्शितानुग्रहं गृहम् ॥ ६०१ ॥

प्रत्याहृत्य स्वयं स्वीयमोषधेरिव सद्वसु ।
आशाः प्रकाशयत्वर्थपतिर्भास्वानिवाभितः ॥ ६०२ ॥

वदन्येन त्वयापेक्ष्यं न तु स्त्रीधनमित्यतः ।
रसाद्या रसमादत्ते लोकाप्यायाय भास्करः ॥ ६०३ ॥

अनेन वसुना राज्ञः फलतु प्रार्थनार्थिनाम् ।
सरितां वारि गृह्णानो मेघांस्तर्पयतेम्बुधिः ॥ ६०४ ॥

निधीनहिभिरावेष्ट्य गोपयन्ती मया मही।
उपहास्येत नाथेन मद्रव्ये दृष्टिकारिणा॥ ६०५॥
तथेति प्रतिसंदिश्य सा पुंवद्धैर्यशालिनी।
तद्बुद्धिपरितोषार्थमेवं संदेशमाक्षिपत्॥ ६०६॥
एकाकी दीर्घधीक्रुद्धः किमुद्यच्छेत साहसे।
कदाचिन्नोच्चरत्येव करेणैकेन तालिका॥ ६०७॥
सामर्षः सावलेपत्वात्कम्पनाधिपतिस्त्वया।
साहाय्यकार्थमभ्यर्थ्यः सिद्धे कार्ये धृतौजसा॥ ६०८॥
भवतैव विधार्येयं निराधारत्वनिष्फला।
वाताहताश्रया द्राक्षावल्लीवान्येन भूरुहा॥ ६०९॥
उदयश्रीरिति श्रुत्वा वाचिकं मतिमानपि।
तथैवायाचत्सहाय्यं कम्पनेश्वरलक्ष्मकम्॥ ६१०॥
हस्सनस्य जनन्याः स लक्ष्म्या ध्यायन्नपक्रियाः।
तस्मिन्प्रत्यपकारेच्छुस्तद्राज्ञे विन्यवेदयत्॥ ६११॥
मन्त्रिभिर्विवृतः सोथ गुणवत्सलमत्सरैः।
अबोध्युदयभद्रस्य दुर्नयं तं नराधिपः॥ ६१२॥
मन्त्रिणं स्तन्यमाप्याय स्वकीयमभयाय तम्।
राज्ञी राज्ञोस्य सुडाख्या पुत्रीयांचक्रुषी स्वयम्॥ ६१३॥
स पूर्वस्वामिसंमानवृणमार्गोपलब्धये।
हस्सनाभ्युदयाङ्गानि प्राणानपि त्वजीगणत्॥ ६१४॥
तत्रागतं महीपालं हनिष्यामो वयं छलात्।
बध्नीमो वा ततो राजपुत्रो वृद्धिमुपेष्यति॥ ६१५॥
इति दैवाद्गते तस्मिन्मन्त्रे भेदं महीपतेः।
उदयश्रीस्ततो भीतः पलाययत हस्सनम्॥ ६१६॥

आत्मनो वधबन्धेन मोचयन्नपराञ्जनान् ।
रसेन्द्र इव लोकेस्मिञ्श्लाघनीयत्वमश्नुते ॥ ६१७ ॥
कर्मण्यभीक्ष्णतीक्ष्णेपि तथा लक्षितमुद्यतम् ।
क्षमाशीलः क्षमापालो नातक्ष्णोद्रुदयश्रियम् ॥ ६१८ ॥
गुणैः संवृत्य रन्ध्राणि शुचितां शीलयन्बहिः ।
बिसवत्कालमनयत्पङ्कवत्सु जलेषु सः ॥ ६१९ ॥
बुद्धेलस्वामिनः कन्यारत्नं स्वीकृत्य हस्सनः ।
अविशल्लोहरं तावन्निरगाच्च दिशां भयम् ॥ ६२० ॥
कश्मीराम्बरबद्धस्य घनस्येवोदयश्रियः ।
धीवृष्ट्या पुष्टिमभ्यायात्केदार इव हस्सनः ॥ ६२१ ॥
युक्त्या मन्त्रान्प्रताथान्तराधिनेवोदयश्रिया ।
व्याधिनेव बहिर्भूपो हस्सनेनाभ्यभूयत ॥ ६२२ ॥
तावद्भ्रमति यस्तोयं दूरात्स्पृष्टो हिमांशुना ।
कियन्नैव तदाश्लिष्टचन्द्रकान्तो वमेदिति ॥ ६२३ ॥
उदयश्रीर्गन्तुमना राजपुत्रान्तिकं ततः ।
परिहृत्य परान्मार्गान्सरलान्रोधशङ्कया ॥ ६२४ ॥
मडवासरणिं वक्रां सिद्धिहेतुं विदन्रहः ।
श्वशुरं वर्णितस्वीयरहस्यं मडवापतिम् ॥ ६२५ ॥
गङ्गराजमयात — न्मार्गेण विनिर्गमम् ।
अन्ते नश्यति धीः पुंसः सहस्रांशोरिव द्युतिः ॥ ६२६ ॥
न यद्युच्छेदयेत्कन्दकोटिं शृङ्गाटमुन्नताम् ।
कस्तस्यान्तर्निमग्नस्य ज्ञातुं शक्तो भवेत्स्थितिम् ॥ ६२७ ॥
स्वनाशशङ्कया गङ्गराजे तद्द्रोहवर्णिनि ।
इद्धतेजा नृपः क्रुद्धो रुणद्धि स्मोदयश्रियम् ॥ ६२८ ॥

परीक्षितुमिवोद्युक्तैर्गुरोस्तस्य च शेमुषीम् ।
सुरैरिवार्थितो राजा क्रोधाद्व्यापादयत्स तम् ॥ ६२९ ॥

वायुश्चन्दनपादपं रयभयादुन्मूलयँल्लीलया
छिन्दन्पद्ममिभो घनः परिहरन्बालातपं हेलया ।
पुंरत्नं पृथिवीपतिर्गुणमणिश्रेणिश्रियां रोहणं
रोषापस्मृतिमूर्छितेन मनसा निघ्नन्न कैर्गृह्यते ॥ ६३० ॥

भुवनोपवनेषु मानुषप्रसवानामथ या प्ररोहताम् ।
विचिनोति मनोहरं विधिर्विलसत्सौरभसंपदुज्ज्वलम् ॥६३१॥

हस्सनो नष्टधैर्यश्रीरुदयश्रीमतं विना ।
विनष्टहस्तपालोऽध इव पातमथान्वभूत् ॥ ६३२ ॥

पक्षिशाव इव क्रूरकरकाभग्नपक्षतिः ।
पर्यन्तवृत्तिभिः क्रूरैर्हस्सनोऽथ न्यरुध्यत ॥ ६३३ ॥

प्रसादप्रीणितैः प्रायः खशराजैर्दुरात्मभिः ।
राजपुत्रो हस्सनः स हन्त प्रत्यर्पितः प्रभोः ॥ ६३४ ॥

उत्पिञ्जे गलिते शत्रुवर्गे चाशाच्युते सति ।
स तिग्मतेजा लोकानामालोकश्रियमादधौ ॥ ६३५ ॥

वितस्तायां स्वनामङ्का पुरी तेनाथ निर्मिता ।
उच्छ्रितैः कनकच्छत्रैर्द्यामुल्लुण्ठयति स्म या ॥ ६३६ ॥

प्रत्यब्दं जनमालक्ष्य दुर्भिक्षक्षपितायुषम् ।
मासि भाद्रपदेऽकार्षीत्स सत्रं भूरिदक्षिणम् ॥ ६३७ ॥

साधुसूक्तिसुधास्नानात्कर्णाभ्यर्णतले कचैः ।
ध्रुवं धवलिमापेदे वार्धकेऽथास्य भूपतेः ॥ ६३८ ॥

भूषणं निजवंशस्य पूषणं धरणेरसौ ।
वैरिश्रीदूषणं पुत्ररत्नं न च स लब्धवान् ॥ ६३९ ॥

आयुर्वायुचलद्वीचिचञ्चचलं कलयन्नथ ।
सर्वाग्रहारनिर्माणमकरोत्पुत्रलिप्सया ॥ ६४० ॥
योगिनं ब्रह्मनाथाख्यं तत्कर्मप्रेरणादिव ।
कश्मीरानागतं राजा पुत्रार्थ्येवमभाषत ॥ ६४१ ॥
मया वैरिवरान्नीत्वा कारागारकुटुम्बिताम् ।
निवारितं विलोलत्वं नैसर्गिकमपि श्रियः ॥ ६४२ ॥
यथापराधं दण्डेन हरता धर्मविप्लवम् ।
प्रजा अपक्षपातेन स्वप्रजा इव पालिताः ॥ ६४३ ॥
नीताश्चिराय निर्मथ्य विपश्चिज्जनवारिधिम् ।
कियंतोपि मया — — मैत्रीं शास्त्रमणिप्रभाः ॥ ६४४ ॥
इति मे कृतकृत्यस्य शोकशङ्कुरयं परम् ।
प्राज्यसाम्राज्यभारस्य वोढा नास्ति कुलाङ्कुरः ॥ ६४५ ॥
इति श्रुत्वा वचस्तस्य वंशच्छेदतमोमुषम् ।
दर्शयन्दशनज्योत्स्नां योगी तं प्रत्यभाषत ॥ ६४६ ॥
मा विषादं कृथा राजन्पुत्रानुत्पत्तिहेतुकम् ।
नहि किंचित्कदाचित्स्याद्दुरापं पुण्यशालिनाम् ॥ ६४७ ॥
पुत्रोत्पत्तिनिमित्तं मे योगिनोप्यानुषङ्गिकम् ।
किंचित्संचितमस्त्येव तत्तवास्तूपकारकृत् ॥ ६४८ ॥
गुणैः सममिमं मे च कश्मीरागमनोद्यमम् ।
फलयत्वेव महिषी भुञ्जाना गुलिकामिमाम् ॥ ६४९ ॥
कुलतन्तौ समुत्पन्ने त्रिलोकाभयलग्नके ।
नरोत्तमो जगत्त्राणचिन्तातानवमश्नुताम् ॥ ६५० ॥
इत्यूचुषोथ यागीन्द्रादादाय गुलिकां नृपः ।
अभोजयत्स महिषीं चरुं दशरथो यथा ।
देवीमभोजयन्मूर्तां प्रसादपदवीमिव ॥ ६५१ ॥

अन्वयाभरणं देवी पितुरानन्दपारणम्।
तमोहरणमर्यन्धकरणं सुषुवे सुतम्॥ ६५२॥
शृङ्गारमङ्गलावासमवलोक्य शिशोर्वपुः।
शृङ्गार इति नामास्य व्यधाद्भूलोकवासवः॥ ६५३॥
हर्षाददिशति क्ष्मापे बद्धमुक्तिं तदुत्सवे।
अन्वभावि तदा चित्रं बन्धो नौसेतुभिः क्षणात्॥ ६५४॥
यो मातुलसुतो देव्या भाण्डागारिक उद्दकः।
तत्प्रियां सेवतां राजा निन्ये धात्रीषु मुख्यताम्॥ ६५५॥
अथ द्वितीयपुत्रं सा देवी हैवतसंज्ञितम्।
असूत कान्तिसंतानतर्ज्यमानसुधाकरम्॥ ६५६॥
न कस्य वस्तुनोलक्षि सुभिक्ष्यश्रीः पदेपदे।
तस्मिन्रक्षितरि क्षोणिमन्यत्रारिभयाज्जनैः॥ ६५७॥
धनुर्विनम्रितं तेन पश्यन्तो नैव कुत्रचित्।
प्रणतिं वैरिणस्तस्य कस्मादप्यधिगोषत॥ ६५८॥
दैवी नीतिरभूत्तस्मिन्पृथ्वीं पालयति प्रभौ।
उत्पिञ्जखञ्जताख्यानं प्रत्युतास्य तिरस्क्रिया॥ ६५९॥
चन्द्रस्येव कलङ्कोयं दोषोभूत्तु महीभुजः।
कुलागतां महीं यत्स वास्तव्यानामपाहरत्॥ ६६०॥
अकलङ्कः स राजेन्दुर्विकसत्कुमुदाकरः।
नाग्रामनाम्नि धाम्न्यापत्परधामविलीनताम्॥ ६६१॥
चिरभुक्तां भुवं मत्वा सोस्पृश्यां भाविकिल्विषैः।
जगाम त्रिदिवं राजा ध्रुवं भोक्तुं सुरस्त्रियः॥ ६६२॥
भाद्रे कृष्णद्वितीयायां पञ्चषष्ठे स वत्सरे।
अस्तं जगाम राजेन्दुः कुद्बुदीनमहीपतिः॥ ६६३॥

राज्ञी शोकान्तरा राजपुत्रौ बालाविति प्रजाः ।
अभूवंश्चकिताः सर्वा अथ वैनाथ्यशङ्कया ॥ ६६४ ॥
देव्या विषादतोये तु बहुलत्वमुपेयुषि ।
परस्परममात्यानां मात्स्ये न्यायेभवद्रुचिः ॥ ६६५ ॥
अलं विषादनिर्बन्धैर्धैर्यस्यैव क्षणो ह्ययं ।
रुन्धते मलिनात्मानः क्ष्मामशूरामराजकाम् ॥ ६६६ ॥
इति प्रबोध्य सुभटां देवीमुद्दकसाहकौ ।
ज्येष्ठं सिकन्दरं पुत्रं महाराज्येभ्यषिञ्चताम् ॥ ६६७ ॥
देव्या मतेनोद्दकोथ साहिं मह्मदमुद्भटम् ।
जामातरमपि क्रूरः सजानिमदहच्छलात् ॥ ६६८ ॥
सूक्ष्मानत्ति तिमिर्महान्स्वकुलजान्व्याधाद्जानन्वधे
पीडां क्षौद्रहरान्नरादविदुषी स्वां मातरं पुत्तिका ।
प्रायः श्रीलवलोभमोहितधियः कल्पान्तरस्थायिनो
मन्वाना दुरितं कियन्न जडिमग्रस्ता विदध्युः खलाः ॥६६९॥
शोभानाममहादेव्याः सोधिविन्नां महीं व्यधात् ।
प्रतापहेमराजा तु नाधिवेदनिकां ददौ ॥ ६७० ॥
शाभादेव्यास्तदा लक्ष्मीः स्तुतित्वमगमत्तराम् ।
क्ष्मां हेमलिङ्गैर्या पुण्यलिङ्गैर्या स्वैरमण्डयत् ॥ ६७१ ॥
एतद्बन्धुघ्नमेषोपि मां हनिष्यति निश्चितम् ।
इत्युद्दको राजपुत्रं विषेणाथ व्यपादयत् ॥ ६७२ ॥
निर्जयैनं कृपाण्याहं स्वं छिन्द्यां कण्ठमेतया ।
यद्यहं त्वा निरुन्ध्यां वा हन्या वेत्यथ संविदा ॥ ६७३ ॥
विश्वास्य साहकं वीरमुद्दकोथ व्यपादयत् ।
आसन्नविनिपातानां द्रोहा दूता हिं दुर्धियाम् ॥ ६७४ ॥

यथा भ्रातुस्तथा स्वस्य वधं संभावयन्नृपः ।
प्रौढीभूतस्ततो वृद्धिं स्वपक्षं किंचिदानयत् ॥ ६७५ ॥
भोट्टाञ्जित्वा गतो हत्तोसहमानोन्यवैभवम् ।
श्रीशोभाभ्रातरं खुञ्जराजमुद्दोवधीत्ततः ॥ ६७६ ॥
गूढां नृपौरुषै राजमात्रा बोधित उद्दकः ।
होलडामगमत्क्रुद्धस्ततो योद्धुमथोद्धतः ॥ ६७७ ॥
तच्छ्रुत्वा लद्दराजाद्या भूपतेरनुयायिनः ।
योद्धुं बद्धोद्यमाः पद्मपुरधन्वनि धन्वनि ॥ ६७८ ॥
प्रत्यासन्नविनाशानां प्रायो मतिमतामपि ।
पिशाचादिभ्रमो नूनं स्वच्छायास्वपि जायते ॥ ६७९ ॥
उद्दसैन्यैस्ततो योद्धुं वल्लामठमुपागतैः ।
पारेवितस्तं महिषीष्वश्वभ्रान्त्या पलाय्यत ॥ ६८० ॥
आवितस्तापुरं रात्रौ तमनुद्रुत्य भूपतिः ।
व्यावर्तताथ तं बद्ध्वा नगरोत्पिञ्जशङ्कया ॥ ६८१ ॥
मनोविशालं गगनं पट्टहैस्तर्जयन्निव ।
स प्राविशत्पुरं राजा हर्षश्च हृदयं विशाम् ॥ ६८२ ॥
मदज्वरोद्धतः पालपशूनामेवमप्यभूत् ।
आश्रयन्स्तब्धतां येन तच्छिरांसि तदा चिरम् ॥ ६८३ ॥
कदाचित्सह तैः पालकुञ्जरैर्मदघूर्णितैः ।
पलङ्कमाविशद्राजसिंहः सन्नखरद्युतिः ॥ ६८४ ॥
तत्र पालोत्तमाङ्गानि वपुश्चक्रात्महीपतिः ।
शरावानिव सूत्रेण कुम्भकारोसिनाच्छिनत् ॥ ६८५ ॥
पक्षिराज इव व्यालाञ्शृगालानिव केसरी ।
पालान्धरणिपालः स कालान्तिकमथानयत् ॥ ६८६ ॥

तं वध्यमपि कारायां कारुण्यात्तु नृपोक्षिपत् ।
उद्दकस्तु स विश्वस्तद्रोहपापमलीमसः ॥ ६८७ ॥
शङ्कमानो वधं भूपात्करुणाकोमलादपि ।
निजयैव कृपाण्या स स्वगलच्छेदमाचरत् ॥ ६८८ ॥
राज्यं शौर्यं वयस्तेजो निर्नियन्त्रणता तथा ।
प्राकृतस्याभवद्राज्ञः पञ्चाग्नितपसः फलम् ॥ ६८९ ॥
हर्तुं राज्ञां ततो दर्पतिमिरं नृविकर्तनः ।
यात्रामसूत्रयच्चित्रां गोत्रभित्त्रासदायिनीम् ॥ ६९० ॥
रूढं तत्सेवकक्षत्रच्छत्रशेषफणाशतैः ।
स व्यधादम्बरारोहि रजो भूमण्डलान्तरम् ॥ ६९१ ॥
विश्वं रञ्जयतस्तस्य प्रतापेन प्रथीयसा ।
द्वेषियोषिन्नखाङ्कश्रीः पाण्डिमानमवाप्यत ॥ ६९२ ॥
तदैव मीरतिमिरो जेतुं त्रीञ्जलधीनपि ।
प्रास्थितः स्थितसत्कीर्तिः स्वयमेवोत्तराधिपः ॥ ६९३ ॥
संत्यक्ताभरणां दीनामपालकतया श्रुताम् ।
तदा ढिल्लीमुदीचीशो विधवामिव स व्यधात् ॥ ६९४ ॥
स विघ्नकरणाभावात्तुष्टः कश्मीरभूभुजे ।
उपदां व्यसृजत्तस्मै हस्तिद्वयमुदक्पतिः ॥ ६९५ ॥
हस्तिद्वयगलद्दानराजिव्याजात्स्वयं व्यधात् ।
देशसीमाविभागं स कश्मीराधिपतेरिव ॥ ६९६ ॥
हस्तिद्वये समारूढे हिमाद्रिशिखरश्रियि ।
विन्ध्यवृद्धिभ्रमाद्विन्ध्यनियन्ता कोपमागमत् ॥ ६९७ ॥
नागौ कोपमगातां तौ वितस्तातरणक्षणे ।
प्रतिबिम्बं निजं दृष्ट्वा प्रतिहस्तिभ्रमं गतौ ॥ ६९८ ॥

दिदृक्षयैव करिणो राजधान्यां महीपतेः ।
नोर्ध्वं शिरोभवत्तस्य तत्तृस्या तिमिरादपि ॥ ६९९ ॥
सुन्दरीस्तनसौन्दर्यचौर्यकारिकटोत्कटौ ।
तौ गजौ भूमिपालेन वारीकारां प्रवेशितौ ॥ ७०० ॥
वदन्येन नरेन्द्रेण सुवर्णपरिपूरिताः ।
नैवार्थिनः परं राज्यस्थितिः स्वा च व्यधीयत ॥ ७०१ ॥
यथेष्टलाभसंपत्तिप्रीणितार्थिस्तवैरिव ।
विनमन्संकुचन्हस्तों दानकालेभवत्प्रभोः ॥ ७०२ ॥
दानं वर्णयितुं तस्य शक्यते नैव केनचित् ।
दानाम्बु नित्यं यत्रोर्ध्वं पाणिपद्मोर्थिनामधः ॥ ७०३ ॥
सदा दानाम्बुसेकाद्यन्न प्रारोहद्यवः करे ।
खड्गत्सरुविमर्दानां मन्ये तत्र निमित्तताम् ॥ ७०४ ॥
अवाच्या सौभगश्लाघा श्रीसिकन्दरभूपतेः ।
त्यक्तापि यं स्वयं लक्ष्मीर्भूयोभूयः समाश्रिता ॥ ७०५ ॥
दानोद्यमपराद्राज्ञः स्फुरन्मुखरुचः पुरः ।
कमला दानभीत्येव पद्मादपि पलायत ॥ ७०६ ॥
आजीवमेव तिष्ठन्ती निन्द्या श्रीस्तस्य तूत्तमा ।
मान्यजन्मस्वपि प्रत्ता यद्वाग्देवीव भाविनी ॥ ७०७ ॥
अनेका यवनाचार्या दानोद्रिक्तं तमाश्रयन् ।
विहाय परभूपालान्पुष्पाणीवालयो द्विपम् ॥ ७०८ ॥
प्रजापापविपाकेन ततो यवनदर्शने ।
बालस्येव मृदि क्षोणिपते रुचिरवर्धत ॥ ७०९ ॥
भासेन्दुरिव ऋक्षाणां तेषां बालोपि विद्यया ।
यवनानामभूज्ज्यायान्मीरसैदमहम्मदः ॥ ७१० ॥

अनंसीदग्रहीच्छिक्षां पुरो नम्रो न्यविक्षत ।
विनयं शिष्यवत्तस्य न को भूमिपतिर्व्यधात् ॥ ७११ ॥
मरुद्भिरिव वृक्षाणां शालीनां शलभैरिव ।
तन्मतस्थैः खलैश्चक्रे भङ्गः कश्मीरसंविदाम् ॥ ७१२ ॥
स्वामिनो दानमानाभ्यां ख्यातैर्देशगुणैरपि ।
कश्मीरानविशन्म्लेच्छाः सुक्षेत्रं शलभा इव ॥ ७१३ ॥
विद्वानभ्यासबोधाभ्यां विद्यामेव विशांपतिः ।
स लक्ष्मीं त्यागभोगाभ्यामशोभयदवीवृधत् ॥ ७१४ ॥
शाहिभङ्गपतिं जित्वा पिरुजं स महीपतिः ।
मेरादेवीं महीपालात्प्राप्तवान्प्राभृतं ततः ॥ ७१५ ॥
अवातरत्तत्र कुले नूनं सा कापि देवता ।
योजयिष्यति कश्मीरान्नष्टांस्तन्नन्दनो यतः ॥ ७१६ ॥
श्रीजैनोल्लाभदीनाख्यो मूर्तो धर्मः कलाविव ।
राजापि योगिराजो यो राजचूडामणेः प्रियः ॥ ७१७ ॥
यवना गुरवो भृत्याः सेवका वल्लभास्तथा ।
बान्धवाश्चाभवंस्तस्य काकाः पिकशिशोरिव ॥ ७१८ ॥
केनापि रससिद्धेन दत्तस्तोकरसः प्रभुम् ।
रससिद्धिं वदन्धूर्तो महादेवाभिधोऽभ्यगात् ॥ ७१९ ॥
सहस्रवेधिता तेन रसेनैव न साधिता ।
विस्मयेन रसेनापि काञ्चनश्रियमृच्छता ॥ ७२० ॥
सदा राज्ञि महीभारोद्वहनादनुरागगान् ।
अदान्मेरुर्महादेवरूपेणेव निजं वसु ॥ ७२१ ॥
रससिद्धिप्रसादोथ महादेवस्य हीनताम् ।
अगात्र तु सतीदेशनिवासविषये मनाक् ॥ ७२२ ॥

रससिद्धिभ्रमार्थं स कृत्वा दृग्बन्धमौषधैः।
हेम स्वं मूषिकामध्ये चिरमासीत्क्षिपन्नथ ॥ ७२३ ॥
प्राज्ञेन ज्ञापितो राज्ञा तच्छद्म स्वयमेकदा।
अकीर्तिश्रवणाद्भीतो महादेवो जहावसून् ॥ ७२४ ॥
धिक्कं वारिदमम्बु यो जलनिधेराप्याशुचिश्रीर्भव-
न्मित्रं साशमुपद्रवत्यथ परिक्षीणः स्खलत्यद्रिषु।
पद्मः स्तुत्यतमश्च यो विकसने सारै रसैरौरसैः
संप्रीय भ्रमरान्रसव्युदसने प्राणान्निजान्मुञ्चति ॥ ७२५ ॥
शेषं विषभयेनेव काठिन्येनेव पर्वतान्।
मदेनेव द्विपांस्त्यक्त्वा सुखं भूस्तद्भुजेवसत् ॥ ७२६ ॥
चित्रं च नालभट्टेन गुणिना मित्रबन्धुना।
कुलपद्मेनापि राजवाल्लभ्यादुच्चनालता ॥ ७२७ ॥
लब्धराजोगदंकारशंकरो भट्टसूहकः।
मन्त्रिणश्चान्तरङ्गाश्च सर्वदैवाभवन्प्रभोः ॥ ७२८ ॥
अभिषेणयतस्तस्य कन्यारत्नौषधार्पणात्।
मद्रेन्द्रो विल्लदेवोथ जातु यात्रामपीपलत् ॥ ७२९ ॥
औचित्यात्साधुवादेषु प्रसक्तेन प्रभोः पुरः।
सख्यं शंकरवैद्येन निरवद्यं च बद्धवान् ॥ ७३० ॥
धृतामर्षः सूहभट्टः शंकरप्रीतिवत्सरे।
अपकारान्मद्रराजे चिन्तयन्नास्त संततम् ॥ ७३१ ॥
उदीचीनायको धाट्या यं पौरैः सह नीतवान्।
शिखकुक्कुरराजस्य पुत्रं मलेकजन्नतम् ॥ ७३२ ॥
मृतेथोदक्पतौ जातेत्युत्पिञ्जे मुक्तता भजन्।
स मद्रनायकद्वेषात्सूहभट्टार्थनाबलात् ॥ ७३३ ॥

मद्रासन्नक्षितेः स्वाम्यं कश्मीरेन्द्रेण लम्भितः ।
सचेतनं जयस्तम्भमिव तं तत्र रोपयन् ।
व्यावर्ततारिलोकार्त्तिकर्ता स क्ष्माविकर्तनः ॥ ७३४ ॥
प्रत्यक्षा इव धर्मार्थकामाः काममनोरमाः ।
मीरादेव्यास्त्रयो राजपुत्रास्तस्योदपत्सत ॥ ७३५ ॥
मीरखानः शाहिखानः खानो मह्मद इत्यपि ।
यैः संज्ञा अभ्यभूषन्त गङ्गौघैर्विष्टपा इव ॥ ७३६ ॥
प्रमीतमातृकं शोभानन्दनं पिरुजाभिधम् ।
स राजा मीरखानादिनिर्विशेषमवीवृधत् ॥ ७३७ ॥
अलकासदृशीं राजा मानसप्रतिबिम्बिताम् ।
पुरीं पुण्यजनाकीर्णां प्रद्युम्नाद्रितटे व्यधात् ॥ ७३८ ॥
पूर्णानन्दा जयारिक्ता भद्रा विस्मयदायिनी ।
श्रीस्तस्यातिथिसंपत्त्यै भूभुजोभूद्दिवानिशम् ॥ ७३९ ॥
राजावनाश्रयत्वेन प्रसिद्धः स सदायतिः ।
लक्ष्मीमचुम्बितामन्यैर्बताचुम्बद्द्विषां बलात् ॥ ७४० ॥
यवना नित्यतद्दत्तवित्तसंपत्तिशालिनः ।
आहारव्यवहारादौ जितवन्तो महीपतिम् ॥ ७४१ ॥
अयत्नप्राप्तवित्तानां यवनानां महीपतेः ।
वराटके च कोटौ च दृष्टिरासीत्समा तदा ॥ ७४२ ॥
कश्मीरमण्डले म्लेच्छदुराचारेण दूषिते ।
महिमा ब्राह्मणैर्देवैर्मन्त्रैश्च स्वः समुज्झितः ॥ ७४३ ॥
खद्योतैरिव यैः कालबलात्तेजः प्रकाशितम् ।
तैर्देवैः कालदौरात्म्यात्तदन्तर्धिमनीयत ॥ ७४४ ॥
पुण्यक्षयेण कर्तृणां कलिदोषेण चोज्झिताः ।
गीर्वाणैः प्रतिमा सर्वा निर्मोका भुजगैरिव ॥ ७४५ ॥

प्रत्याहृते ततस्तेजोविशेषे त्रिदशैरभूत् ।
प्रतिमानां शिलाभावो मन्त्राणां वर्णमात्रता ॥ ७४६ ॥
कलिस्पर्शभयात्त्यक्तकामैः स्वप्रतिमा ध्रुवम् ।
तद्ध्वंसे त्रिदशैर्म्लेच्छा धियमाविश्य चोदिताः ॥ ७४७ ॥
राजात्तरंगो यवनमतभक्तः प्रतारितः ।
यवनैः सूहभट्टोथ प्रतिमानां निराकृतौ ॥ ७४८ ॥
रक्ते रागं शुचौ शौक्ल्यं मलिने मलिनां स्थितिम् ।
संक्रान्ते सति गाहन्ते स्फटिकानीव भूभुजः ॥ ७४९ ॥
स्वयं ब्राह्मक्रियाद्वेषी यवनैश्च प्रतारितः ।
सूहभट्टः प्रभुं जातु देवभङ्गार्थमैरयत् ॥ ७५० ॥
पाषाणान्देवसान्निध्यभ्रमेणैष जनो नमन् ।
त्वत्प्रणामविशुद्धं स्वशिरो दूषयति ध्रुवम् ॥ ७५१ ॥
मायया केवलक्षोभसंसर्गान्धंभविष्णुषु ।
श्रद्दधीते च देवत्वमीश्वरादितरेषु कः ॥ ७५२ ॥
मुखानि कमलानीव रज्जवो भुजगा इव ।
शुक्तयो रजतानीव स्थाणवः पुरुषा इव ॥ ७५३ ॥
मायेन्द्रजालसंदर्भप्रभवादिनयोदिताः ।
ये च केचिज्जडैर्देवा भ्रान्तिशक्त्या प्रकल्पिताः ॥ ७५४ ॥
सन्निधापयितुं तान्कः प्रतिमासु क्षमो भवेत् ।
ग्रहीतुं मारुतं मुष्टौ सौष्ठवं कस्य दृश्यते ॥ ७५५ ॥
ते च सन्निहिताः किं वा कुर्युः कर्मनियन्त्रिताः ।
शिल्पिभिः कल्प्यमानासु स्वतुल्यावयवास्वपि ॥ ७५६ ॥
कलिकाले स्फुरत्यद्य तिष्ठेरंस्ते जना हि किम् ।
तेजस्तिमिरयोर्नास्ति साधारणपदस्थितिः ॥ ७५७ ॥

तेनेत्यादि कुतर्कोक्त्या दुरमात्येन पापिना।
निरस्तो देवताभावः प्रतिमाभ्यो महीपतेः ॥ ७५८ ॥
सुरासुराणां समरे सज्जानां सततं तदा।
असुरैर्विजितं नूनमन्यथा कथमप्ययुः ॥ ७५९ ॥
विध्वस्ताः प्रतिमाः सर्वा गीर्वाणानां शिला इव।
न विघ्नो भञ्जकानां च प्राग्वद्दृष्टः कथंचन ॥ ७६० ॥
विहाय राज्यकार्याणि प्रजाभाग्यविपर्ययात्।
देवानां प्रतिमाभङ्गे राजारज्यदहर्निशम् ॥ ७६१ ॥
भग्नः श्रीविजयेशोपि तेनेति कथयोत्थितम्।
प्रक्रान्तस्यानुरोधेन शोकशल्यं सहामहे ॥ ७६२ ॥
शृण्वतां पश्यतां श्रोत्रनेत्रस्य त्रस्यतो मुहुः।
नोल्कानिपतनाच्चक्रधरभङ्गो व्यभिद्यत ॥ ७६३ ॥
सिंहिकापुत्रदण्डान्तो मार्तण्डः पुनरुत्थितः।
न पुनः सूहदण्डान्तः पुनः कुत्रापि जात्वपि ॥ ७६४ ॥
रीतिमय्या बृहद्बुद्धमूर्त्या मर्दितया नृपम्।
निजनामाङ्कितां मुद्रां तां सूहो निरमापयत् ॥ ७६५ ॥
प्रत्यङ्मुखः प्राङ्मुखत्वं योगान्नगररक्षया।
मूर्तिमर्दाद्भूक्षीमस्वामी सोन्तर्मुखस्तदा ॥ ७६६ ॥
सुमनोनागसंहर्तुर्निकर्तुः पक्षशालिनाम्।
अभूच्छ्रीशारिका देवी पुरस्तस्यातिसंभ्रमा ॥ ७६७ ॥
सुरेश्वरीवराहादिप्रतिमाध्वंसनोद्यमे।
अकम्पत भियेवोर्वी नास्य सर्वङ्कषा तु धीः ॥ ७६८ ॥
नगरं पत्तनं वापि न ग्रामो न च तद्वनम्।
यत्र सूहतुरुष्केण सुरागारमशोष्यत ॥ ७६९ ॥

तद्दर्शनभयेनेव तिरोभूतः स्वयंभवः ।
तदाहुताशो नाशोचि निकटस्थैर्द्रुमैः परम् ॥ ७७० ॥
भीत्येवापः प्रकाश्य स्वाश्रिसंध्यं तत्र मज्जतः ।
संध्यादेवी परं वन्ध्या तस्यागादनुकम्प्यताम् ॥ ७७१ ॥
कथाशेषीकृते सर्वगीर्वाणप्रतिमागणे ।
व्याधिमुक्त इवानन्दं सूहभट्टोभजत्ततः ॥ ७७२ ॥
सिन्धूदभाण्डपुरयोः स्वामिनौ श्रीसिकंदरः ।
श्रीशोभाकन्ययोः पाणिग्रहेणान्वग्रहीदथ ॥ ७७३ ॥
प्रत्यमुञ्चत्स्वदेशोत्कं मीरसैदमहम्मदम् ।
राजा सहचरीकृत्य शोभापुत्रं सपिर्वजम् ॥ ७७४ ॥
दर्शितैर्मौसुलैः शास्त्रैर्जातिद्वेषमयैरिव ।
अश्रावि तेन तद्राज्ञा किमसाध्यं दुरात्मना ॥ ७७५ ॥
श्रीसिंहभट्टकस्तूट्टवणिजौ श्लाघ्यतां गतौ ।
श्रीनिर्मलाचार्यवर्यस्त्रिजगच्छ्लाघ्यतां गतः ॥ ७७६ ॥
त्यक्त्वा जातिग्रहं यत्तावन्यदर्शनसेविनौ ।
देवानां प्रतिमाभङ्गो धिन्यवारयतां यतः ॥ ७७७ ॥
निर्मलाचार्यवर्यः स सर्वस्वं तृणवत्क्षणात् ।
त्यजन्वै पततु ब्रह्मदण्डो विप्रेण भाषिते ।
पश्यतां सर्वलोकानां ब्रह्मदण्डोपतद्दिवः ॥ ७७८ ॥
कृतव्रणः स तेनाङ्गे विसर्पिक्लिन्नविग्रहः ।
कीर्यमाणक्रिमिकुलक्रकचैश्चारितैरभूत् ॥ ७७९ ॥
अनुभाव्य व्यथां भाविनिरयक्लेशवर्णिकाम् ।
गणरात्रेण तं प्राणाः काङ्क्षितापगमाज्जहुः ॥ ७८० ॥
दण्डाक्रान्तः स राजाथ मीरखानं निजे पदे ।
अभिषिच्यालिशाहाख्यां कृत्वास्यागाद्यमालयम् ॥ ७८१ ॥

स्वामी भृत्यापराधेन दण्डनीय इति स्थितेः ।
सूहभट्टापराधेन कालो भूपेकरोत्क्रुधम् ॥ ७८२ ॥

ज्यायांसमभिषिच्याथ पुत्रं सिकन्दरो नृपः ।
नन्दाष्टाब्दे ततो ज्येष्ठकृष्णाष्टम्यां व्यपद्यत ॥ ७८३ ॥

रूपं निष्फलमर्चितं किमपि तन्मन्दानमन्दाग्रहा-
न्भक्तान्यः समनुग्रहीतुमतुलस्वाच्छन्द्यवन्द्यक्रियः ।
गौरीरूपकरीं वपुःसहचरीं स्वां शक्तिमव्यक्तय-
न्मुक्तिं मुक्तपुरस्सरीं दिशतु वो देवः स्वयंभूरयम् ॥ ७८४ ॥

विश्रम्यतुतरां शाहिखानवृत्ताञ्जसानुतिः ।
मद्वाक् श्रान्तान्यराजाख्याशैलकोटिशिखाटनैः ॥ ७८५ ॥

तद्गुणौघरसश्लाघ्यां पिबन्त्वपि गिरं मम ।
सुगन्धिघनसारेण कूपाम्भोपि मनोरमम् ॥ ७८६ ॥

आलिशाहः स वसुधासुधांशुर्जगतां तमः ।
प्रदोषारब्धमाच्छैत्सीद्भास्वतोस्ते पितुस्ततः ॥ ७८७ ॥

अदर्पकचितं बालं प्रौढा लक्ष्मीर्मुहुर्मुहुः ।
कुलजालिङ्गदङ्गैस्तं राजानं नतिशालिभिः ॥ ७८८ ॥

तस्य बाल्यं मनोहारि विशेषाद्राज्यराजितम् ।
कान्तिं कलयते कान्तपूर्णेन्दुः शरदि स्फुरन् ॥ ७८९ ॥

पूर्वोर्वीश्वरवद्बालमपि तं भूभुजोनमन् ।
अहिदष्टो हि दामापि क्रमितुं न प्रगल्भ्यते ॥ ७९० ॥

— नाधिकारिमुख्यत्वं तदा सूहे — — — —
— — — मतिवैदग्ध्यं तदीयमवहद्विधेः ॥ ७९१ ॥

सूहेनाशङ्कि मार्गेशो लब्धकः स्वोदयः सहः ।
ध्रुवं स्वाशयवद्भाति सर्वस्यैव पराशयः ॥ ७९२ ॥

अद्रोहार्थिततत्संवित्पीतकोशोदको‍ सन् ।
लब्धमार्गपतिं सूहभट्टो रोद्धुमचिन्तयत् ॥ ७९३ ॥
तेन ह्यशङ्कि स स्वस्मिन्स्वात्मेवास्मिन् ह्यविश्वसन् ।
महात्मनां भवेत्कोशः कोशो वारि तु पापिनाम् ॥ ७९४ ॥
कातरो वीरविद्वेषी निर्गुणो गुणिमत्सरः ।
दृढः कुलीनः कौलीनो विधात्रैव हि निर्मितः ॥ ७९५ ॥
वीरः स लब्धमार्गेशो जातकोशोदकाग्रहः ।
दाम्भिके सूहभट्टे तु बके तिमिरिवाश्वसीत् ॥ ७९६ ॥
शस्त्रमार्गपतिर्वीरः करालस्वमपि स्वयम् ।
धृत्स्वाङ्गसङ्गमत्याक्षीत्सूहप्रत्ययलब्धये ।
हरेर्हस्तप्रणामं तच्छस्त्रत्यागममंस्त सः ॥ ७९७ ॥
कलिकालभुजङ्गस्य तादृशमायु‍विलम् ।
ग्रहं शुचिरुचो मत्वा पितुः सूहविधुंतुदम् ।
शूरो मद्यदमार्गेशो बाङ्गिले शङ्कितोवसत् ॥ ७९८ ॥
मार्गेशं शौर्यकोशाभ्यां शस्त्रोपेक्षणमप्यतः ।
रोद्धुं नैवाशकत्सूहः सहसा साहसासहः ॥ ७९९ ॥
तावोतुरिव गतार्टौ मन्त्री रोद्धुमनाः समम् ।
तयोः सह पुरावासबिलावेशस्पृहामगात् ॥ ८०० ॥
राजाग्रे ताजकादीनां विश्वासार्थमनर्थसूः ।
लद्मार्गेशपुत्राणां शूराणां शं स दत्तवान् ॥ ८०१ ॥
व्याहरन्मधुरस्निग्धमपश्यद्भ्रातृणोद्गुणान् ।
मित्रैरिव स तैः सत्रा कं न द्रोहं व्यवाहरत् ॥ ८०२
अन्तः कण्टकपारुष्यं संवृत्योन्नतपक्षभृत् ।
प्रकृतिस्निग्धतां मन्त्री तिमिवत्समदर्शयत् ॥ ८०३ ॥

हृदयं कालकूटेन विषैरङ्गान्यभङ्गुरैः ।
कृत्वास्य किं व्यधाद्वेधा रसनाग्रं सुधाकणैः ॥ ८०४ ॥
स तान्कपटविश्वासभोज्यैराश्वास्य दुष्कृती ।
विश्वासवागुरावेशमैच्छन्मह्मदपक्षिणः ॥ ८०५ ॥
त्रिजगत्सर्गसंहारकरणोद्धारभैरवः ।
विधिः सहायतां धत्ते भियेवोग्रात्मनां विधेः ॥ ८०६ ॥
राधेयस्यन्दनस्येव भूमिर्भूयो भिये तदा ।
छिद्रकाले रुजत्पादं तीव्रा मार्गयते रुजा ॥ ८०७ ॥
कालज्ञो दीर्घसूत्रोथ सूहो विमलकाभिधम् ।
स्वभृत्यमिति संदिश्य व्यसृजन्मह्मदं प्रति ॥ ८०८ ॥
बालो राजा नवं राज्यं मन्त्री मार्गपतिर्जरन् ।
धुर्यो यदि भवान्दूरे तर्हि का जगतो गतिः ॥ ८०९ ॥
अपेक्षन्ते प्रकृतयस्त्वामात्मानमिवाखिलाः ।
पाषाणा ह्यर्कपाषाणाः सूर्योदयदशां विना ॥ ८१० ॥
अवहेलामयं राज्यधुरः संवहनं तव ।
वर्धतां दुर्धियं चान्तरातङ्कविषवल्लरी ॥ ८११ ॥
अस्मच्चक्षुश्चकोरोपि चिरतृष्णाकदर्थितः ।
अमन्दमानन्दनीयकलैकनिधिना त्वया ॥ ८१२ ॥
निवेद्य कुशलप्रश्नं मार्गराजस्य सादरम् ।
विमलो मह्मदस्याथ संदेशं निरवर्णयत् ॥ ८१३ ॥
स्वद्रोहनिश्चयं जानन्मह्मदः श्रुततद्वचः ।
स्वं विना स्वपितुर्बन्धं स मत्वा कोशयन्वितः ।
द्वित्रांस्त्वादिश्य तान्वीरान्कश्मीरेभ्योचलत्स्फुटम् ॥ ८१४ ॥
महम्मदो मार्गपतेर्बन्धं श्रुत्वैव शौर्यवान् ।
भाङ्गिलाचलमार्गेण मार्गाभिज्ञः पलायत ॥ ८१५ ॥

मारुतस्येव वीरस्य गतिः क्वापि न हन्यते ।
श्रुत्वा तद्गमनं दूतान्मन्त्रनिर्भेदशङ्कितः ।
लब्धं मार्गपतिं रोद्धुं सहसा समचिन्तयत् ॥ ८१६ ॥
रुजः संवीक्षणव्याजान्मार्गेशस्य शयास्तये ।
विश्वासनाय च प्रासङ्गट्टोत्सं तस्य सद्मनि ॥ ८१७ ॥
चिकित्सकौषधाहारी मार्गेशतिमिनाहृतः ।
नाबोधि पिण्डीनिर्गूढबडिशं पुनरुत्सवः ॥ ८१८ ॥
तावन्मार्गपतेः सौधं सिंहनादोद्भटैर्भटैः ।
जवाद्रोधितवान्मन्त्री दाशो नीडं तृणैरिव ॥ ८१९ ॥
तीक्ष्णैरप्यदयाविष्टैरिष्टैरिव स विह्वलैः ।
कथञ्चिद्दोषरहितो मार्गेशः समरुध्यत ॥ ८२० ॥
निरुध्यमानं निःशङ्कमगदंकारशंकरम् ।
अप्रयुक्तातितीक्ष्णापि शस्त्री धीश्च व्यडम्बयत् ॥ ८२१ ॥
अपश्यन्दर्पतः किञ्चित्सिंहो विशति वागुराम् ।
चित्रं तु तद्विशेत्पाशं दूरदृश्वापि यत्खगः ॥ ८२२ ॥
ततो मार्गपतेः पुत्रान्मेषानिव स सौनिकः ।
रुद्धवानुद्धतक्रोधः पाप्मा मूर्त इवापरः ॥ ८२३ ॥
ताभ्यां सपरिवाराभ्यां कारागारमपूपुरत् ।
न परं भुवनं सर्वं दुर्यशोभिश्च निश्चलैः ॥ ८२४ ॥
एकाहेनैव तत्कृत्वा मह्मदप्राप्तिचिन्तया ।
कन्ययेव दरिद्रः स नक्तंदिवमदूयत ॥ ८२५ ॥
दुर्दण्डदेशे गोविन्दनाम्नो मित्रस्य वेश्मनि ।
विश्वस्तः प्राविशत्तावद्विश्रमार्थं महम्मदः ॥ ८२६ ॥
श्रीसिकंदरदत्तैतद्देशाधिकारशालिना ।
मह्मदस्य पुरा शास्त्रीतेनानाटि हि दुर्धिया ॥ ८२७ ॥

वह्नेर्धूमविवर्धितः शमयति ज्वालाभरं वारिदो
वृक्षक्षोदभवो वनानि नयति क्षिप्रं कृशानुः क्षयम् ।
दाहं जन्मभुवो दिशेद्द्विषतरुर्वैरस्यदोषावहे
द्रुह्यन्त्यत्युपकारिणेपि सततं लोभाभिभूता जनाः ॥ ८२८ ॥

प्राप्ते महम्मदे मार्गपतौ विश्वासतो गृहान् ।
स गोविन्दखशश्चित्ते क्षणमेवमचिन्तयत् ॥ ८२९ ॥

मन्त्रिणा सूहभट्टेन राज्योपद्रवरक्षिणा ।
द्वैराज्यकाङ्क्षी दुर्बुद्धिरित्यवारि महम्मदः ॥ ८३० ॥

लीलेवापक्रिया कर्तुरपकार्यस्य सा पुनः ।
नाडीव व्रणिता जातु न शुष्यति कथंचन ॥ ८३१ ॥

परिणामेतिदुःखेन सुखेनासुखसीमनि ।
अपथ्येनेव किं नः स्यात्सेवितेनामुना फलम् ॥ ८३२ ॥

राजद्रोहोद्यतः पापी निःसामर्थ्यो भयादयम् ।
मम देशं प्रविष्टोद्य रक्षणीयो न युज्यते ॥ ८३३ ॥

इति संमन्त्र्य विश्वस्तजिह्मगो मह्मदं ततः ।
सुप्तं हरिमिव व्याधो गोविन्दस्तं निबद्धवान् ॥ ८३४ ॥

अनेकेनार्थं रत्नेन निःसपत्नत्वलिप्सया ।
एकं सूहः स पुंरत्नमक्रीणन्मह्मदं ततः ॥ ८३५ ॥

तावच्छ्रीसूहभट्टेन विसृष्टाः श्रेष्ठबुद्धयः ।
अन्वेषका गृहं प्राप्ताः गोविन्दस्य खशेशितुः ॥ ८३६ ॥

सुप्तं हरिमिव व्याधो यदा बद्धार्पिपत्खशः ।
पशुवत्तं तदा तेथ कश्मीरानानयन्द्रुतम् ॥ ८३७ ॥

मन्त्रार्दितस्य फणिनः प्लवगाश्चपेटै-
र्व्याधाः सटाविघटनान्निरसोर्हरेश्च ।

बद्धस्य कातरतया बलिनोवमानै-
र्निन्दां विना किमिव नाम परं लभन्ते ॥ ८३८ ॥

करोटीटङ्कनाघट्टरटाङ्कारकुट्टनैः।
पर्यभूयत जिह्मेन सूहभट्टेन मल्लदः ॥ ८३९ ॥

मान्यं कृतावमानं तं शङ्कमानः पलायनम्।
बहुरूपे महादुर्गे सूहः कारामवीविशत् ॥ ८४० ॥

हितैषिणो निजप्राणैर्देवस्य स्वानुजीविनः।
विषयेस्मिन्ह्यधीकारस्तेनामन्दमधीयत ॥ ८४१ ॥

विद्युद्द्योतभरैर्निशि प्रवसतः पान्थान्नवो वारिदः
पञ्चास्यो वनवासिनो मृगगणान्व्यावृत्य विप्रेक्षितैः।
गम्यान्वक्रगतैर्दिनेशतनयो राशीनजादीन्विधि-
र्भद्राभासविलोकनैर्दुरितिनो विश्वास्य पर्यस्यति ॥ ८४२ ॥

शाहनाड्यास्ततो दास्या मुखेन प्रतिबिम्बितः।
मल्लदो निजधात्रेयैर्बन्धस्थानादकृष्यत ॥ ८४३ ॥

स हि खेदाकुलः स्नानं करोमीति स्वरक्षकान्।
भ्रमयित्वा प्रविश्याथ स्नानकोष्ठं ततोचलत् ॥ ८४४ ॥

धात्रेयैर्विहितं संधिभेदस्थानमुपेत्य सः।
हंसः क्रौञ्चान्तरमिव निःसृतोथ महम्मदः ॥ ८४५ ॥

रोषादिव स्तुतिं हर्तुमुत्पतन्निर्झराम्भसाम्।
भृगोरिव ततो दुर्गाद्ददौ झम्पामकम्पितः ॥ ८४६ ॥

अशक्नुवन्नमुं रोद्धुं पाषाणरक्षिणो न च।
निर्झरास्तु तदङ्घ्रिस्थनिगडध्वनिडम्बरम् ॥ ८४७ ॥

धात्रेया मल्लदस्याथ भञ्जन्तो निगडान्दृढान्।
सूहभट्टममन्यन्त भग्नं साकं स्वबन्धुभिः ॥ ८४८ ॥

हिमगमनतः क्रान्तस्वान्तो हिमं मनुतेनलं
तटतरुसुखं नावा गच्छन्व्रजत्परिपश्यति ।
वलति नितरां विश्वं बिश्वं विवेक्ति च मूर्च्छितः
सरलहृदये शङ्काग्रस्तस्तनोत्यतिशङ्किताम् ॥ ८४९ ॥
महम्मदवदेतस्मिञ्शङ्कमानः पलायनम् ।
वृद्धं निपीतकोशोपि स मार्गेशमघातयत् ॥ ८५० ॥
हते मार्गपतौ वृद्धे सूहभट्टेन दुर्धिया ।
असन्दनिन्दमाक्रन्दत्पितरीवाखिलो जनः ॥ ८५१ ॥
ऋक्षैः संलक्षयन्नाशाविशेषं निशि निश्यथ ।
पक्षीव नीडभ्रष्टः स सूहो लोकभयाद्यात् ॥ ८५२ ॥
अहस्तस्य विहस्तस्य रात्रिरासीन्निशा दिनम् ।
विपर्येति ध्रुवं सर्वं विधौ विधुरतां गते ॥ ८५३ ॥
कारानावं समुल्लङ्घ्य चलितं तं स्मरन्मुहुः ।
महम्मदतिमिं सूहधीवरः शुचमासदत् ॥ ८५४ ॥
मन्त्रिणा सूहभट्टेन पालितैर्लोलितैर्जनैः ।
ज्ञातो दर्शनमात्रेण स्वर्यातः श्रीसिकन्दरः ॥ ८५५ ॥
श्रीसिकन्दरशाहिर्यं शोभादेव्याः स्वमात्मजम् ।
उत्पिञ्जानामभावार्थं स्वदेशान्निरवासयत् ॥ ८५६ ॥
उदीचीपतिना राजपुत्रत्वादभिनन्दितम् ।
कश्मीरानाययौ जेतुं तमादायाथ मह्मदः ॥ ८५७ ॥
तुरुष्ककटकैः साकं श्रुत्वा पिरुजमागतम् ।
व्यसृजत्तन्निरोधाय सूहः श्रीलद्दगौरकौ ॥ ८५८ ॥
मन्त्रैः श्रीलद्दराजस्य विक्रमैर्गौरकस्य च ।
सा तुरुष्कचमूः शान्ता व्याधिर्दानजपैरिव ॥ ८५९ ॥

वीतभीतिस्ततो मन्त्री कम्पनाधिपतिं व्यधात्।
लद्दराजं गौरभट्टं क्रमराज्येश्वरं च सः ॥ ८६० ॥

संध्याक्षण इवोदग्रे सूहे रञ्जितभूभृति।
नाभूतामुदितौ राजयुवराजौ रवीन्दुवत् ॥ ८६१ ॥

श्येनो हन्ति पतत्रिणो मृगपतिर्निष्पातयिष्णुर्मृगा-
न्भिद्यन्ते मणयोपि वज्रमणिना खाता खनित्रैर्मही।
पुष्पाणीव नभस्वता ग्रहगणाः सूर्येण निर्धूनिताः
प्रायेणात्र विलोक्यते परिभवत्रासः सजातीयतः ॥ ८६२ ॥

द्विजातिपीडने तेन प्रेरितोपि मुहुर्मुहुः।
श्रीसिकन्दरभूपालः करुणाकोमलाशयः ॥ ८६३ ॥

यवनाब्धिमहावेलां यामकार्षीत्कथञ्चन।
उदलङ्घि द्विजातीनां तेन दण्डस्थितिस्ततः ॥ ८६४ ॥

दर्शनान्तरविद्वेषी प्रदोषस्तमसां निधिः।
यागयात्रादि नागानां दुर्वृत्तः स न्यवारयत् ॥ ८६५ ॥

शङ्कमानः कृतातङ्कसंकोचानां द्विजन्मनाम्।
विदेशगमनाज्ञातिरक्षामक्षाममत्सरः ॥ ८६६ ॥

मोक्षाक्षरं विना मार्गो दातव्यो नैव कस्यचित्।
इत्यादिशदशेषान्स मार्गरक्षाधिकारिणः ॥ ८६७ ॥

ततो मीनानिव व्याधो दत्तबन्धे सरिज्जले।
लोकानप्यतिदुर्जातो देशेस्मिन्न्यग्रहीत्तराम् ॥ ८६८ ॥

तद्भयानलजं तापं पापं च बहवो जनाः।
अग्निज्वालाप्रवेशेन सहसैव न्यवारयन् ॥ ८६९ ॥

केचिद्विषेण पाशेन परे तोयेन चापरं।
भृगुणा वह्निना चान्ये जना भीत्या विपेदिरे ॥ ८७० ॥

राजद्रोहिसहस्रेण रक्षितुं राजवल्लभः ।
न त्वेकमशकल्लोकमेतस्मिन्द्वेषदीक्षिते ॥ ८७१ ॥

दुर्वहत्वेन निन्दन्स राज्यभारग्रहं खलः ।
अश्लाघत जनाक्रन्दश्रवणानन्दलाभतः ॥ ८७२

गृहाद्भूयैव लोकानां पङ्क्तिर्जात्यभिमानिनी ।
रुद्धमार्गात्ततो देशादपमार्गैरपासरत् ॥ ८७३ ॥

त्यक्त्वापि पितरं पुत्रस्तं पिता चागमज्जनः ।
सूहान्तके कृताक्षेपे विदेशं परलोकवत् ॥ ८७४ ॥

क्ष्मा रूक्षा क्षाममशनं व्यायामो वेदनामयः ।
जीवन्नरकता तेषां विद्वेषोभून्महात्मनाम् ॥ ८७५ ॥

धाटीफणीन्द्रभीतीव्रतापस्वल्पाशनान्तरैः ।
मार्गे न कैर्द्विजैर्मृत्युलाभात्सुखमलभ्यत ॥ ८७६ ॥

क्व च स्नानं क्व च ध्यानं तपः क्व च जपः क्व च ।
भिक्षार्थमटतां ग्रामानगात्कालो महात्मनाम् ॥ ८७७ ॥

लोकानामुपकारोभूदपकारमुखादहो ।
यत्तन्निर्वासिताः सर्वे पापं तीर्थेष्वनाशयन् ॥ ८७८ ॥

विदेशमागताः शुष्यत्कलत्रत्राणचिन्तया ।
म्लेच्छवेशा द्विजाः केचित्कश्मीरेष्वेव चाभ्रमन् ॥ ८७९ ।

विच्छेतुमिच्छता विद्यां तेनापहृतवृत्तिभिः ।
लडितं प्रतिवेश्माथ पिण्डीलोभाज्जनैः श्ववत् ॥ ८८० ॥

तुरुष्कदर्शने भक्त्या न तु द्वेषेण स द्विजान् ।
व्यप्लावयदतश्चास्मिन्हत्या न प्रजगल्भिरे ॥ ८८१ ॥

इत्याख्यानेन वै तेषां स तस्य परिहारदः ।
द्वेषद्योतनशक्तानां कार्याणामेव दर्शनात्तु ॥ ८८२ ॥

रत्नाकरं यमाश्रित्य ब्राह्मणा जगतीभृतः ।
पक्षरक्षां व्यधुः सोभूत्क्षुद्रभट्टोस्य वल्लभः ॥ ८८३ ॥

मलानोर्देननामानं यवनानां परं गुरुम् ।
वैदग्ध्याच्छङ्कमानः स द्रोहीति तमबन्धयत् ॥ ८८४ ॥

यतः प्रभृति स प्रापद्राज्यमच्छत्रचामरम् ।
ततः प्रभृति रोगार्तिरिव दर्शनदूषणा ॥ ८८५ ॥

स्वप्नेपि नात्यजत्सूहभट्टं घट्टितवैरिणम् ।
भोगः सद्वासना चातिशुद्धानां तपसां फलम् ॥ ८८६ ॥

तस्यैव फलपूर्णानामृतूनामिव मन्त्रिणाम् ।
मानस्य हानिसंपत्ती भास्वतोधीनतां गते ॥ ८८७ ॥

एकस्मिञ्शाहिखाने स दृष्ट्वा मन्त्रपराक्रमौ ।
अत्यन्तचिन्ताचकितो निद्रां नापत्कदाचन ॥ ८८८ ॥

पश्यन्नेवाबिलं सूहसर्पं सविषया दृशा ।
शाहिखानप्रदीपोभूत्तमः संहर्तुमक्षमः ॥ ८८९ ॥

जनातिपीडया शास्त्रनिन्दया द्रोहचिन्तया ।
चिकित्सया च तस्याब्दैर्यातं त्रिचतुरैस्तथा ॥ ८९० ॥

दायवानिव दोषोस्य हेतुमात्रपरीक्षया ।
संवृतौजा व्यलम्बिष्ट शाहिखानस्य बाधने ॥ ८९१ ॥

वलीमुखमनोज्ञः स प्रजाभाग्यबलोदयात् ।
अनैषीद्भ्रमतां शाहिखानचिन्तामणिं न च ॥ ८९२ ॥

प्रजापुण्योदयेनैव प्रेरितो दुष्कृतोत्थितः ।
क्षयामयो दुश्चिकित्स्यो द्विजराजमशोषयत् ॥ ८९३ ॥

अनालोक्यैवेन्दोरुदयमगमिष्यद्यदि शमं
समन्तान्नादित्योपलदहनराशिव्यतिकरः ।

किमद्राक्ष्यन्नार्यं तदुदयवशास्रावतुहिन-
द्युतिग्रावाम्भोभिः कृतधरणितापोपशमनैः ॥ ८९४ ॥
वर्षांस्त्रिचतुरानन्यार्जीवेच्चेत्स न किं ततः ।
शाहिखानोदये पश्येदिहैव स्वांहसां फलम् ॥ ८९५ ॥
जीवत्येव ततः सूहभट्टे भीत्या पलायितम् ।
विश्वास्य लद्दराजं द्राक् हंसगौरौ बबन्धतुः ॥ ८९६ ॥
श्रीधेनौ रागिणौ तौ द्वौ मदोदग्रौ वृषाविव ।
अन्योन्यशृङ्गभङ्गार्थं प्रावर्तेतां द्विजे मृते ॥ ८९७ ॥
कारया मोचिते लद्दराजे हंसेन संयति ।
प्राणांस्त्यक्त्वा गौरभट्टः सुरस्त्रीणां मुदं व्यधात् ॥ ८९८ ॥
त्यक्त्वा गत्यन्तराभावात्करिकर्णविलोलताम् ।
पुंश्चल्येव पतिर्वृद्धो भेजे हंसस्तदा श्रिया ॥ ८९९ ॥
बालोपि शाहिखानोस्य नोत्सेकं सोढवान्पुनः ।
शशीव तिमिरस्फारं न हि तेजो वयोनुगम् ॥ ९०० ॥
ठक्कुरैः सह संमन्त्र्य युवराजोथ मन्त्रवित् ।
लद्दराजं विनिघ्नन्तं हंसभट्टं रणेवधीत् ॥ ९०१ ॥
शाहिखानं प्रजारागो निम्नं पय इवागमत् ।
अमन्दचूतसंपत्तौ कुन्दं निन्दन्ति षट्पदाः ॥ ९०२ ॥
युवराजं जयोदग्रं परिरब्धुं समुत्सुका ।
राज्यश्रीः समयालाभाच्चिन्ताकुलमवर्तत ॥ ९०३ ॥
स्नेहाद्विदग्धभावाच्च प्रजारागभरादपि ।
अधिकारभरं राजा युवराजे समार्पिपत् ॥ ९०४ ॥
मीरकेसारसंज्ञस्य तुरुष्कस्याथ दुर्मतेः ।
द्विपस्येव मदान्धस्य द्विष्टोभूत्तद्गुणाङ्कुशः ॥ ९०५ ॥

सुचिरं मलिनै राज्ञो मानसं वारिदैरिव ।
पैशुन्यवर्षिभिर्नेतुं मालिन्यं न स्म शक्यते ॥ ९०६ ॥

भक्ते दक्षेनुजे स्निग्धे भूभृदाश्रितवत्सलः ।
अतिप्रेरणया तेषां राज्येप्युद्विग्नतामगात् ॥ ९०७ ॥

उन्मग्न इव भोगेषु निमग्न इव सूक्तिषु ।
स मह्मद्खानं च शाहिखानमथाब्रवीत् ॥ ९०८ ॥

अनर्थितर्पणं वित्तं चित्तमध्यानदर्पणम् ।
अतीर्थसर्पणं देहं पर्यन्ते शोच्यतां व्रजेत् ॥ ९०९ ॥

दिग्गजेष्विव युष्मासु भूभारं न्यस्तवानहम् ।
पुरुषोत्तमसेवार्थै यते शेष इवापरः ॥ ९१० ॥

शाहिखानार्णवः प्रेममन्दरान्दोलितस्ततः ।
वार्णी सुधाकरकलामीश्वराय नवामदात् ॥ ९११ ॥

अस्तु संदेहसंदोहा दूरे तीर्थकदर्थना ।
द्वारं यशःसुकृतयोः प्रजापालनमस्तु वः ॥ ९१२ ॥

चिरस्य पालितां पित्र्यां हित्वा निःशरणां महीम् ।
नैर्घृण्येनैव शूरस्त्वमाशङ्क्यैवाङ्क्यसे खलैः ॥ ९१३ ॥

देवस्य यदि तीर्थार्थमुत्कण्ठा वर्ततेतराम् ।
आराधकानामस्माकं किमन्यत्कार्यमुच्यताम् ॥ ९१४ ॥

व्यक्तमित्युक्तवत्येव युवराजे नरेश्वरः ।
ईषत्स्मितरुचा चारु पुनर्वाचमवोचत ॥ ९१५ ॥

प्रजानुपालनात्पुण्यं केवलात्कियदर्ज्यते ।
रसायनानामग्र्यं यदनेकरसचर्वणम् ॥ ९१६ ॥

देहात्पृथग्विवसतो मद्भुजस्येव ते बत ।
दृष्ट्वा पराक्रमं शङ्का मदशक्तौ कथं भवेत् ॥ ९१७ ॥

एतावदपि वाक्यं मे यदि नैवानुतिष्ठसि ।
त्वयि संकल्पिताः शेषास्तदाशाः सन्तु दूरतः ॥ ९१८ ॥
निर्बन्धेनेति जल्पन्स तीर्थार्थे धरणीपतिः ।
युवराजं हठाद्राज्यभारमग्राहयच्चिरात् ॥ ९१९ ॥
श्रीजैनोल्लाभदीनाख्यः सुरत्राणोभवद्भवान् ।
चिरं राज्यं क्रियादेवं राजास्याशिषमभ्यधात् ॥ ९२० ॥
तीर्थदर्शनलोभेन स्वदेशान्निरगान्नृपः ।
न पुनर्युवराजस्य चित्तात्प्रेमार्गलाञ्चितात् ॥ ९२१ ॥
कोशसाराणि रत्नानि वाजिरत्नानि चार्पयन् ।
भ्रातरं वसतीर्द्वित्राः सोन्वयात्प्रेमगौरवात् ॥ ९२२ ॥
मार्गे क्लेशं प्रयत्नेन सिद्धिं तीर्थफलाल्पताम् ।
उक्त्वा मार्गे खला राज्ञस्तीर्थश्रद्धामखण्डयन् ॥ ९२३ ॥
स्वजामातुस्तिरस्कारं मन्यमानेन मानिना ।
मद्रेन्द्रेणाथ भूपालो हठात्तीर्थान्निवारितः ॥ ९२४ ॥
प्राप्तायां शरदि श्रेष्ठदशायामिव भूपतिम् ।
मद्रराजस्तमादाय कश्मीरान्प्रत्यगात्ततः ॥ ९२५ ॥
भ्रातुरागमनात्तुष्ट्या मद्रासारग्रहाद्रुषा ।
नवराजः प्रसादे च कालुष्ये च निमग्नवान् ॥ ९२६ ॥
देवस्योपद्रवं कार्षीर्मा मद्रेन्द्रचमूरिति ।
इयेष ठक्कुरं राजा तं निरोद्धुं विसृष्टवान् ॥ ९२७ ॥
युद्धं विना निवर्त्तिन्यां सेनायां मद्रभूपतेः ।
आज्ञां विनाक्षमो योद्धुं व्यावर्तत स ठक्कुरः ॥ ९२८ ॥
क्षुद्रेष्वथ स मद्रेषु युवराजो महामतिः ।
भ्रातुः स्नेहाद्रुषं त्यक्त्वा राज्यत्यागं स्वयं व्यधात् ॥ ९२९ ॥

लब्धस्तं दिवसावसानसमये सूर्यस्य तेजो निजं
प्रत्यूषे प्रतिपादयन्नतिशयश्लाघ्यस्वतेजा भवन्।
वह्निर्यज्वकुलैस्ततोपि दिवसे श्रद्धानुबन्धाकुलै-
स्तेजोवृद्धिमुपा नवेन हविषा यज्ञेषु संतर्प्यते ॥ ९३० ॥
ठक्कुरैरन्वितो राजा पवनैः कुसुमैरिव।
कश्मीरेभ्यो गतैः सर्वैर्देशाधीशैस्ततस्ततः ॥ ९३१ ॥
सुखं तावद्गाहिष्ट वीतनक्रां नदीमिव।
ठक्कुरैरुज्झितां मद्रचमूः कश्मीरमेदिनीम् ॥ ९३२ ॥
अथ विस्तीर्णमाक्रान्तमालिशाहेन भूभुजा।
पित्र्यं सिंहासनं तेन न तु सज्जनमानसम् ॥ ९३३ ॥
उद्यच्छेत कथं जडद्युतिरहो दूरोल्लसल्लाञ्छनो
गच्छेद्दीप्तकरो न चेद्दिनकरो लोकान्तरं स्वेच्छया।
वीरेणात्यवहेलया विरचितोपेक्षो जडः कातरः
संभाव्य स्वपराक्रमेण विजयं विश्वं तृणं मन्यते ॥ ९३४ ॥
शाखाभङ्गेन सच्छायमुद्यानं प्लवगा इव।
मण्डलं क्षोभयामासुस्तुरुष्का राजसेवकाः ॥ ९३५ ॥
कातराणाम भूपालादनिष्पन्ननियन्त्रणः।
यवनो मीरकंसारो व्यधान्मण्डलविप्लवम् ॥ ९३६ ॥
अकार्षीन्मलिनो भृङ्गः संकुचन्तीरिवालिनीः।
पौरनारीरनार्यः स हठसंभोगदूषिताः ॥ ९३७ ॥
महाकर्दमदैनान्धैः पङ्कसंकुलतां भजत्।
अक्षोभि मण्डलं स्वच्छैः सरो मत्तगजैरिव ॥ ९३८ ॥
मन्त्रिमन्त्रैरवार्याणां दिवसंप्यनिवर्तिनाम्।
रक्षसामेव काश्मीरास्तदा रक्षनवशं गताः ॥ ९३९ ॥

अराजकं वरं राज्यं न स्वामी तादृशः पुनः ।
अभूषणो वरं कर्णो न पुनर्लोहकुण्डलः ॥ ९४० ॥
हिमादग्निस्तमः सूर्याच्छिला व्योम्नस्तदापतत् ।
यत्पालकोपि भूपालः सर्वलोकक्षयोभवत् ॥ ९४१ ॥
सद्म तुङ्गं वरो वाजी स्वच्छं वासो मणिर्महान् ।
स्वीकृतं यवनैस्तत्तद्यद्यच्छोभावहं प्रभोः ॥ ९४२ ॥
अकार्षीत्पञ्चषाण्मासान्राज्यं स जडनायकः ।
प्रजापापविपाकेन न पुनः स्वेन कर्मणा ॥ ९४३ ॥
मालिन्यं सुमनःपथे प्रथयते दैन्यं निधत्ते दृशः
सूर्यालोकतिरस्क्रियां च कुरुते संहारमाशा नयन् ।
उद्रिक्तः कमुपद्रवं न तरसा कुर्वीत धूमोद्गमो
नोद्योतेततरां शिखी यदि महाज्वालाकलापाकुलः ॥ ९४४ ॥
श्रीसिकन्दरदत्तस्य राज्यस्य ऋणमात्मनः ।
निवारयितुकामेन स्वलक्ष्मीफलकाङ्क्षिणा ॥ ९४५ ॥
मद्रेन्द्रद्वेषपूर्णेन खुःखुरस्वामिना ततः ।
नवराजोर्थितो दूतैर्निजदेशागमं प्रति ॥ ९४६ ॥
नक्रो न चेज्जलनिधेर्बहिरभ्युपेया-
त्काकस्त्यजेन्न वनपादपमुन्नतं चेत् ।
आखुर्न चेद्गहनगर्तगुहां विमुञ्चे-
द्धर्तव्यतां कथमवाप्नुयुरेव तत्ते ॥ ९४७ ॥
आश्रयो युवराजस्य मद्द्विषो दीयतेमुना ।
जस्रथं प्रतिभूपालः क्रोधादित्यभ्यषेणयत् ॥ ९४८ ॥
म्लेच्छच्छादितमाहात्म्यैरुद्विग्नैः सचिवैर्निजैः ।
अनिषिद्धोधममतिर्धूर्तैरुभयवेतनैः ॥ ९४९ ॥

युक्त्योपोद्वलितश्रद्धस्तथा द्वैराज्यजीविभिः।
नवराजोदयं लेखमुखेन प्रापयिष्णुभिः ॥ ९५० ॥
प्रसादलोभाद्यवनैरतिमात्रकृतस्तुतिः।
नवराजजयोद्रेकश्रवणभ्रष्टसाहसः ॥ ९५१ ॥
स्वसैन्यैर्दैन्यचकितैर्निन्द्यमानोद्यमो नृपः।
मलेकं जस्रथं जेतुं प्रस्थानमकरोत्ततः ॥ ९५२ ॥
अभ्यमित्रीणतां तस्य कश्मीरेन्द्रस्य गच्छतः।
आसीन्मित्रस्य सांमुख्यं न मित्राणां महीभुजाम् ॥ ९५३ ॥
स्वस्यात्यौन्नत्यमालस्य शङ्कमानोथ पातकम्।
खश्याकादः समं मन्त्रममन्त्रयत मन्त्रिभिः ॥ ९५४ ॥
मन्त्रविक्रममुख्यानि लक्षणानि क भूभुजाम्।
अयं बालिशभावस्य भाजनं क जनाधिपः ॥ ९५५ ॥
अस्माभिर्निहिताश्चास्मिन्नुपदेशा हिताश्रयि।
प्रतीपं यान्ति शशिनः पङ्कजे किरणा इव ॥ ९५६ ॥
प्रागेव युवराजोभूदजय्योसह्यसाहसः।
विशेषेणाद्य मद्रेशद्वेषाज्जस्रथमानिनः ॥ ९५७ ॥
राज्याश्रयेषु नास्मासु विश्वासी नूतनो नृपः।
हारलुब्धस्य दाम्नस्तु हारो न मणिभृत्फणी ॥ ९५८ ॥
तस्मादस्माभिरेतेन युवराजो विजीयते।
योग्याः पाहुणकेनैव गृहे घ्नन्ति भुजङ्गमम् ॥ ९५९ ॥
जीयमाने नरेन्द्रेण युवराजे निरङ्कुशाः।
आयान्तु मण्डलं सर्वे साधयामश्चिकीर्षितम् ॥ ९६० ॥
इति संमन्त्र्य मन्त्री स युवराजाभियोजने।
सोद्यमस्य नरेंद्रस्य हेतुकर्तृदशामगात् ॥ ९६१ ॥

यत्र यत्रागमन्म्लेच्छकटकः स मदोत्कटः ।
तत्र तत्र रजोव्याजात्तमो मूर्तं स्म दृश्यते ॥ ९६२ ॥
पाल्लीयेषु देशेषु राजपुर्यादिपूर्वतः ।
परदेशेष्विवाकार्षीत्स लुण्ठनपरास्रवम् ॥ ९६३ ॥
प्राप्तेथ मुद्गरव्यालनामस्थानं महीपतौ ।
संदेशमित्यमन्दौजाः प्राहिणोन्मद्रभूपतिः ॥ ९६४ ॥
पत्तिलोकः ससंपत्तिर्वाजिनो वेगराजिनः ।
भटा रणोद्भटाः सन्ति कटके तव यद्यपि ॥ ९६५ ॥
तथापि च्छलवद्धेषु प्रसिद्धेषु महीतले ।
यूयं खुःखुरयुद्धेषु नैव नाम प्रगल्भथ ॥ ९६६ ॥
वयमेव तु जानीमः खुःखुराणां रणच्छलम् ।
अहिरेव भुजंगस्य पदं जानाति नेतरः ॥ ९६७ ॥
अतो यावद्वयं प्राप्तास्तत्सेवाविधिसिद्धये ।
भवद्भिस्तावदत्रैव स्थातव्यं पर्वतोपरि ॥ ९६८ ॥
मद्रेशस्य स संदेशो मन्दैर्यवनपुङ्गवैः ।
स्वयशोलब्धये ज्ञातो मदसंमूढदृष्टिभिः ॥ ९६९ ॥
राज्ञि मूढेवतीर्णेथ मानादिव महीधरात् ।
ध्वजैर्वायुचलैर्यातं खुःखुरेशबलाद्भिया ॥ ९७० ॥
धावदश्वबलक्षोदात्तनीयसि महीतले ।
हर्षभीरससंभेदे मज्जति स्म फणीश्वरः ॥ ९७१ ॥
अश्वक्षुण्णेस्रसंसिक्ते भूतलेसिकुशाश्रिते ।
वीराः प्राणान्प्रतापाग्नौ तत्राजुहवुराहवे ॥ ९७२ ॥
आलिशाहस्ततो राजा सिन्धौ प्रवहणं यथा ।
अभाग्यदुर्मरुद्वेगाद्भज्यते स्म रणार्णवे ॥ ९७३ ॥

विश्वान्धंकरणान्धकारनिकरग्रस्तस्य सूर्योदयं
हेमन्ते हिममारुतैर्हतधृतेः पुष्पाकराभ्यागमम् ।
दुष्टक्ष्मापतितर्जितस्य जगतो निर्दोषक्लेशं प्रभुं
लोकेशो जनयन्नवनीति नितरां कारुण्यमत्युज्ज्वलम् ॥९७४॥

श्रीजैनोल्लाभदीनोथ कश्मीरानपकल्मषः ।
अनुकूलां विधातेव प्राविशद्विजयार्जितः ॥ ९७५ ॥

सतां स्तुत्या दिशो भेर्या सुखान्यनुनयन्नयम् ।
पौराणां प्राञ्जनः पश्चाद्राजधानीं नृपोविशत् ॥ ९७६ ॥

श्रीनैर्मल्यं जनस्याहो जातं राज्ञोभिषेकतः ।
प्रतापो वैरिणां शान्तस्तस्मिञ्शस्त्राणि बिभ्रति ॥ ९७७ ॥

लब्धीतिः पूर्वराजेषु कुण्ठोत्कण्ठाः प्रजा व्यधात् ।
गुणातिशायिनी या च शर्करेक्षुरसेष्विव ॥ ९७८ ॥

पूर्वराजव्यवस्थाः स विनष्टा नवयन्नभूत् ।
शिशिरोपहता वल्लीर्वसन्त इव भूपतिः ॥ ९७९ ॥

परस्पराधिकं शत्रूञ्जयद्भिर्दुर्जयानपि ।
शस्त्रैर्मन्त्रा जितास्तस्य मन्त्रैः शस्त्राणि च प्रभोः ॥ ९८० ॥

कान्त्याङ्गं वदनं वाचा श्रियोरः क्षमया मनः ।
श्रितं पश्यन्त्यगाद्दूरं कीर्तिरीर्ष्यावशादिव ॥ ९८१ ॥

राज्ञः कलिदशामध्ये धर्म्या साम्राज्यपद्धतिः ।
अन्तर्दशेव शुशुभे शुभा कृतयुगस्य सा ॥ ९८२ ॥

भोगे सखा नये मन्त्री विवेक्ता शास्त्रनिर्णये ।
श्रीमहम्मदखानोभूत्कश्मीरेन्द्रस्य सोदरः ॥ ९८३ ॥

किमन्यद्राज्यमेवासीच्छत्रचामरवर्जितम् ।
श्रीमहम्मदखानस्य कश्मीरेन्द्रप्रसादतः ॥ ९८४ ॥

वसन्त इव कामस्य भूपतेरभवत्सखा ।
खुःखुराधिपतिस्तस्य भृत्येष्वभ्यधिकं प्रियः ॥ ९८५ ॥
दुर्व्यवस्था निवार्याहो देशेस्मिन्म्लेच्छनाशिते ।
इति राज्यपरिप्राप्तिफलं यावदचिन्तयत् ॥ ९८६ ॥
तावद्द्रोहोचितं कर्म द्रोग्धारो राजवल्लभैः ।
अपृष्ट्वैव महीपालं नीता वीतभयैः स्फुटम् ॥ ९८७ ॥
यशो दिशि श्रियं साधौ सुखं लोकेषु रोपयन् ।
व्यधात्प्रक्रमभङ्गं तं यच्छत्रूनुदमूलयत् ॥ ९८८ ॥
एकान्ता तिग्मता भानोर्म्रदिमा शशिनः पुनः ।
स द्वौ जेतुमिवापुष्यत्तत्संसर्गमयीं श्रियम् ॥ ९८९ ॥
असंख्यानत्र संक्षिप्ते तद्गुणान्वर्णयामि किम् ।
शृगालानां गुहामध्ये कथं हस्तिपतिर्वसेत् ॥ ९९० ॥
तस्माच्छैलेन्द्रवच्चित्ते मुकुरे सूर्यविम्बवत् ।
न्यस्यामि तद्गुणाख्यानमत्र चित्रे त्रिलोकवत् ॥ ९९१ ॥
शीतोष्णयोरिवोर्जादौ विषुवेहर्निशोरिव ।
तस्य मानोभवत्तुल्यः स्वे परे वापि दर्शने ॥ ९९२ ॥
राजा वणिगिवात्यर्थं तुलायाः पुण्ययोरिव ।
साम्यभङ्गं दर्शनयोर्नाक्षमिष्ट कथंचन ॥ ९९३ ॥
शान्ते सिद्धाश्रमे सिंहैर्मृगा इव न पीडिताः ।
तुरुष्कैः पुष्कलभयैर्ब्राह्मणाः पूर्ववत्तदा ॥ ९९४ ॥
दोषाकरेण सूहेन येषां संकोचिता स्थितिः ।
व्यकाशयत्ततो भास्वान्गुणिनस्तान्महीपतिः ॥ ९९५ ॥
रन्ध्रैरधोगतिं प्राप्ता कुल्येवोद्धृत्य भूभुजा ।
विद्या प्रवाहिता तेन गुणिना गुणिरागिणा ॥ ९९६ ॥

दोषच्छेदकरै राजा क्रमाद्भिषगिवानलम् ।
कश्मीरेषु सदाचारमदीपयदुपक्रमैः ॥ ९९७ ॥

अहंकारागदंकारो राजा प्रकृतिवृद्धये ।
दर्शनानां स धातूनामिवोल्लूनमशीशमत् ॥ ९९८ ॥

कलेर्धर्मेण व्यच्छेदि मात्स्यन्यायप्रवर्त्तनम् ।
अष्ट लोकेशतेजोंशधारणस्यास्य लक्षणम् ॥ ९९९ ॥

स सूहभट्टसंस्पर्शदुष्टायाः शुद्धये भुवः ।
प्रतापाग्निं ध्रुवं दीप्तमहाकाशमजिज्वलत् ॥ १००० ॥

राज्ञः संचिन्वतो मन्त्रप्रपञ्चे पञ्चधा स्थितिम् ।
जिगीषयेव तस्यारिवर्गः पञ्चत्वमाश्रयत् ॥ १००१ ॥

अनित्यबाह्यविद्वेषिनिर्जयस्तुतिसंस्तवः ।
नित्यान्तःस्थारिसंहर्तुस्तस्य प्रत्युत गर्हणा ॥ १००२ ॥

शक्तोपि काश्यपीशक्रः शक्यानेवाभ्यषेणयत् ।
व्योम्नि यात्रां करोत्यर्कः सतारे न तु सोडुपे ॥ १००३ ॥

नाजिगीषत्स तेजस्वी शत्रून्विभवतृष्णया ।
हरिर्मांसादिलोभेन हिनस्ति न हि हस्तिनः ॥ १००४ ॥

शैलेषु तद्द्विषो भानुप्रतापाधिदवश्रमैः ।
प्रायश्चित्तीयितुं पञ्चतपस्त्वं ध्रुवमाश्रयन् ॥ १००५ ॥

प्रावर्तिष्ट महिष्ठोपि नोत्पथेन स जातुचित् ।
राकेन्दुर्न निशारम्भं विना जात्वभ्युदेति यत् ॥ १००६ ॥

गर्वं प्रवृद्धा वास्तव्या हीना मैव क्षयं गमन् ।
इति नीतिविदा राज्ञा तेभ्यो बलिरगृह्यत ॥ १००७ ॥

वैरिकीर्तिर्जुहोतु स्वं विक्रमस्य वियोगतः ।
बताहौषुर्द्विषः स्वं तत्प्रतापे विरहाच्छ्रियः ॥ १००८ ॥

ढिल्लीशपीडितं जातु जसरथं शरणागतम् ।
द्रोणीगुहासु सोरक्षत्तमोद्रिर्भास्करादिव ॥ १००९ ॥
तस्मिञ्शासितरि क्षोणीं विनेतरि दुरात्मनाम् ।
जयापीडपुरस्थस्य भूमिदेवस्य कस्यचित् ॥ १०१० ॥
सस्यग्रासाभिलापाद्वा विधातुर्वा नियोगतः ।
कदाचित्काप्यगाद्धेनुर्मूर्तेवाशा सुधाभुजाम् ॥ १०११ ॥
गतो मडवराज्यं स तीर्थस्नानाय जातुचित् ।
स्वां परिज्ञातसंकेतां गां परिज्ञातवान्द्विजः ॥ १०१२ ॥
सनिश्चयं गृहं यान्तीं सायं तामनुगम्य गाम् ।
विवादमकरोद्धेद्स्वामिना सह तत्र सः ॥ १०१३ ॥
तौ लोभनिश्चयग्रस्तावशान्तकलहावुभौ ।
महीपालसभास्थाने विवादं कर्तुमुद्यतौ ॥ १०१४ ॥
तयोरशक्तयोर्जेतुमुपपत्ति परस्परम् ।
शृङ्गाटानि परीक्षार्थं गोरग्रे व्यकिरन्नृपः ॥ १०१५ ॥
सा बाल्ये असनाभ्यासाच्छीघ्रमाघ्राय सस्पृहा ।
गोरक्षुद्भ फलानीव न तु तत्संततिच्छिदम् ॥ १०१६ ॥
सभायां राजनैपुण्यं स्तुवत्यां कृतनिश्चयात् ।
दण्डेनाजिग्रहद्दण्ड्यं भाण्डवं राजा द्विजन्मनाम् ॥ १०१७ ॥
तस्य दाक्षिण्यदक्षस्य प्रजानां हितहेतुना ।
पुत्रे मन्त्रिणि मित्रे वा दुष्टे नालक्ष्यत क्षमा ॥ १०१८ ॥
अपराधं विना जायां क्षीबो निघ्नन्प्रियोपि सन् ।
मीरशायोपि यवनो वधं भूपेन लम्भितः ॥ १०१९ ॥
शत्रुपक्षे निकारं स क्षिपन्द्विषतिपुरन्दरः ।
अकरोदादरं नित्यं यागिनां च निर्योगिकाम् ॥ १०२० ॥

पराक्रमश्च नीतिश्च तस्यान्येषां च भूभुजाम्।
करुणा च विवेकश्च यस्मिन्राजनि राजति ॥ १०२१ ॥
कामो वियोगिवर्गस्य करोत्यपचितिं सदा।
निर्विकारः स्मयो योगिवर्गस्यापचितिं व्यधात् ॥ १०२२ ॥
सौम्या भीमा गुणा यस्मिन्नवसन्नवसंगमम्।
कान्यत्र सागराद्दृष्टा विषामृतजलानलाः ॥ १०२३ ॥
चिरं स्थेयैरुपात्तोऽर्थिप्रत्यर्थिभ्यां धनग्रहः।
तेन धर्मप्रवृत्तेन सद्वृत्तेन निवारितः ॥ १०२४ ॥
केनापि हेतुना पूर्वं लौलराजद्विजन्मना।
भूप्रस्थदशके प्रस्थो विक्रीतो लेखपूर्वकम् ॥ १०२५ ॥
बालानां नोनराजादिपुत्राणां तदुदीर्य सः।
विक्रयाब्दे ब्रह्मभूयं लौलराजोगमत्ततः ॥ १०२६ ॥
नोनराजाद्यसामर्थ्यात्प्रस्थग्राहैरभुज्यत।
अविक्रीतमपि प्रस्थनवकं बलिभिश्चिरात् ॥ १०२७ ॥
एवं कृते दशप्रस्थभोगे तैर्बलिभिश्चिरात्।
नवभोगाय कपटं कृतं विक्रयपत्रके ॥ १०२८ ॥
व्यञ्जनाग्रस्थितैकाररूपज्ञानाय लेखकाः।
रेखां पूर्वं व्यञ्जनानां पश्चाद्भागे किलालिखन् ॥ १०२९ ॥
कालान्तरे लिपेर्भेदादुपर्यद्यतनाः पुनः।
व्यञ्जनानां लिखन्त्येव रेखामेकारबोधिकाम् ॥ १०३० ॥
भूप्रस्थमेकं विक्रीतमिति विक्रयपत्रके।
ते मकारस्थितैकारबोधिरेखापदे ततः ॥ १०३१ ॥
भूप्रस्थग्राहिणो धूर्ता दकारं समलेखयन्।
मकारं ते सकारं च कारयामासुरञ्जसा ॥ १०३२ ॥

भूप्रस्थमेकं विक्रीतमिति विक्रयपत्रके ।
विक्रीतं प्रस्थदशकमिति वर्णानलेखयन् ॥ १०३३ ॥
तस्मिन्राज्ञि विचारज्ञे नोनराजस्य नन्दनः ।
बलाद्धृतां भुवं राजसभायामहमाक्षिपम् ॥ १०३४ ॥
प्रत्यर्थिभिरथानीतं भूर्जे राजाज्ञया नृपः ।
युक्तिज्ञः सलिलस्यान्तर्वाचयित्वाक्षिपत्ततः ॥ १०३५ ॥
नष्टेषु नववर्णेषु पुराणेषु स्थितेष्वथ ।
भूप्रस्थमेकं विक्रीतमिति सभ्यानवाचयत् ॥ १०३६ ॥
राजा कीर्तिमहं भूमिं कूटकृद्दण्डमद्भुतम् ।
प्रजाः सुखं खला भीतिं प्रापवन्तः समन्ततः ॥ १०३७ ॥
इन्दो राहुभयं कदापि कुरुते कालः कलाः पूरयन्
सिञ्चन्संचिनुते तडिन्निपतनक्षोभं तरोर्वारिदः ।
वेधाः सत्पुरुषस्य सर्वजगतामाह्लादनायोदयं
कुर्वन्नामयदर्शनेन कुरुते भीतिप्रकर्षं क्षणम् ॥ १०३८ ॥
अवाधिष्टतमां कष्टो विषस्फोटः कदाचन ।
प्रकोष्ठं भूमिपालस्य प्रजानां हृदयं च सः ॥ १०३९ ॥
माघमासीव पुष्पाणां म्लेच्छप्रालेयबाधया ।
न लाभो विषवैद्यानां देशेऽस्मिन्नभवत्तदा ॥ १०४० ॥
यज्वा गारुडशास्त्रज्ञः शिर्यभट्टो नृपानुगैः ।
अत्रान्विषद्भिराप्तोऽत्र कूपोध्वन्यैर्मराविव ॥ १०४१ ॥
चिकित्सायां विदग्धः स म्लेच्छभीत्या व्यलम्बत ।
स्फुलिङ्गदग्धः पुरुषः स्पृशत्यपि मणिं चिरात् ॥ १०४२ ॥
स्वयं दत्ताभयो राज्ञा प्राज्ञस्तमुदमूलयत् ।
शिर्यभट्टो विषस्फोटं करीव विषपादपम् ॥ १०४३ ॥

तस्य कीर्तिः सुखं राज्ञः प्रजानां हर्षसंततिः।
प्ररोहंस्त्रीणि विस्फोटे तत्रैकस्मिन्विपाटिते ॥ १०४४ ॥

तुष्टेन भूभुजा दत्तां यथेष्टमपि संपदम्।
नैक्षिष्ट शिर्यभट्टः स यतात्मेव वराङ्गनाम् ॥ १०४५ ॥

उद्दाहपातकवशादिव निर्घृणः सन्
दग्ध्वा तृणं तृणकृशानुरुपैति शान्तिम्।
जाताम्बुवाहकरुणाप्रणयात्तृणस्य
कान्तिः पुनः शतगुणा मसृणाभिरामा ॥ १०४६ ॥

क्ष्मां संतापयता गाढमाषाढेनेव वारिदाः।
सूहभट्टेन संशुष्य पराभूता ययुर्दिशः ॥ १०४७ ॥

वर्षा मरुदिव क्ष्मापस्तद्विद्याप्रत्ययोत्सुकः।
अनाययत्स तान्सर्वान्पण्डितान्निजमण्डलम् ॥ १०४८ ॥

मुक्ताहारोपमे देशे विद्वद्रत्नानि नायकः।
कान्त्या वा सुधिया तत्र यथायोगं न्यवीविशत् ॥ १०४९ ॥

राजा संरोपितानर्घवृत्तिदानेन पण्डितान्।
अप्याययज्जलेनेव मालाकारो महीरुहान् ॥ १०५० ॥

नाशितं सूहभट्टेन यद्यत्कश्मीरमण्डले।
योजितं शिर्यभट्टेन राजप्रार्थनयाथ तत् ॥ १०५१ ॥

प्रवृत्य यागयात्रादि नागानां शिर्यभट्टकः।
तुरुष्कापहृतां भूमिं विदग्धेभ्यो न्यदापयत् ॥ १०५२ ॥

उदये दापिते तेन हिन्दुकानामखण्डिते।
शिर्यभट्टाय चुकुपुः सर्वे यवनदानवाः ॥ १०५३ ॥

महापद्मफणीन्द्राम्भःसंभेदे कुम्भकेन सः।
बद्धोपि दृतिवत्स्थित्वा यवनेन्द्रान्व्यलक्षयत् ॥ १०५४ ॥

तापो यस्याह्नि शैलाञ्ज्वलयति स रविः सायमक्ष्णापि गम्यः
स्वग्रावणः शुष्यतोह्नि द्रवयति न शशी पूरकः सायमब्धेः ।
कारुण्यादेव लोके निजमतिसकलं स्वेच्छया दर्शयित्वा
तं तद्भाग्यावसानात्प्रथममथ महांस्तूर्णमन्तर्दधाति॥१०५५॥

कलौ पातकिनां पुंसां स्पर्शदर्शनविह्वला ।
अवश्यं शारदा देवी तदान्तर्धानमाश्रयत् ॥ १०५६ ॥

मुखे स्वेदो भुजे कम्पः पादस्पर्शे विदाहिता ।
जातु जात्वभवद्देव्या नो तदा हि तथा क्वचित् ॥ १०५७ ॥

द्रोहार्जिताद्धनाद्भागं प्रसादेन नियुञ्जति ।
कश्मीरलोके सा देवी नानुग्रहपरा ह्यभूत् ॥ १०५८ ॥

दूर्वामात्रेण तुष्यन्ति विशुद्धेन हि देवताः ।
प्राणैरपि न मालिन्यदूषितैर्जातुचित्पुनः ॥ १०५९ ॥

कलिकालेपि देव्या स प्रभावोपि शमं गतः ।
जात्विल्यगान्नृपो देवीं द्रष्टुं तद्यात्रिकैः सह ॥ १०६० ॥

नदीं मधुमतीं स्नानपानाभ्यां फलयन्नयम् ।
शारदाक्षेत्रमासीदत्सीदत्परिषदाकुलम् ॥ १०६१ ॥

देवीभक्ताभयोद्युक्तो वक्तुं तच्छक्तिमुद्यतः ।
युक्तायुक्तविवेक्ता स तत्र राजा न्यविक्षत ॥ १०६२ ॥

तत्रापि तेषां दौरात्म्यदर्शनाद्विस्मितो नृपः ।
भक्तिह्रासमगाद्देव्यां यात्रिकेषु च कोपिताम् ॥ १०६३ ॥

साक्षात्त्वद्दर्शनं देवि देवानामपि दुर्लभम् ।
अस्माभिर्नार्थनीयं तत्कलिकालकलङ्कितैः ॥ १०६४ ॥

अशक्तानां भवद्रूपं निष्फलं ध्यातुमर्चितुम् ।
भक्तिभाजामनुक्रोशाद्यत्तु रूपं त्वमग्रहीः ॥ १०६५ ॥

तवास्यां प्रतिमायां चेद्व्यपेतो नैव संनिधिः ।
पवित्रयतरामद्य स्वप्ने त्वद्दर्शनेन माम् ॥ १०६६ ॥
अस्माभिश्च ततः सा त्वं यथाशक्ति निषेव्यसे ।
मिथ्याभक्तदुरात्मत्वात्त्वं चेद्दूरमितो गता ॥ १०६७ ॥
किमर्थं प्रतिमा तर्हि गर्हिता हिन्दुवैरिभिः ।
विज्ञप्येति स सप्तम्यां भाद्रे राजा जितेन्द्रियः ॥ १०६८ ॥
अशेत शारदाक्षेत्रप्रासादस्थण्डिलोपरि ।
दर्शितं न यदा स्वप्ने किंचित्संनिधिसूचकम् ॥ १०६९ ॥
राज्ञाष्टानवतौ वर्षे स्वां मूर्तिं देव्यचूर्णयत् ।
नास्यादादृशनं देवी म्लेच्छसंसर्गतो ध्रुवम् ।
स्वामी भृत्यापराधेन गर्हणीय इति स्थितिः ॥ १०७० ॥
देवीदर्शनविच्छेदि तस्य नासीद्धि किंचन ।
दया सत्यं विवेकश्च तमेवाश्रयते तदा ॥ १०७१ ॥
व्यावृत्त्य यवनानां स वनानामिव वारिदः ।
हर्षोत्कर्षवशोकार्षीन्महत्कनकवर्षणम् ॥ १०७२ ॥
यत्र दण्ड्या न दण्ड्यन्ते दुर्बलास्तस्करं विना ।
भूपतेः प्राड्विवाकत्वं स प्रापद्भट्टशिर्यकः ॥ १०७३ ॥
प्रतिजानंस्तदा कोशधनसंभवने सति ।
स्वगलच्छेदनं भट्टो मिथ्यावक्तुश्च विप्लवम् ॥ १०७४ ॥
शाखाभङ्गसमुद्भूतशब्दव्याप्तचतुर्दिशाम् ।
समुदीरयतां नूनमब्राह्मण्यं पदे पदे ॥ १०७५ ॥
द्रुमाणां फलनम्राणां जनानां नमतां गुणैः ।
छेदाद्रक्षामकार्षीत्स जिष्णुरिन्धनहेतुना ॥ १०७६ ॥
प्रतिवर्षं रौप्यपलद्वयमात्रसुदुर्ग्रहः ।
जातिरक्षार्थमासीद्यश्चण्डो दण्डो द्विजन्मनाम् ॥ १०७७ ॥

शिर्यभट्टमुखेनैव तं निवार्य नरार्यमा ।
प्रतिवर्षं रौप्यमाषं तेषां दण्डमकल्पयत् ॥ १०७८ ॥

मांसादिलोभान्निघ्नन्स मण्डलेषु विषेण गाः ।
गोमांसकुण्डीग्राह्यादिवारणात्स न्यवारयत् ॥ १०७९ ॥

पत्यौ मृत्येन्यं गच्छन्त्या विहितं भर्तृगोत्रजैः ।
स महामतिमाञ्भूम्या विप्लवं विन्यवारयत् ॥ १०८० ॥

न्यवारयत्सपुत्रीणामौर्ध्वदैहिकविप्लवम् ।
अपुत्रस्य विपन्नस्य लुब्धैस्तद्गोत्रजैः कृतम् ॥ १०८१ ॥

शिशूनां शास्त्रपाठादि सूहभट्टेन नाशितम् ।
वृत्तिदानेन विदुषां विद्यावानानयत्पुनः ॥ १०८२ ॥

विधित्सु— स्वाभि—— द्विजदेहे महीपतिः ।
व्यधत्त तिलकव्याजाद्विभागं सत्यधर्मयोः ॥ १०८३ ॥

ग्रामाणां प्रथमे वर्षे संक्रान्तं कारकातुरैः ।
पत्तलाघोषदेशेषु लोत्रदण्डं न्यवारयत् ॥ १०८४ ॥

निवार्य शाकटतुलामानकूटं चिरस्थितम् ।
अर्घव्यवस्था जन्तूनां प्रतिमासमकारयत् ॥ १०८५ ॥

बहिर्देशागतार्थानां देशकालाद्यपेक्षया ।
व्यवस्थाप्यार्थमुत्पिञ्जमच्छिनद्दिनमोषणम् ॥ १०८६ ॥

विदग्धः शिर्यभट्टोपि नोत्कोचफलमादित ।
अविनाशि पुनर्धर्मफलं वर्षोपकारतः ॥ १०८७ ॥

देहस्थैवार्थिनां ज्ञानरसविज्ञानकाङ्क्षिणाम् ।
तदिच्छासिद्धिरभवद्राज्ञः पुण्यफलाद्भुतम् ॥ १०८८ ॥

महाश्रीशिर्यभट्टस्य मुखाद्राजा न्यवारयत् ।
धर्मप्रकाशनामानं राजकाङ्कटिकं प्रभुः ॥ १०८९ ॥

दूरं निवारयामास निर्धारणपदाङ्कितम् ।
भाविनां भूमिपालानां दुर्व्यवस्थापथार्गलम् ॥ १०९० ॥
अस्थापयत्स धर्मस्थः सद्वृत्तं प्रतिपत्तनम् ।
मुषितो ग्रामसीमायां ग्रामेभ्यः प्रापयद्धनम् ।
अरण्येरण्यनाथेभ्यः पान्थस्तेन महीभुजा ॥ १०९१ ॥
हासाः श्मशानदेवीनां सूहभट्टं प्रतीव तम् ।
प्रतिस्थानं विमानानि प्रेतानामद्युतंस्तदा ॥ १०९२ ॥
म्लेच्छैरुपद्रुतां क्षोणीमक्षीणकरुणो नृपः ।
उदहार्षीत्क्रमादेवं दानवैरिव केशवः ॥ १०९३ ॥
उच्छृङ्गान्स नयन्भङ्गं निम्नानापूरयन्नृपः ।
स्वकीर्तिबीजवापार्थमनुद्घातां महीं व्यधात् ॥ १०९४ ॥
भूपतेः परदारेषु निष्कौतुकमयं व्रतम् ।
अभज्यत परं तस्य परश्रीपरिरम्भणे ॥ १०९५ ॥
सम्यग्दशबलेनाथ सर्वज्ञेन महीभुजा ।
सौगतस्तिलकाचार्यो महत्तमपदे कृतः ॥ १०९६ ॥
स शिर्यभट्टस्तिलकः स सिंहगणनापतिः ।
सोपानान्यभवन्नुच्चपदारोहे द्विजन्मनाम् ॥ १०९७ ॥
मेदिन्याखण्डलस्यासीत्पिकस्येव रसश्रिया ।
अखण्डं रसपाण्डित्यं ब्रह्मकुण्डलसेवया ॥ १०९८ ॥
कर्पूरभट्टो निर्दर्पः प्राणरक्षो महीभुजः ।
गुणिनां शरणं चक्रे स्वगुणैः सुरभिं सभाम् ॥ १०९९ ॥
पूर्वाब्दग्रहसंचारादुत्तराब्दग्रहस्थितिम् ।
रूप्पभट्टो विदन्नासीद्विनैव गणितश्रमम् ॥ ११०० ॥
श्रीरामानन्दपादानां भाष्यव्याख्या क्षणेक्षणम् ।
वीक्षते शारदा क्षोणीमेव संभ्रान्तमानसा ॥ ११०१ ॥

गान्धारसिन्धुमद्रादिभूभुजस्तस्य भूभुजः ।
ग्राम्या इवाभवन्नाज्ञाकारिणो जितवैरिणः ॥ ११०२ ॥

युद्धे जितं ततो बद्धं खुःखुरेन्द्रेण भूपतिः ।
मालदेशं मद्रराजमाज्ञया निरमोचयत् ॥ ११०३ ॥

राजा राजपुरीराजं नयज्ञः स्वपदातिभिः ।
क्षणाद्भ्रूभङ्गमात्रेण रणसूहमलोठयत् ॥ ११०४ ॥

उदभाण्डपुराधीशं सिन्धुराजोपबृंहितम् ।
स कन्दुकमिवोत्थाप्य मुहुर्मुहुरपातयत् ॥ ११०५ ॥

भोट्टभूमौ महीन्द्रेण गोग्गदेशे कदाचन ।
बाणागौरखराख्येण गुणैर्लोकाश्च रक्षिताः ॥ ११०६ ॥

समिज्जिते शयादेशे क्रूरादेशो महीपतिः ।
सुवर्णबुद्धप्रतिमा यवनेभ्यो ररक्ष सः ॥ ११०७ ॥

कषाकरङ्कषस्तस्य निकषो भोट्टतेजसाम् ।
अप्रकाशां प्रकाशोथ कुलूतनगरीं व्यधात् ॥ ११०८ ॥

केवलं हृदयं शून्यं भोट्टानां नाभवत्तदा ।
भूमिपालभयावेशात्कोशोपि चिरसंचितः ॥ ११०९ ॥

प्रकृतीनां ददद्राजा शोषाप्यायौ यथोचितम् ।
प्रत्यवेक्षामकार्षीत्स शालीनामिव कार्षिकः ॥ १११० ॥

नासहिष्टैव तच्चापं तुलां शार्ङ्गपिनाकयोः ।
दूरकार्यार्थसाधिन्या धनुष्मत्ता भुवः पुनः ॥ ११११ ॥

अस्तं यस्तमसां कुलानि बलतो नेतुं सदा वाञ्छति
क्षीणं तं वसुनाभिपूर्य शशिनं संवर्धयत्यञ्जसा ।
काश्यप्यामवकाशमात्रघटनां शाखामुखै रुन्धतो
वृक्षान्वृष्टिभरैश्च योस्य कतमो भानोस्तुलामर्हति ॥ १११२ ॥

लद्दराजसुतं राजा नोस्रथं यमवर्धयत्।
अहृतद्रविणं तं स द्रोहीति निरवासयत्॥ ११३॥
मक्कदेशागतो जातु पुस्तकाडम्बरं वहन्।
सैदालनामा यवनो राजेन्द्रं तमुपागमत्॥ ११४॥
गुणान्विकत्थमानं तं गुणिरागी नरेश्वरः।
उपागच्छत्प्रतिदिनं दर्शनायेतरो यथा॥ ११५॥
ध्वनतः पटहस्येव तस्यापश्यत्क्रमादसौ।
अन्तःसारविहीनत्वं परीक्षायां विचक्षणः॥ ११६॥
म्लेच्छमस्करिणि क्षोणीप्राणेशो निर्गुणेपि सः।
प्रेमाणं नामुचत्पुत्रे पितेव करुणामयः॥ ११७॥
प्रदोषस्येव तमसां दुर्दिनस्येव विद्युताम्।
दोषाणां बहुता तस्य प्रजाः समुदवेजयत्॥ ११८॥
तस्मिन्नवसरे कश्चिद्योगिराजो जितेन्द्रियः।
न्यविक्षतोन्नते स्तम्भे योगाभ्यासस्य सिद्धये॥ ११९॥
स्तम्भोपरि नवाहानि निराहारमपश्यतः।
तस्याशिषेव महिषी राज्ञः पुत्रमजीजनत्॥ ११२०॥
तपस्यतस्ततस्तस्य तदभून्नवमं दिनम्।
राज्ञस्त्वनवर्म पुत्रजन्मकालमहोत्सवैः॥ ११२१॥
हेमन्तान्ते पतति तुहिनं फाल्गुनेफल्गु वल्ग-
द्दीपस्यापि स्फुरति सुतरां शान्तिकालेतिदाहः।
शैत्योद्रेकं बृहति वहति ग्रीष्मकाले तुषारं
वस्तु प्रायः प्रथयति निजं धर्ममायाति नाशम्॥ ११२२॥
तपःकवचमस्पृष्ट्वा तमधो मार्गणैर्गतम्।
प्रहर्तुरिव निर्देष्टुं भविष्यन्तीं यथागतिम्॥ ११२३॥

राजमान्यं तमालोक्य कुप्यन्तं शान्तमानसः ।
निर्णयादचलद्वर्णी नयान्न तु भयोदयात् ॥ ११२४ ॥
स स्तम्भान्न महाधैर्यादवारोहन्महामनाः ।
नैवारोहज्जगद्दृष्टिं सद्यो द्यामपि योगवित् ॥ ११२५ ॥
अतिथिं योगपथिकं मावधीर्मामिति ब्रुवन् ।
म्लेच्छमस्करिणा वर्णी खड्गघातैरचूर्णत ॥ ११२६ ॥
अत्यर्थदर्शनद्वेषान्मदिरामदमोहितः ।
स म्लेच्छमस्करी योगिराजं तमवधीच्छरैः ॥ ११२७ ॥
संतप्तैर्मलिनैः स्थूलैर्जनानां तद्विलोकनात् ।
भूतले पतितं वाष्पैरपवादैश्च राजनि ॥ ११२८ ॥
पृथ्वीनाथोथ तच्छ्रुत्वा शुद्धयर्थमिव मग्नवान् ।
भीर्ह्रीशोकक्रुधाश्चर्यकृत्यचिन्तार्णवेषु सः ॥ ११२९ ॥
प्रथमोद्भूतपुत्रेपि तस्मिन्नह्नि महीभुजा ।
नास्नायि नाभ्यवाहारि न व्यवाहारि नाकथि ॥ ११३० ॥
अन्येद्युर्भूपतिः पृष्टस्मृतिज्ञगुरुकोविदः ।
हन्तुर्दण्डं वधं शृण्वन्करुणायन्त्रितोभवत् ॥ ११३१ ॥
प्रतीपं खरमारोप्य प्रतिहट्टं परिभ्रमम् ।
नरमूत्राभिषिक्तस्य कूर्चस्य परिकर्तनम् ॥ ११३२ ॥
ष्ठीवनं सर्वलोकानां प्रेतान्त्रैर्बाहुयन्त्रणम् ।
जीवन्मरणमादिक्षद्दण्डं तस्य मृषायतेः ॥ ११३३ ॥
राजनि म्लानिहीनानि दिक्सौगन्ध्यवहानि च ।
अपतन्नाकपुष्पाणि पौराशीर्वचनानि च ॥ ११३४ ॥
मद्रराजदुहित्रोः स चतुरस्तनयान्नृपः ।
यथा दशरथो राजा जनकान्तानजीजनत् ॥ ११३५ ॥

ज्यायानादामखानः स ह्राज्यखानस्तथा परः ।
खानो जस्सरथः खानो बहरामश्च संज्ञितः ॥ ११३६ ॥
हिन्दवः सूहभट्टेन बलाद्ये पीडिता भृशम् ।
परदेशं गतास्ते तु बिभ्रतो वेशकल्पनाम् ॥ ११३७ ॥
निजाचाररता नित्यं तदाचारद्विषो हृदा ।
स्वमाचारमनुष्ठातुं प्रेरिताश्च द्विजैर्बलात् ॥ ११३८ ॥
दारिताः स्वत्राणभयादुत्कोचार्पणतत्पराः ।
रक्षिता भूमिपालेन तदुपद्रववारणात् ॥ ११३९ ॥
क्षीरार्णवस्य मथनात्परतः सुधादि-
रत्नानि तान्यनुपभोगनिरर्थकानि ।
यो नीतवान्सफलतां किल पात्रदाना-
त्तुल्यः स मन्दरगिरिर्गिरिराजवर्गे ॥ ११४० ॥
नदीरवटपातेन भुवश्चाम्बु विनाफलाः ।
संयोगात्सफलीकृत्य यशश्चित्रमजीजनत् ॥ ११४१ ॥
राज्ञोत्पलपुरक्षोणौ कुल्यां प्रापय्य वप्रिणीम् ।
तयोर्निरर्थकत्वेन दूषणा विनिवारिता ॥ ११४२ ॥
नन्दशैलमरौ कुल्यामवतार्य महीपतिः ।
अस्मारयच्चक्रधरं सागरान्तर्निवासिनम् ॥ ११४३ ॥
करालम्बः सतां बिभ्रदकरालं सितं यशः ।
कुल्ययाकारयद्देशं करालाख्यं स्तुतेः पदम् ॥ ११४४ ॥
साग्रहारा द्विजा यत्र साग्रहाराश्च योषितः ।
साथ जैनपुरी राज्ञा कराले निरमीयत ॥ ११४५ ॥
अवन्तिपुरभूमौ च कान्तोदन्तेन भूभुजा ।
कुल्यावतारिता तुल्या शालिसंपत्तिशालिनी ॥ ११४६ ॥

गिरिमार्गेण गङ्गाया मानसं प्रापिते जले ।
किं पूता मानसेनेयमनया किमु मानसम् ॥ ११४७ ॥
व्यडम्बयत्स्वमूर्तिं या मानसप्रतिबिम्बिताम् ।
व्यधायि तत्तटे तेन नगरी सफलाभिधा ॥ ११४८ ॥
श्रीस्वयस्य यमानेतुं प्रज्ञा न स्फुटमस्फुरत् ।
श्रीसिकन्दरसाहोपि कुण्ठोत्कण्ठोभवत्तराम् ॥ ११४९ ॥
श्रीजैनोल्लावदीनस्तमानीय पह्रं नदम् ।
प्रासिञ्चद्विंशतिक्रोशाञ्छ्रीमान्स्वयपुरे मरुम् ॥ ११५० ॥
दुर्भिक्षव्याप्तचित्तानां विश्रान्तिजननान्नृणाम् ।
विश्रान्तिसंज्ञया कुल्या प्रसिद्धाभूत्पदे पदे ॥ ११५१ ॥
श्रीमान्स्वयपुरात्पारेवितस्तं धरणेर्नृपः ।
संयोज्य पह्रं तापव्यापदं स न्यवारयत् ॥ ११५२ ॥
आ प्रद्युम्नगिरिप्रान्तादमरेशपुरावधि ।
मठाग्रहारहट्टाढ्यां स जैननगरीं व्यधात् ॥ ११५३ ॥
स्वर्गं जेतुमिवोदस्थातुन्नतैरश्मवेश्मभिः ।
संक्रान्ता जैनगङ्गायां फणिलोकं च यागमत् ॥ ११५४ ॥
जैनगङ्गां रणस्वामिप्रासादे प्रापितां कृती ।
व्यसिस्मरत्स्मेरयशा हरिपादकुतूहलम् ॥ ११५५ ॥
पारेस्वयपुरं जैनगिरिसंज्ञां पुरीं व्यधात् ।
कैलासाचलतुल्यैर्या प्रासादैरभिभूषिता ॥ ११५६ ॥
सिद्धक्षेत्रे सुरेश्वर्यां प्रसिद्धविलसद्यशाः ।
राजधानीं निषिद्धारिर्व्यधात्सिद्धिपुरीमसौ ॥ ११५७ ॥
प्रासादशिखरे राजा मार्तण्डामरनाथयोः ।
राजधान्यौ व्यधात्सौधधौतदूरनभस्तले ॥ ११५८ ॥

सुभिक्षं स्वयराजेन पूर्वमङ्कुरितं किल।
ततः प्रभृत्यतीतेषु बहुष्वपि च राजसु ॥ ११५९ ॥
प्रजानामल्पपुण्यत्वान्नावर्धत मनागपि।
तपोबलात्पल्लवितं पुष्पितं फलितं तथा ॥ ११६० ॥
श्रीजैनोल्लाभदीनेन युगपत्तद्व्यधीयत।
तपसामतिशुद्धानां किमिव ज्ञापकं परम् ॥ ११६१ ॥
पूर्वपुण्यक्षये राज्यात्पतन्त्यन्ये महीभुजः।
तस्य जन्मान्तरे राज्यप्राप्त्यै राज्यमभूत्प्रभोः ॥ ११६२ ॥
स नदीमातृकाः कृत्वा धरणीर्देवमातृकाः।
अग्रहारान्ननु क्ष्मापो द्विजेभ्यो यददात्सदा ॥ ११६३ ॥
वराहक्षेत्रनगरविजयेशपुरादिषु।
यवनेभ्योग्रहारान्स सविहारान्स्वयं ददौ ॥ ११६४ ॥
विजयक्षेत्रवाराहक्षेत्रशूरपुरादिषु।
सत्रदानेन स त्रासमपि गोत्रभिदो व्यधात् ॥ ११६५ ॥
भूमिविक्रयभूर्जादि कृतचिह्नं महीभुजा।
निह्नवप्रागभावाय धर्माधिकारिणा कृतम् ॥ ११६६ ॥
यो जयापीडदेवेन प्राप्तो नागप्रसादतः।
स दण्डमिव तस्यादात्ताम्रं ताम्राकरो गिरिः ॥ ११६७ ॥
मणीन्खनिभ्यश्चालभ्यांस्तद्राज्ये भूरजीजनत्।
ये जैनमणयः ख्याताः पद्मरागमदच्छिदः ॥ ११६८ ॥
सरितां सैकते पीतसिकताभ्रमयं तदा।
काञ्चनं काञ्चन छायां बिभ्रल्लोकैरचीयत ॥ ११६९ ॥
सरित्सुवर्णात्षष्ठांशो ग्राह्यो भाविभिरीश्वरैः।
ताम्रपट्टेलिखद्धाज्ञावाक्यमेवं नरेश्वरः ॥ ११७० ॥

नगराधिकृतः काचडामरो दुस्तरे पथि ।
क्रोशमात्रं व्यधात्सेतुं नगरान्तः शिलामयम् ॥ ११७१ ॥
नात्मैव सेतुदानेन तेन पङ्कात्समुद्धृतः ।
सकलोपि जनो मध्येनगरं पुण्यशालिना ॥ ११७२ ॥
विषये विषये चक्रे शिर्यभट्टो मठान्पृथक् ।
अन्येपि सचिवा राज्ञो धर्मशाला बहूर्व्यधुः ॥ ११७३ ॥
पद्माकरस्य मथनाय गजाधिराजा-
वभ्युद्यतौ सततमेव तदम्बुतृप्तौ ।
तावत्कराकरि रदारदि चातिमत्तौ
कृत्वा क्षणादगमतां स्वयमेव नाशम् ॥ ११७४ ॥
मसूदशूरौ धात्रेयौ भूपतेरेकगोत्रजौ ।
द्वौ रन्ध्रान्वेषिणावास्तामन्योन्यविभवासहौ ॥ ११७५ ॥
राज्ञा तौ वारितोद्रेकौ स्नेहदाक्षिण्यशालिना ।
हत्वान्यतममुत्पिञ्जसज्जावभवतां चिरम् ॥ ११७६ ॥
कदाचिद्भूपतेरग्रे स्पृष्टः शूरेण वाक्शरैः ।
मसूदठक्कुरः शस्त्रसंन्यासं समकल्पयत् ॥ ११७७ ॥
न्यस्तशस्त्रः स रजनौ गच्छन्मितपरिच्छदः ।
रन्ध्रं लब्ध्वाथ शूरेण मसूदठक्कुरो हतः ॥ ११७८ ॥
वित्ताद्यैष्ठक्कुरैस्तस्य भ्रातृभिः ख्यातपौरुषैः ।
हन्तुमभ्यर्थितः शूरो भूपतेः प्रेमशालिनः ॥ ११७९ ॥
शूरे सानुचरे वित्तठक्कुरेण हते सति ।
प्रसादमगमत्कीर्तिष्ठक्कुराणां च धीस्तदा ॥ ११८० ॥
तथाप्तयोगिनां मानमदाद्भूलोकवासवः ।
तेषामग्रे यथा मद्रराजाद्यैर्लेडितं श्ववत् ॥ ११८१ ॥

स ददद्योगिनां भोगं योगं तेभ्योऽग्रहीन्नृपः ।
भयं दददरातिभ्यो दधावभयमप्यहो ॥ ११८२ ॥
मुद्राकर्पूरकन्थादि वारयन्योगिनां नृपः ।
कुण्डलं हेमपात्राणि दुकूलमपि दत्तवान् ॥ ११८३ ॥
छित्वा पर्वतपक्षतीरपि नवाः फेनेन हत्वाप्यहिं
कृत्वा यज्ञशतं त्रिलोकविजयी कीर्त्यो न तृप्तिं गतः ।
इन्द्रः पीतसितासितारुणहरिद्वर्णं विधत्ते धनु-
र्ज्योतिर्धूमसमीरनीरघटनामात्रेऽप्यसारे घने ॥ ११८४ ॥
भूतानां भाविनां वापि यदशक्यं महीभुजाम् ।
तदिष्टसाहसो राजा कीर्तये कर्तुमिष्टवान् ॥ ११८५ ॥
कर्तव्यं साहसं यद्यदचिन्तयदयं नृपः ।
कालस्यानवधित्वेन विपुलत्वेन च क्षितेः ॥ ११८६ ॥
तत्तत्संभाव्य साध्यं स भाविभिर्मेदिनीश्वरैः ।
दूरादब्धिमिवायातो रत्नेष्वधिकदीप्तिषु ॥ ११८७ ॥
साहसेष्वेकमादातुमपि प्राप न निश्चयम् ।
उपचारैर्दरिद्राणां बभूवोदारमानसः ॥ ११८८ ॥
न तोषितः श्रुतैराज्ञामतीतानां स साहसैः ।
अगम्येष्वपि भूपालः शैलेषु च सरस्सु च ॥ ११८९ ॥
शब्देष्वर्थेष्विव कविस्ततः समचरन्नृपः ।
वणिजामिव वाक्यानि व्यवहारसमुत्सुकः ॥ ११९० ॥
राजा नीलपुराणादीन्पण्डितेभ्यस्ततोऽशृणोत् ।
चिन्तान्तराणि संत्यज्य साहसैकसमुत्सुकः ॥ ११९१ ॥
कदाचिद्धरणीपालश्चिरमेवमचिन्तयत् ।
देहस्येव त्रिलोकस्य मुखवत्क्षितिमण्डलम् ॥ ११९२ ॥

प्रधानं तत्र कश्मीरमण्डलं नयनं यथा ।
शैलराजशिखाः पक्ष्मतुलां यत्र वहन्ति ताः ॥ ११९३ ॥
तारामण्डलवत्तत्र महापद्मसरोवरः ।
शश्वदुन्क्रमितो यत्र मैनाकान्वेषणोद्यतः ॥ ११९४ ॥
प्रतिबिम्बफलाद्भाति जाने हिमगिरीश्वरः ।
समुद्रसदृशे यत्र प्रतिबिम्बच्छलाद्रवेः ॥ ११९५ ॥
अन्तः कृतास्पदो दीप्तो लक्ष्यते वडवानलः ।
महापद्मास्पदं तत्र ज्योतिर्मण्डलसोदरम् ॥ ११९६ ॥
तदापूर्य कथंचिच्चेत्कियन्मात्रमपि क्रमात् ।
निर्माणं शक्यते कर्तुं तदा राज्यफलोदयः ॥ ११९७ ॥
अगाधसलिलच्छन्नक्रोशाष्टाविंशतिर्भवन् ।
सरोराजः स हि महानाशयो महतामपि ॥ ११९८ ॥
विचिन्त्येति स विस्रष्टुं तत्रोपायं सरोवरे ।
नागस्य गतवान्मध्यं योगीवात्मानमात्मना ॥ ११९९ ॥
सदैवोद्धतकल्लोलं महापद्मसरो महत् ।
नागाहन्त नृपाः पूर्वे तरणीभङ्गशङ्किनः ॥ १२०० ॥
तपःप्रभावाद्धैर्याद्वा कार्यगौरवतोपि वा ।
स्थलवत्सलिले तत्र स राजा त्वचरत्सुखम् ॥ १२०१ ॥
यच्चेतसा चिरतरं परिचिन्त्यमानं
चिन्तामणिः किल ददाति तदेव नान्यत् ।
चित्तस्य चापि यदगोचरतामुपैति
तत्तु प्रयच्छतितरां बत बुद्धिरत्नम् ॥ १२०२ ॥
तस्य हि क्षितिपालस्य निरालस्यमतेः सतः ।
सरसः स्थलतां कर्तुमुपायः प्रत्यभादयम् ॥ १२०३ ॥

शिलापूर्णप्रवहणैरुपर्युपरि पातितैः।
शैलशृङ्गैरिवाम्भोधिमेतदापूरयाम्यहम्॥ १२०४॥
कृताभिर्लोहनद्धाभिः पट्टीभिर्देवदारुणः।
न क्लिद्यन्ते न भिद्यन्ते शिलाप्रवहणानि यत्॥ १२०५॥
ततः प्रत्यागतो राजा वृद्धानाबद्धकौतुकः।
अपृच्छत्कारणं तस्य ते चैनं नृपमब्रुवन्॥ १२०६॥
द्वारिकेवार्णवेत्रासीत्पुरी संधिमती किल।
सुदर्शनेन सहिता सततं श्रीपतिश्रिता॥ १२०७॥
नगर्या देवता तस्या महापद्मः फणीश्वरः।
त्वमिवैतांश्चतुर्वर्णान्पुत्रवत्पर्यपालयत्॥ १२०८॥
कलिकालबलात्तत्र दुराचारनिषेविणः।
वसन्तस्तत्रवास्तव्याः प्रापुर्वृद्धिं दिनाद्दिनम्॥ १२०९॥
अथ वर्णाश्रमाचारविपर्यासानुबन्धतः।
क्रोधं नागपतिर्यातो दूषणादिव सज्जनः॥ १२१०॥
अनुज्झितनिजाचारं कुम्भकारं स कंचन।
स्वप्नेवदद्दुराचारान्पौरान्मज्जयितास्म्यहम्॥ १२११॥
नागः प्रजादुराचारक्रुद्धो ब्रोडयतीति तम्।
प्रातर्वदन्तं जहसुः पौरा मत्तमिवाखिलाः॥ १२१२॥
तदास्तिके कुम्भकारे गते तस्मात्पुराद्द्रुतम्।
नागेन्द्रो जलपूरेण सर्वमब्रोडयत्पुरम्॥ १२१३॥
यावत्पौराः पुरश्चेलुस्ते सर्वे हरिणा इव।
तावदेवाग्रमाक्रामद्दावाग्निरिव तज्जलम्॥ १२१४॥
फणाशतोल्लसद्वारिधाराशब्दभयंकरः।
नागराजोथ नगरीं वैरीवावेष्टयज्जलैः॥ १२१५॥

मन्त्रान्पठत्सु विप्रेषु जनेषु प्रणमत्सु च ।
रुदत्स्वपि च बालेषु नास्याभूद्यमवद्दया ॥ १२१६ ॥
भयाद्बालेषु पुत्रेषु कण्ठलग्नेषु योषितः ।
बाष्पमुक्ताफलैश्चक्रुः पूजां फणिपतेरिव ॥ १२१७ ॥
पादादङ्कं ततः कण्ठं ततः स्कन्धं ततः शिरः ।
प्राणा इव सुता जग्मुर्मातॄणां भयविह्वलाः ॥ १२१८ ॥
सर्वाण्यङ्गानि नारीणां शृङ्गारीवानुरागवान् ।
कम्पमानानि लोलः स जलपूरः समस्पृशत् ॥ १२१९ ॥
ह्रस्वं दीर्घं च सूक्ष्मं च स्थूलं चाणु महत्तथा ।
अन्धकार इवाच्छाद्य जलपूरो व्यजृम्भत ॥ १२२० ॥
अगाधे सलिले तस्मिन्खलस्पर्शासहस्ततः ।
फणिराजः स्थितिं चक्रे विपिने सज्जनो यथा ॥ १२२१ ॥
कालियः स हि नागेन्द्रः पदाक्रान्तो मुरद्विषा ।
शिरस्युत्पन्नपद्मत्वान्महापद्माभिधां गतः ॥ १२२२ ॥
नष्टान्योजयितुं भूयः कश्मीरानिच्छतो हरेः ।
अवतारस्त्वमेतत्ते सिध्यत्येव चिकीर्षितम् ॥ १२२३ ॥
राजा श्रुत्वेति तत्त्वज्ञः क्षणमेवमचिन्तयत् ।
एवंविधानि कार्याणि सिध्येयुः कथमन्यथा ॥ १२२४ ॥
प्रजाचारविपर्यासान्नाक्षमिष्ट पुरं फणी ।
नानिष्टं क्षमतेल्पोपि तादृशस्तु महान्कथम् ॥ १२२५ ॥
नागराजोचितच्छत्रसगोत्रमहमत्र तु ।
स्थलमात्रं यशोरत्नघटिकारम्यमारभे ॥ १२२६ ॥
उल्लोलसरसो मध्ये कल्पमाने स्थले तथा ।
पवित्रे विजने चात्र सिद्धिं यास्यन्ति साधकाः ॥ १२२७ ॥

चिन्तयित्वेति भूपालः शिलाप्रवहणैर्दृढैः ।
उल्लोलसरसो मध्यमप्यगाधमपूरयत् ॥ १२२८ ॥
हेमन्ते बिसशृङ्गाटकिषुकोद्धरणादिना ।
श्रीजयापीडकोट्टस्य ज्ञायतेगाधवर्तिता ॥ १२२९ ॥
उल्लोलस्यान्तभागेषु स्वयाकुण्डलकादयः ।
दृश्यन्ते बहवो ग्रामा विशालसदनाङ्किताः ॥ १२३० ॥
गिरयोपि निमज्जन्ति यत्र तत्र तु स व्यधात् ।
जैनलङ्कां महाटङ्कां तं निधायाधिकारिणम् ॥ १२३१ ॥
कारुण्यात्कीर्तिलोभाच्च स्वयमेवाथ भूपतिः ।
वामपार्श्वे गिरौ वारि विस्रष्टुं चिरमभ्रमत् ॥ १२३२ ॥
दृष्ट्वा निःसलिलं शैलं लेदर्यानयनोत्सुकः ।
अश्रौषीच्छास्त्रवृद्धेभ्यस्तन्मूलममरेश्वरम् ॥ १२३३ ॥
निर्विघ्नं कार्यसिद्ध्यर्थं प्रसादयितुमीश्वरम् ।
आरुरोहामरेशाद्रिमभिमानमिवाथ सः ॥ १२३४ ॥
ते लताभ्य इव म्लेच्छा नागेभ्यः शङ्कयाकुलाः ।
नान्योन्यमिव संलापं तत्र स्वक इव व्यधुः ॥ १२३५ ॥
त्वग्रोगिणामिव स्वस्थास्तुरुष्काणां वनस्थिताः ।
नागा दर्शनमप्यन्तर्नासहंत कदाचन ॥ १२३६ ॥
धैर्येणोपद्रुतो राजा शुश्रूवान्नासहिष्ट तान् ।
बालोग्निकणविप्लुष्टः पद्मरागमिवामलम् ॥ १२३७ ॥
कपीनामिव बद्धानां भीतानामपि च ध्रुवम् ।
म्लेच्छानां च दुराचारचापल्यं विन्यवर्तत ॥ १२३८ ॥
यदुद्गर्जद्भिरुद्यद्भिः सविद्युद्भिर्घनैर्घनैः ।
कोपेनेवाभवत्तेषु ततः कालमुखं नभः ॥ १२३९ ॥

कातरेष्वेव संग्रामाद्गिरेस्तूर्णपलायिषु ।
म्लेच्छेषु करकावर्षैर्नष्टधैर्येषु तत्क्षणम् ॥ १२४० ॥
मानादिव कुलीनोथ भक्त्या धैर्याद्‌विच्युतः ।
अवरूढो न शैलेन्द्रात्कश्मीरेन्द्रः कथंचन ॥ १२४१ ॥
मान्त्रिकेष्विव मेघेषु गर्जत्सु यवनोरगैः ।
त्यक्तो निधिरिव क्ष्मापो देवो नागैरशंस्यत ॥ १२४२ ॥
निवृत्त्यतामितो देव कार्यसिद्धिर्भविष्यति ।
पूजोपकरणं शंभोः प्राप्तमेव विसृज्यताम् ॥ १२४३ ॥
स्वप्ने दिव्याकृतेः पुंसः श्रुत्वेति क्षितिनायकः ।
सिद्धकार्यस्ततः प्रातः कश्मीरान्तरमाविशत् ॥ १२४४ ॥
लेदरीगिरिमार्गेण प्राप्य मार्तण्डपत्तनम् ।
इति राजा समादिक्षद्धार्मिकं शिर्यभट्टकम् ॥ १२४५ ॥
दयालुत्वात्प्रशस्तत्वान्निर्लोभत्वान्महीभुजा ।
नियुक्तः स नदीकृष्टावलगद्भट्टशिर्यकः ॥ १२४६ ॥
सोव्याहताज्ञः सर्वत्र लोकालीपतिभिस्ततः ।
लोकमानाय शैलेन्द्रं सरितः पदवीं व्यधात् ॥ १२४७ ॥
अवटेषु शिलाबन्धं निम्नेषु ग्रावपूरणम् ।
खनीषु कुटिलं मार्गं तस्याः स सरितो व्यधात् ॥ १२४८ ॥
तटस्थान्पोषयन्त्युच्चैः पुरस्ताच्छाखिनः सरित् ।
सा तु राजसभेवाथ रभसादुदपूरयत् ॥ १२४९ ॥
प्रज्ञेव विदुषा स्थित्या चिरं प्रतिपदं सरित् ।
लोलीकृततरङ्गभ्रूः प्रातिष्ठत शनैः शनैः ॥ १२५० ॥
राज्ञस्तपःप्रभावेण शिर्यभट्टनयेन च ।
प्रजानामपि भाग्येन नास्या विघ्नोभवत्कचित् ॥ १२५१ ॥

सा भजन्ती गिरिं क्वापि त्यजन्ती दूरतः क्वचित् ।
वप्रात्परस्तेवाभूत्सशब्दकलहा सरित् ॥ १२५२ ॥
नवस्य भूमिपालस्य चित्तवृत्तिरिवाम्भसा ।
अवट्टो दक्षिणे नद्या वामेद्रिर्विकटोपलः ।
पुरस्तुङ्गा च दीर्घा च शिलेति काप्यदृश्यत ॥ १२५३ ॥
स्थूलेन गण्डशैलेन पुरतो रुद्धपद्धतिः ।
न तस्थौ न ययौ कुल्या कामिनीव विमानिता ॥ १२५४ ॥
राज्ञा स्वयमथाप्यत्र गण्डशैले विदारिते ।
सरित्तीर्णप्रतिज्ञेन गच्छन्ती क्रमते स्म सा ॥ १२५५ ॥
नद्या व्याकृष्टुमिष्टायाः शिलया मार्गरोधने ।
मिहिराख्यो नृपः क्रोधात्स्त्रीलक्षाणि जघान सः ॥ १२५६ ॥
श्रीजैनोल्लाबदीनस्तु सरितो मार्गरोधिनीम् ।
दारयित्वा शिलां शस्त्रैर्जनताः समजीवयत् ॥ १२५७ ॥
गिरीशमुकुटभ्रष्टां गङ्गामिव भगीरथः ।
लेदरीमब्धिविस्तीर्णां मार्तण्डक्ष्मामवापयत् ॥ १२५८ ॥
मेखलेव गिरेस्तस्य राज्ञः कीर्तिरिवामला ।
भूमेर्मुक्तालतेवासौ सरित्परमशोभत ॥ १२५९ ॥
समीपस्थोपि मार्तण्डो न मां शोषयितुं क्षमः ।
इतीव तरलोद्दामा निनादमकरोत्सरित् ॥ १२६० ॥
एकः श्रीजयनोल्लाबदीनो धर्मपरो नृपः ।
सरित्प्रवाहकपटादिति रेखां विधिर्व्यधात् ॥ १२६१ ॥
ब्रह्मचर्योपतप्तानां स्त्रीसङ्गादिव भूरुहाम् ।
सेकात्सरित्कृतात्तत्र किमप्युदभवत्सुखम् ॥ १२६२ ॥
दर्शितावर्तनाभिः सा गच्छन्ती सुभगं शनैः ।
सरित्सफेनसहिता मार्तण्डमहसत्तराम् ॥ १२६३ ॥

सूर्यो हारिप्रवाहायां सरिति प्रतिबिम्बितः ।
मूर्तः संनिहितो ज्ञातः कलावपि चिरं जनैः ॥ १२६४ ॥

ननु दीनान्पालयन्ती नद्यानाभिमुखी सती ।
सरित्प्रसिद्धिमगमज्जैनधर्मनदीति सा ॥ १२६५ ॥

सान्द्रं प्रदोषजनितं तिमिरं निवार्य
विश्वप्रकाशनपरस्य दिवाकरस्य ।
आयाति मण्डलतलं स्वयमेव तेजः
श्रेष्ठौषधीशऋणमास्ततरां चिरं यत् ॥ १२६६ ॥

त्रिपञ्चाङ्गमिते वर्षवृन्दे याते कलेः किल ।
अथर्वकौशलाद्द्रोणो रणं कुरुबलैर्व्यधात् ॥ १२६७ ॥

कुरुभिर्निहते द्रोणे तदाथर्वो निराश्रयः ।
शरणीकृतवान्वेदः कर्णाटान्पटुचेतनान् ॥ १२६८ ॥

शास्त्रेष्वथर्ववेदस्य माहात्म्यं परिपश्यताम् ।
काश्मीरिकाणां तत्प्राप्त्यै चिरमासीन्मनोरथः ॥ १२६९ ॥

कालेथ विपुले याते सूहभट्टभयाकुलः ।
युद्धभट्टाभिधो मानी देशान्तरमगाद्गुणी ॥ १२७० ॥

यजुषः पठनात्प्रीतैः कर्णाटैः सोथ पाठितः ।
सरहस्यमथर्वाणं निजं प्रत्यागतो भुवम् ॥ १२७१ ॥

श्रीजैनोल्लावदीनस्य गुणिनो गुणरागिणः ।
उपधीकृत्य तं वेदं परां तुष्टिमजीजनत् ॥ १२७२ ॥

दत्तस्वकीयवस्त्रान्नः शिर्यभट्टोथ धर्मवित् ।
तेनैवाथर्ववेदं तं द्विजपुत्रानपाठयत् ॥ १२७३ ॥

सा धर्मिष्ठा तु शाला शिर्यभट्टस्य धीमतः ।
कर्णाटानामपि परमगमत्स्पृहणीयताम् ॥ १२७४ ॥

स्निग्धा विद्युच्छ्रवणमधुरं गर्जितं वृष्टिरिष्टा
छायाभासत्क्रमभरहरिर्गाहते मन्दमन्दः।
वर्षाकालं विधिरनुदिनं वर्धयन्स्वं गुणौघै-
र्ग्रीष्मार्तासु प्रथयति दयादक्षिणत्वं प्रजासु ॥ १२७५ ॥
दशाविधुरभावेन विपक्षस्य बलेन वा।
दानसंस्कारमानादावनुरूपे पराङ्मुखः ॥ १२७६ ॥
यस्मिन्नादमखानाख्ये ज्येष्ठे पुत्रेपि भूपतिः।
अप्रसन्नो विदग्धत्वहीनैः संभावितश्चिरम् ॥ १२७७ ॥
हाजीखानादिपुत्रेभ्यो विशेषाद्विहितादरः।
विभासितः स राज्ञापि तिलको मधुना यथा ॥ १२७८ ॥
आदौ पादतले सन्तं करालम्बं ततः कृतम्।
यं दर्शनान्तरे चन्द्रमुत्तमाङ्गोपरिस्थितम् ॥ १२७९ ॥
अवर्धयत्क्रमादेव कलानां निधिमीश्वरः।
मल्लादयोवखानः स सर्वत्राधिकृतः कृतः ॥ १२८० ॥
समो वैश्रवणस्यासीद्भट्टवैश्रमणो गुणैः।
ईश्वरस्य प्रसादेन राजभिर्यद्वतर्स्यत ॥ १२८१ ॥
रूप्यभाण्डपतिं शिल्पकौशलाभ्युल्लसन्मतिम्।
राजधानीमहाद्वारं नष्टं योयोजयत्पुनः ॥ १२८२ ॥
हिमाचलशिखादर्पच्छेदि प्रासादमेदुराम्।
क्रमराज्ये स्फुरद्राज्यः सुरत्राणः पुरीं व्यधात् ॥ १२८३ ॥
जैनकोट्टं घट्टितारिरट्टशालि समन्ततः।
नृत्यत्पटपताकान्तकान्तं राजा विनिर्ममे ॥ १२८४ ॥
जीर्णोद्धारेषु सर्वेषु निर्माणेषु नवेषु च।
आज्ञा राज्ञो बभौ हेतू रूप्यभाण्डपतेश्च धीः ॥ १२८५ ॥

महापद्मसरस्तीरे जैनोपपदशालिनः ।
पुरमण्डपिकाघोषांस्तथा श्रीजैनकुण्डलम् ।
स जैनपत्तनं चापि विदधे धरणीपतिः ॥ १२८६ ॥
भूपतेः कोमलकरा मनोज्ञाचरणाञ्चिता ।
अभिरामा महोदन्ता करुणा वल्लभाभवत् ॥ १२८७ ॥
अनिघ्नन्करुणानिघ्नो नरेन्द्रो डोम्बतस्करान् ।
बन्धयन्निगडैर्गाढं मृत्कर्माकारयत्सदा ॥ १२८८ ॥
निर्दिशन्यशसा शुभ्रा दिशो नृपतिरादिशत् ।
अवधं खगमत्स्यानामनेकेषु सरःसु सः ॥ १२८९ ॥
अथ जातु हतां चौरैर्गां परिज्ञाय काञ्चन ।
क्रन्दन्तं भूमिपः पृच्छंश्चौरांश्चाथाप्यढौकयत् ॥ १२९० ॥
वयोलक्षणसंवादं विना गोस्तुङ्गशृङ्गताम् ।
सभाक्षोभनहेतुं स सत्यवाग्ब्राह्मणोवदत् ॥ १२९१ ॥
तिलकादिवदेवास्याः सहजा तुङ्गशृङ्गता ।
राज्ञा पृष्टे वदन्त्येवं चौरमूका सभाभवत् ॥ १२९२ ॥
परीक्षार्थं तिमिस्वेदे राज्ञा गोशृङ्गयोः कृते ।
कुटिलत्वं व्यपैति स्म प्राक्चौरस्याथ शृङ्गयोः ॥ १२९३ ॥
एवं बुद्धिप्रकर्षेण व्यवहारविमर्शतः ।
अमात्यपर्षदो हर्षचित्तोत्कर्षमजीजनत् ॥ १२९४ ॥
प्राड्विवाकक्षमा बुद्धिर्युक्तदण्डत्वरञ्जकः ।
राज्ञोवहत्प्रजाभारं गणनापतिगौरकः ॥ १२९५ ॥
यैर्दत्तमुपकारित्वादुत्कोचद्रविणं स्वयम् ।
कालान्तरे कृतघ्नेषु तेष्वेवास्थानमण्डपे ॥ १२९६ ॥
प्रकाशयत्सु तद्दानं कुपितेन महीभुजा ।
मौलानो मल्लु एसाकस्तेभ्यः प्रत्यपि दापितः ॥ १२९७ ॥

आदौ पादतले तिष्ठत्करालम्बीकृतस्ततः ।
अथ चक्षुष्यतां गच्छन्नुत्तमाङ्गोर्ध्ववर्तिताम् ॥ १२९८ ॥

नीतो दर्यावखानोथ कृतज्ञेनेश्वरेण सः ।
कलानिधिर्हिमरुचिः कौमुदे हितताँ वहन् ॥ १२९९ ॥

दिनपतिर्न रसातलगं तमः
शमयितुं यतते यदवेक्ष्य सः ।
अतिलसद्रुचि कालघनावृते-
र्हरति तत्प्रतिविम्बमहो क्षणात् ॥ १३०० ॥

राजा भूभारखिन्नोपि खड्गधाराध्वगोपि सन् ।
स्वदत्तं विभवं यस्य दृष्ट्वा विश्राममाप्तवान् ॥ १३०१ ॥

अस्तं मह्मदखानः सः कलानिधिरथागमत् ।
अत्यन्तरमणीयानां सुचिरस्थायिता कुतः ॥ १३०२ ॥

प्रत्यहं प्रतिहार्याद्यैर्यो व्यधात्प्रीतिमर्थवान् ।
सत्यव्रतो दिवमगान्महिमश्रीः स ठक्कुरः ॥ १३०३ ॥

तद्गोत्रजेभ्यः शङ्कित्वाद्गूढं तस्य वधं कचित् ।
यो दूतच्छलतो राज्ञा स्वदेशान्निरवास्यत ॥ १३०४ ॥

राज्ञः सैन्धवशुक्रादिस्थाने सोच्र्याभिधे पुरे ।
प्रत्यागतः स तीर्थाध्वखिन्नो विन्नो दिवं ययौ ॥ १३०५ ॥

राज्ञो धर्माधिकारेषु प्रत्यवेक्षापरः सदा ।
महाश्रीशिर्यभट्टोपि तस्मिन्काले दिवं ययौ ॥ १३०६ ॥

गतेष्वप्येषु राज्ञोस्य धर्मो नैवाल्पता गतः ।
क्ष्मां दधानस्य शेषस्य दिग्गजा हि परिच्छदाः ॥ १३०७ ॥

एकाह एव दीन्नारकोटिरेका महीभुजा ।
कालेभ्य एव दत्तासीज्ज्यभट्टमुखेन यत् ॥ १३०८ ॥

अद्भुतानां पदार्थानां तद्राज्ये संग्रहोभवत् ।
नारायणावतारोयं ज्ञायेत कथमन्यथा ॥ १३०९ ॥
येषां हिमांशुपीयूषप्रवाहा नित्यभिक्षवः ।
इक्षवस्तेन मार्तण्डदेशभूमिषु रोपिताः ॥ १३१० ॥
त्यजता योगमाहात्म्याद्वलीपलितविक्रियाम् ।
श्रीमद्दर्शननाथेन विबुधत्वं प्रकाशितम् ॥ १३११ ॥
उद्दीपे सस्यसंपत्तेरुपप्लवकरीं व्यधात् ।
तूलमूलादपाकृष्य सिन्धुं भारोत्सगामिनीम् ॥ १३१२ ॥
पूर्वा—तिथिवारर्क्षसंक्रान्त्याद्येकसाधनः ।
तिथिवारर्क्षसंक्रान्तीर्भविन्यब्दे क्षणाल्लिखन् ॥ १३१३ ॥
तद्राज्ये रूप्यभट्टोभूद्राज्यवाल्लभ्यविश्रुतः ।
अनादरं खण्डखाद्ये कारयन्गणितागमे ॥ १३१४ ॥
चन्द्रेस्तं गत एव दैववशतः शोकाग्निशान्त्यै निशा
तत्कान्ता रविकान्तवह्निमुदयात्कष्टं प्रविष्टा सती ।
द्यामारुह्य तदीयधूमकपटात्प्राप्ता पुनस्तन्महो
यन्मोहं ग्रहराजपादमहिमा प्राप्तः प्रसादोदयः ॥ १३१५ ॥
ऋतुपतिः शिशिरेण समत्सरो-
प्यतिविरुद्धकरो न हितः स्थितः ।
यदि भुवं शिशिरोपि विनाशये-
त्किमिव नाम मधुर्बत योजयेत् ॥ १३१६ ॥
सूहभट्टोथ शास्त्रार्थमण्डितोप्यथ पण्डितः ।
दर्शनद्वेषतः प्रेतदाहं बत निषिद्धवान् ॥ १३१७ ॥
प्रेतदाहं तदा केचित्त्यक्त्वा गूढं जलान्तरे ।
अरण्ये केचन त्यक्ता निखाता बन्धुभिः परे ॥ १३१८ ॥

कालधर्ममुपेतेथ सूहभट्टे शनैः शनैः।
प्रजा वीतभया कांश्चित्प्रेतान्गूढमदाहयन्॥ १३१९॥
दोषान्दृष्ट्वा स्वयं राज्ञा सैदमके निराकृते।
अदहं प्रकटं प्रेतदेहानहनि बान्धवाः॥ १३२०॥
अथानुसरणात्पत्न्यः पत्युः सुकृतशालिनः।
स्वर्गाङ्गनाङ्गसंसर्गात्पुण्यक्षयमवारयन्॥ १३२१॥
भोक्तुं राज्यं पैतृकं तद्धात्रा दत्तं स ठक्कुरः।
जयनोल्लावदीनोसौ कश्मीरान्प्रत्युपाययौ॥ १३२२॥
हतानां वस्त्रवासोस्त्रशिरस्त्रादि प्रगृह्य तत्।
सदनं सधनं जस्सरथोप्यागाद्विमुच्यताम्॥ १३२३॥
शुक्ले शुक्ले ब्रह्मणोह्नि रसाङ्केब्दे शशाङ्कगे।
जयनोल्लावदीनोसौ राजधानीं विवेश सः॥ १३२४॥
दानातकथनेशस्य तनूजाय हनूमते।
सर्वस्वकर्षणग्रामाधिपत्यं प्रददौ नृपः॥ १३२५॥
मीरकाय ददौ भूभृदास्थानासनसंविदम्।
कर्तुं विचारदक्षाय सत्यासत्यपरीक्षणम्॥ १३२६॥
विवृद्धयवनाधिकारवरविप्रवीरैर्वरै-
भटैः कुटिलवर्त्मगैर्मथितमोहिताश्च प्रजाः।
सुरेज्यधिषणं विचारचतुरं परं ठक्कुरं
निरीक्ष्य युयुजे विचारपदनिर्णये मीरकम्॥ १३२७॥
सेनाधिपत्यं वीराय ठक्कुरायोग्रतेजसे।
विनूकपरमल्लेकनौरुजाय ददौ नृपः॥ १३२८॥
लेदर्यां सव्यपारं स ताजराजाय सोदिशत्।
मल्लेशराजाय ददौ महाग्रामपरंपराम्॥ १३२९॥

विषयं देयनिर्मुक्तं नृपोप्यर्धवनाभिधम् ।
आदमाख्याय स ददौ महाविक्रमशालिने ॥ १३३० ॥
प्रवरेशपुराधीशत्वं परं परमेश्वरः ।
वीराय मार्गपतये मह्मदाख्याय धीमते ॥ १३३१ ॥
भाङ्गेलविषयं भूभृत्सतुलायां ददौ नृपः ।
तस्यानुजान्मार्गपतींस्ताजकप्रमुखान्बहून् ॥ १३३२ ॥
पञ्चग्रामीं महार्घांश्च दत्त्वाश्वान्समतूतुषत् ।
श्रीजाकोट्टाधिपत्यं च मीरेष्कारपदं ददौ ॥ १३३३ ॥
ठक्कुरायामह्मदाख्याय महाग्रामांश्च पत्तलाम् ।
ठक्कुरेभ्यो परेभ्योसावपि मान्यतया समम् ।
महाग्रामसहस्राणि यथेष्टं प्रददौ नृपः ॥ १३३४ ॥

इतिश्रीजोनराजकृतौ द्वितीया राजतरङ्गिणी समाप्ता ।

---

Ir1

अथ

श्रीवरपण्डितकृता

# तृतीया राजतरङ्गिणी ।

## प्रथम तरङ्गः

### प्रथमः सर्गः

शिवायास्तु नमस्तस्मै त्रैलोक्यैकमहीभुजे ।
अशेषक्लेशनिर्मुक्तनित्यैश्वर्यदशाजुषे ॥ १ ॥

प्रेम्णार्धं वपुषो विलोक्य मिलितं देव्या समं स्वामिनो
मौलौ यस्य निशापतिर्नगसुतावेणीनिशामिश्रितः ।
आस्ते स्वाम्यनुवर्तनार्थमिव तत्कृत्वा वपुः खण्डितं
देयादद्वयभावनां स भगवान्देवोर्धनारीश्वरः ॥ २ ॥

वन्द्यास्ते राजकवयः पदन्यासमनोहराः ।
ख्याता ये सरसैः शब्दैः क्षीरनीरविवेकिनः ॥ ३ ॥

अनित्यतान्धकारेस्मिन्स्वामिशून्ये महीतले ।
काव्यदीपं विना कः स्याद्भूतवस्तुप्रकाशकः ॥ ४ ॥

येषां करोमि वपुरस्थिरमत्र राज्ञां
तेषामयं जगति कीर्तिमयं शरीरम् ।

आकल्पवर्ति कुरुते किमितीव रोषा-
द्धाताहरद्भुवमतः कविजोनराजम् ॥ ५ ॥
श्रीजोनराजविबुधः कुर्वन्राजतरङ्गिणीम् ।
सायकाग्निमिते वर्षे शिवसायुज्यमासदत् ॥ ६ ॥
शिष्योस्य जोनराजस्य सोहं श्रीवरपण्डितः ।
राजावलीग्रन्थशेषापूरणं कर्तुमुद्यतः ॥ ७ ॥
क्व काव्यं मद्गुरोस्तस्य क्व च मन्दमतेर्मम ।
वर्णमात्रेण मक्कोलं घनसारायते कथम् ॥ ८ ॥
राजवृत्तानुरोधेन न काव्यगुणवाञ्छया ।
सन्तः शृण्वन्तु मद्वाचः स्वधिया योजयन्तु च ॥ ९ ॥
अथ वा नृपवृत्तान्तस्मृतिहेतुरयं श्रमः ।
क्रियते ललितं काव्यं कुर्वन्त्वन्येपि पण्डिताः ॥ १० ॥
तत्तद्गुणगणादानात्स्वसंपत्तिसमर्पणात् ।
पुत्रवद्वर्धितो राज्ञा ग्रामहेमाद्यनुग्रहैः ॥ ११ ॥
अतो वाञ्छन्नमेयस्य तत्प्रसादस्य निष्कृतिम् ।
सोहं ब्रवीमि तद्वृत्तं तद्गुणाकृष्टमानसः ॥ १२ ॥
एकया तद्गुणाख्यानं जिह्वया वर्ण्यते कियत् ।
रोमवत्कोटिशश्चेत्स्युस्तास्तदा मद्गिरः क्षमाः ॥ १३ ॥
सत्यं नृपाम्बरेमुष्मिन्विपुले विमलाशये ।
गुणतारापरिच्छेदे न शक्ता भारती मम ॥ १४ ॥
तथापि सकलं चित्रपटान्ते त्रिजगद्यथा ।
श्रीजैनोल्लाबदीनस्य न्यस्यामि गुणवर्णनम् ॥ १५ ॥
केनापि हेतुना तेन प्रोक्तं मद्गुरुणा न यत् ।
तच्छेषवर्तिनीं वाणीं करिष्यामि यथामति ॥ १६ ॥

सात्मजस्य नृपस्यास्य प्राप्यते राज्यवर्णनात् ।
प्रतिष्ठादानसंमानविधानगुणनिष्कृतिः ॥ १७ ॥
स्वदृग्दृष्टमृतानेकविपद्धिभवसंस्मृतेः ।
सूते कस्य न वैराग्यं नाम जैनतरङ्गिणी ॥ १८ ॥
श्रीजैनोल्लाबदीनः स हत्वा शत्रून्दिगन्तरे ।
आगत्य पैतृके देशे राज्यं राम इवासदत् ॥ १९ ॥
हृतावशिष्टां कोशेभ्यः स्वप्रबन्धोपयोगिनीम् ।
नानापदार्थसामग्रीं राजा कविरिवाचिनोत् ॥ २० ॥
तद्राज्यमालिशाहस्य राज्यकालादनन्तरम् ।
अज्ञायि कैर्न ग्रीष्मान्ते मरौ श्रीखण्डलेपनम् ॥ २१ ॥
धर्मराजोपमात्तस्मात्तास्ता नरकयातनाः ।
अपराधानुसारेण पापाः केचिद्धिषोभजन् ॥ २२ ॥
यो द्रव्यगुणसत्कर्मसमवायविशेषभृत् ।
असामान्योप्यधाच्चित्रं नानार्थपरिपूर्णताम् ॥ २३ ॥
नेत्रोज्ज्वले लसद्धर्म्यशब्दाढ्ये कमलाचिते ।
यस्य श्रीरवसन्नित्यं वदने सदनेपि च ॥ २४ ॥
बङ्गालमालवाभीरगौडकर्णाटदेशगा ।
यत्कीर्तौ रागमालेव बभूवामृतवर्षिणी ॥ २५ ॥
भास्वान्राजा सदाचारो बुधः सधिषणो महान् ।
अधाद्विश्वग्रहाख्यातिमासन्नस्य ग्रहोचिताम् ॥ २६ ॥
यं संप्राप्य गुणाः सर्वेप्यलभन्नधिकां श्रियम् ।
रात्रौ कुमुदवृन्दानि चिन्तामणिमिवोडुपम् ॥ २७ ॥
षड्दर्शनक्रिया यस्य वृत्तं समन्वरञ्जयन् ।
सुमनोरञ्जिकाह्लादा ऋतवो नन्दनं यथा ॥ २८ ॥

त्रिवर्गे प्रोज्ज्वलं दृष्ट्वा यस्मिंस्तद्रसिका इव ।
अवसञ्शक्तयस्तिस्रः सममेकमता इव ॥ २९ ॥
भूपेर्थैः पूरयत्यर्थिसार्थं पार्थोपमेन्वहम् ।
आह्वानार्थमिवैतस्य यशः सर्वदिशोगमत् ॥ ३० ॥
शिल्पिनो विश्वकर्माणं गोरक्षं योगिनां गणाः ।
अवतीर्णं रसज्ञा यं नागार्जुनमिवाविदन् ॥ ३१ ॥
तस्याग्रे योग्यतादर्शि यैः शिल्पकविकौशलात् ।
तथा प्रसादमकरोत्तत्परास्ते यथाभवन् ॥ ३२ ॥
काव्यशास्त्रश्रुतैर्गीतनृत्यतन्त्रीचमत्कृतैः ।
आजीवमनयत्कालं कार्यानुद्विग्नमानसः ॥ ३३ ॥
न्याय्यं कुर्वन्ति शास्त्रज्ञाः कार्यभारं सुधीरतः ।
तेभ्यः क्षिप्त्वा च स्वे धर्मे तिष्ठतेत्येवमभ्यधात् ॥ ३४ ॥
अवार्यवेगैः सततमाशुगैर्यस्य ताडिताः ।
आसन्वनादिगन्तेषु मशका इव शत्रवः ॥ ३५ ॥
तस्य स्वपरवृत्तान्तं नित्यमन्विष्यतश्चरैः ॥
केवलं स्वप्नवृत्तान्तो बभूवाविदितो विशाम् ॥ ३६ ॥
गृहं गृहस्थवृत्तस्य ध्यायतो नीतिशालिनः ।
अन्यायान्नाशकद्धर्तुं काकिनीमपि कश्चन ॥ ३७ ॥
आदिश्य कृष्यैर्वास्तव्याञ्श्वपचादीन्स तस्करान् ।
मृत्कर्माकारयद्बद्धपादायःशृङ्खलान्बलात् ॥ ३८ ॥
न कः प्रवर्तते चौर्ये नीचो वृत्तिकदर्थितः ।
इति कारुणिको राजा तेभ्यो वृत्तिमकल्पयत् ॥ ३९ ॥
चक्रादीन्क्रमराज्यस्थान्दुष्टाञ्ज्ञात्वा स तद्भुवम् ।
हृत्वा मडवराज्यान्तर्दत्तवृत्तीन्न्यवेशयत् ॥ ४० ॥

तस्करोपद्रवे राज्ञा नीत्यैव शमिते सुखम् ।
गृहेष्विवाटवीष्वन्तः पथिकाः शेरते स्म हि ॥ ४१ ॥
सत्ताप्रकृतिमध्यस्थो नित्यसर्वाङ्गवर्धनः ।
स्वतन्त्रवृत्तिर्भूपालो रेमे नानापुरेषु सः ॥ ४२ ॥
मन्देहानहिताग्निवार्य च भजन्पूर्वाचलाग्रोदयं
यो नित्यं कमलाकरेषु रसिको बिभ्रत्प्रतापोच्चयम् ।
संकोचं कुमुदाशयेषु रचयन्पद्माकरोत्पूजितः
शस्यः कस्य न दत्तलोकमहिमा भास्वान्यशस्वी विभुः॥४३॥
धात्रेयाष्टक्कुरा राज्ञो विभवश्रीमदोद्धताः ।
विस्फूर्तिहारिणोस्यासन्गजा इव निरङ्कुशाः ॥ ४४ ॥
श्रीमीरठक्कुरो ज्येष्ठः प्राड्विवेकपदोज्ज्वलः ।
तेषां मुसुलवृद्धोपि बभौ ग्रन्थगुणोज्ज्वलः ॥ ४५ ॥
कष्टेन काष्ठवाटं स प्रासोवटपथात्ततः ।
हिमान्यन्तरदग्धाङ्घ्रिर्हिमान्यन्तरमासदत् ॥ ४६ ॥
स्थित्वा माणिक्यदेवाग्रे स मुद्रस्यान्तरे चिरात् ।
चिभ्भदेशं ततः प्राप किंचित्प्राप्तपरिच्छदः ॥ ४७ ॥
तद्देशकालविषमावस्थाशतहतोपि सन् ।
स तत्र प्रेष्यवत्सैदपादशौचं समासदत् ॥ ४८ ॥
तद्गन्धतामयोत्पन्नस्फोटवैकृतशान्तये ।
वैद्यैर्वरत्राबद्धैकपादोभूज्जीवितावधि ॥ ४९ ॥
तत्रोपायान्बहून्कुर्वन्स्वदेशविभवाप्तये ।
यथाकथंचित्तत्रस्थः पञ्चषः सोवसत्समाः ॥ ५० ॥

अतःपरं किंचिद्ग्रन्थचरितं कालवशाच्छिन्नम् ।

स सिन्धुहिन्दुवाडादिदेशाञ्जित्वा बहिःस्थितान् ।
प्रतस्थे भुट्टदेशं स जेतुं सकटको नृपः ॥ ५१ ॥

वनमध्ये प्रविश्यैव नरकंकालपञ्जरम् ।
भित्तिस्थदीपमात्रे ते पश्यन्ति स्म सकौतुकम् ॥ ५२ ॥
तपस्तत्त्वा चिरं प्राप्य योगसिद्धिमसौ नृपः ।
फणीव कञ्चुकं पूर्वं गुहायामत्यजत्तनुम् ॥ ५३ ॥
इत्याहुर्ज्ञानिनोन्ये वा ये बुद्ध्वा सत्त्वमूर्जितम् ।
तेषां प्रामाण्यमकरोत्स राजा च सविस्मयम् ॥ ५४ ॥
ध्रुवं महानुभावत्वं विना व्यवहितं नृपः ।
जानीयात्कथमित्याह विद्वज्जन उदानधीः ॥ ५५ ॥

इत्युपोद्घातः ।

---

## अथ राज्यवर्णनम् ।

ज्येष्ठमादमखानं च हाजीखानं च मध्यमम् ।
बन्हामखानमनुजं पार्थिवोजीजनत्सुतान् ॥ ५६ ॥
तेषां लावण्यसौभाग्यसुभगैः प्राकृतैर्गुणैः ।
जनकं रञ्जयामास चन्द्रमा इव वारिधिम् ॥ ५७ ॥
प्रत्यहं हाजीखानः स कर्पूर इव सौरभैः ।
बाललीलायितैस्तैस्तैः स्वमुदन्तमजिज्ञपत् ॥ ५८ ॥
तौ सुतौ संमतौ पित्रो रक्षणायाक्षिपन्नृपः ।
स्वधात्रेयतया स्वस्थो द्वयोष्ठकुरपक्षयोः ॥ ५९ ॥
स्वपक्षस्थापनादक्षाः परपक्षेष्टखण्डनाः ।
तार्किका इव तेन्योन्यं धात्रेयाष्ठक्कुरा बभुः ॥ ६० ॥
सौन्दर्यस्नेहवृक्षस्य मूलच्छेदनकारिणः ।
तेन्योन्यगोत्रजद्वेषात्तयोरासन्समत्सराः ॥ ६१ ॥

I, 1



राजपुत्रास्त्रयस्तस्य गुणातिशयसुन्दराः।
तत्कृतान्योन्यवैरेण समं वृद्धिं समाययुः॥ ६२॥
देहसमो देशोयं तस्यात्मसमो महीपालः।
तस्मिन्ससुखे सुखितो दुःखिनि तस्मिन्सदुःखोसौ॥ ६३॥
अन्योन्यं सरुषो राजपुत्रयोर्मन्त्रिदुर्नयात्।
अभूज्ज्येष्ठकनिष्ठत्वं प्रक्रियारहितं तयोः॥ ६४॥
श्रुत्वाथ पुत्रयोर्वैरमन्योन्यं जातु भूपतिः।
आह स्मादमखानं स विदेशगमनत्वराम्॥ ६५॥
युक्तमुक्तं न गृह्णासि कुपुत्र यदि मद्वचः।
मानप्राणधनध्वंसी प्रत्यूहस्तेन्यथा भवेत्॥ ६६॥
श्रुत्वेति पितृसंदेशं स भृत्यानब्रवीद्वरम्।
तत्पर्णोत्सपथा यामः सुखं तत्रैव नः सदा॥ ६७॥
अथोचुस्ते तव भ्राता दाता जातोत्युदारधीः।
स्वलक्ष्मीं भृत्यसात्कर्तुं स क्षमो न भवान्कचित्॥ ६८॥
वरं मरणमेवास्तु तदग्रे नोद्य सेवया।
विक्रमादिगुणैर्हीनं न त्वामेवं भजामहे॥ ६९॥
अग्रजानुजयो राजपुत्रयोः सुखदुःखयोः।
विपर्ययं व्यधाद्वेधाः प्रमातेव विभागिनोः॥ ७०॥
अथाशङ्क्य नृपः पापं तद्वधात्कतिचिद्दिनैः॥
बहिर्निष्कासयामास भुट्टमार्गेण तं सुतम्॥ ७१॥
वज्रबाणप्रकारांश्च शिल्पिनः समदर्शयन्।
येभ्योश्रावि ध्वनिर्धीरलोकहृत्कम्पकारकः॥ ७२॥
तद्यन्त्रभाण्डभेदांश्च तत्तद्धातुमयान्नवान्।
आनीतवान्नरपतिः संहताञ्शिल्पिनिर्मितान्॥ ७३॥

प्रशास्तिः क्रियतां यन्त्रभाण्डेष्विति नृपाज्ञया ।
मयैव रचिताञ्श्लोकान्प्रसङ्गात्कथयाम्यहम् ॥ ७४ ॥

यदनुग्रहेण राज्ञां समयो लीलाविलासमयः ।
समयश्च यन्त्रतन्त्रैः स्थिरां प्रतिष्ठां क्रियात्समयः ॥ ७५ ॥

रसवसुशिखिचन्द्राङ्के शाके नाकेशविश्रुतो राजा ।
श्रीजैनोल्लाबदीनः कश्मीरान्पालयन्विजयी ॥ ७६ ॥

वर्षे शशिवेदाङ्के निर्मितवान्यन्त्रभाण्डमिदम् ।
तदिति मौसुलभाषाख्यातं लोके तट्टकाण्डमिति ॥ ७७ ॥

दुर्गेषु दुर्गतिपरं हृत्स्फोटकरं तुरङ्गदत्तदरम् ।
दूरोन्मुक्ताश्मशरं कटकबलान्यदृष्टचरम् ॥ ७८ ॥

सारं सुरीतिबद्धं घनघोषं शिल्पिकल्पितमहार्घम् ।
नवमिव नगरं नृपतेः कल्पं स्ताद्यन्त्रभाण्डमिदम् ॥ ७९ ॥

धातुविभक्तिस्फारात्पदप्रवृत्या प्रयोजिते शब्दे ।
अर्थोपलब्धिहेतोर्भवत्विदं वृद्धिगुणयुक्त्या ॥ ८० ॥

इति पद्याङ्किता यन्त्रभाण्डाली व्यरुचन्नवा ।
यदुष्मौघध्वनिश्चक्रे मेघगर्जिततर्जनाम् ॥ ८१ ॥

कालेनादमखानेथ भुट्टाञ्जित्वा समागते ।
हाजीखानोकरोद्यात्रां लोहराद्रौ नृपाज्ञया ॥ ८२ ॥

कथं हि छुरिकायुग्ममेककम्बुनि स्थाप्यते ।
इति ज्ञात्वा सुतौ राज्ञा कारितौ निर्गमागमम् ॥ ८३ ॥

जनकस्यान्तिके स्नानपानलीलोत्सवादिकम् ।
आदमखानः सत्राणो विदधेनुदिनं ततः ॥ ८४ ॥

दृष्टा सतीसरसि येन सुखस्थितिः सा
भीतः स यद्यपि गतो घनकालदोषात् ।

यावन्न नाशमुपयाति किरातघातै-
स्तावत्कथं तदवमुञ्चति राजहंसः ॥ ८५ ॥
अथाष्टाविंशवर्षेपि रावत्रलवलादिभिः ।
इतीरितोकरोत्खानः कश्मीरागमनस्पृहाम् ॥ ८६ ॥
स्वामिंस्त्वदग्रजीयास्ते कश्मीरसुखभागिनः ।
क्लिश्यामः परदेशेत्र वयमेव गृहोज्झिताः ॥ ८७ ॥
राजानकप्रतीहारमार्गेशकुलजादयः ।
अस्मत्प्रतीक्षिणः सर्वे तत्र वीरा बलोद्धताः ॥ ८८ ॥
यद्यप्यवचनग्राही भूभुजो निश्चितो भवान् ।
तावतैव स किं क्रुद्धो हन्त्यस्मान्करुणापरः ॥ ८९ ॥
युद्धायादमखानश्च निर्यातः स्वबलान्वितः ।
त्वत्तः स नश्यति क्षिप्रं श्येनाग्रादिव पोतकः ॥ ९० ॥
अमी राजपुरीयाद्याः सर्वेस्मच्छुभकाङ्क्षिणः ।
तत्तेनैवाधुना यामो न किं सिध्यति साहसात् ॥ ९१ ॥
मृते रिगप्रतीहारे वीराः के सन्ति तत्पुरे ।
इति त्वत्पैतृकपदं हर्तुं गन्तुं तवोचितम् ॥ ९२ ॥
शिष्यास्तेमी वयं भृत्या वीरास्त्वत्पैतृकैः सह ।
योत्स्यामः कीदृशं शौर्यमेकदा द्रष्टुमर्हसि ॥ ९३ ॥
तथेत्युक्ताथ खानेन पृष्टौ तन्मन्त्रिणौ मतम् ।
सफिर्यडामरस्ताजतन्त्रेशश्चेत्यवोचताम् ॥ ९४ ॥
देव त्वत्सेवकाः सर्वे स्वगृहोत्कण्ठिताशयाः ।
देशकालावनालोच्य कथयन्त्यसुखप्रदम् ॥ ९५ ॥
कथमभ्यन्तरं यामः साति राज्ञि बलोर्जिते ।
प्रदीप्तं व्योम्नि मार्तण्डं कुण्डेन पिदधाति कः ॥ ९६ ॥

यावज्जीवति भूपालस्तावत्को बाधितुं क्षमः ।
मनोनुवर्तनं कर्तुं तद्युक्तं तव सांप्रतम् ॥ ९७ ॥
प्रसन्ने जनकेस्माकं भवेयुः का न संपदः ।
ईश्वरे च गुरौ भक्तिर्जायते पुण्यकर्मणाम् ॥ ९८ ॥
अस्य कोपेन यत्साध्यं परानुग्रहतो न तत् ।
दुर्दिने या रवेर्दीप्तिः प्रदीपाज्ज्वलतो न सा ॥ ९९ ॥
खलोक्तिश्वासमालिन्यं सततं नयसेविनः ।
हृदयादर्शवैषद्योत्स्रंसकं नास्य दृश्यते ॥ १०० ॥
निर्वाणगोष्ठीनिष्ठस्य तद्वच्छास्त्रविवेकिनः ।
कृपाब्धेरस्य नो किंचित्कृत्यमस्त्यसुखप्रदम् ॥ १०१ ॥
तद्दुग्धपितृपक्षोपि स्वामिभक्तिं न सोत्यजत् ।
तेनैवान्त्यक्षणः श्लाघ्यस्तस्याभूज्जैनभूपवत् ॥ १०२ ॥
सौहार्दमार्दवोपेता योग्या कार्यविचक्षणा ।
जाने तेनैव पुण्येन संततिस्तस्य राजते ॥ १०३ ॥
स पिता त्वं सुतस्तस्य वयं सर्वे स्वसेवकाः ।
गत्वा चेत्कुर्महे युद्धं जयोस्माकं भवेत्कथम् ॥ १०४ ॥
हताश्चेत्केपि तद्भृत्या बहुभृत्यस्य का क्षतिः ।
एकपक्षक्षये किं स्याद्गरुडस्य जवाल्पता ॥ १०५ ॥
न शिवाः शकुनाः सन्ति देशाः पर्वतदुर्गमाः ।
तत्रापि जनकस्तेस्मान्न कालो विग्रहस्य नः ॥ १०६ ॥
भजत्वभ्यन्तरं राजा वयं बाह्यं भजामहे ।
तत्प्रसादादिहैवास्तां राज्यं छत्रं विना न किम् ॥ १०७ ॥
ते चेद्युद्धार्थमेष्यन्ति न जेष्यत्यस्मदन्तिकात् ।
वयं चेदन्तरं यामो न जेष्यामः कदाचन ॥ १०८ ॥

इति दर्पात्स श्रुत्वापि खानः शूरपुराध्वना।
अगाद्राजपुरीं त्यक्त्वा कश्मीरान्पिशुनेरितः॥ १०९॥
अस्मिन्नवसरे श्रुत्वा स्वपुत्रं सहसागतम्।
गृहीत्वा स्वबलं तूर्णं नगरान्निरगान्नृपः॥ ११०॥
गच्छन्सकटको राजा मरणे कृतनिश्चयः।
सदुःखो निःश्वसञ्श्लोकमिममेकमपाठयत्॥ १११॥
राज्येपि हि महत्कष्टं संधिविग्रहचिन्तया।
पुत्रादपि भयं यत्र तत्र सौख्यस्य का कथा॥ ११२॥
अधर्मशङ्का दूरेस्तु युद्धे जनकपीडया।
वैधेयातिविधेयेन येन स्नेहोपि विस्मृतः॥ ११३॥
त्वयि कुर्वति साम्राज्यं यः खेदाय समागतः।
स यातु सबलः शीघ्रं त्वद्वीर्याग्निपतङ्गताम्॥ ११४॥
त्वमेवाकण्टकं राज्यं क्रिया धर्मक्रिया भजन्।
वैरिणो विमुखा यान्तु रणे लब्धपराभवाः॥ ११५॥
ग्रामेष्वित्यधिकास्तास्ताः शृण्वञ्जनपदाशिषः।
प्रापत्सकटको राजा स सुप्रशमनाभिधम्॥ ११६॥
अथ मल्लशिलास्थाने पितापुत्रबलद्वये।
संनद्धे नृपतिर्दूतं विप्रमेकं व्यसर्जयत्॥ ११७॥
स गत्वा नृपसंदेशमब्रवीदिति निर्भयः।
किं वक्तीति क्षणं क्रुद्धैस्तत्त्वज्ञैः परिवेष्टितः॥ ११८॥
राजपुत्र महाबाहो दाक्षिण्यामृतसागर।
शृणु पित्रा समादिष्टं यत्तत्सर्वं ब्रवीमि ते॥ ११९॥
फलं संसारवृक्षस्य लाभोमुत्र परत्र च।
पित्रोर्नेत्रोत्सवो नित्यं पुत्रः कैर्नाम निन्द्यते॥ १२०॥

सर्वः संचिनुते सर्वं पुत्रार्थं प्रयतो यतः ।
वार्द्धके वचनग्राही भवेत्पितृसुखप्रदः ॥ १२१ ॥
इत्थं लोकद्वयस्थित्यां त्वयि जाते सुते मम ।
दूरे सर्वसुखाशास्तु चिन्ता प्रत्युत वर्धिता ॥ १२२ ॥
त्वत्कृतो दुर्जनाश्वासो निश्वासो य इवान्वहम् ।
मलिनीकुरुते शुद्धं मद्राज्यं मुकुरोपमम् ॥ १२३ ॥
जीवनाशोद्यता ये मे लसन्त्युच्छृङ्खलाः खलाः ।
सुचिरं नैव तिष्ठन्ति सरसः सारसा इव ॥ १२४ ॥
मदादेशं विना देशं किमर्थं स्वयमागतः ।
केन राज्यं बलात्प्राप्तं निजभाग्योदयं विना ॥ १२५ ॥
बाह्यदेशावनिः सर्वा भुज्यते तृप्यसे न किम् ।
येन मण्डलमात्रं मेवशिष्टं हर्तुमागतः ॥ १२६ ॥
तन्निवर्तस्व मा पुत्र पापबुद्धिं वृथा कृथाः ।
बलद्वयवधात्पापं तवैतत्परिणेष्यति ॥ १२७ ॥
इत्युक्तिः पैतृकी प्रोक्ता किं तु सत्यमहं ब्रुवे ।
नश्यन्ति भूपाच्छयेनाग्रात्त्वद्भटाश्चटका इव ॥ १२८ ॥
इति रूक्षाक्षरामुक्तिं श्रुत्वा विप्रस्य ते भटाः ।
छित्वा कर्णौ व्यधू रक्तादायुधेषु विशेषकान् ॥ १२९ ॥
तद्दृष्ट्वा हाजीखानोथ सत्रपः पितुरागमात् ।
अभिमन्युप्रतीहारमुख्यानाख्यदिदं वचः ॥ १३० ॥
वरं पादप्रणामार्थं पितुर्याम्यमुतो बलात् ।
भूपस्तुष्टोथ रुष्टो वा यत्करोतु करोतु तत् ॥ १३१ ॥
सर्वथा तातपादा मे सेव्या रक्षेत्स नो ध्रुवम् ।
तन्मा कुरुत युद्धेस्मिन्संरम्भं चेन्मतं मम ॥ १३२ ॥

किं तु स्वप्नेपि भूपाय नानिष्टं चिन्तयाम्यहम्।
यो मे देवाधिकः पूज्यो लोकद्वयसुखप्रदः॥ १३३॥
अग्रजोग्रे समायाति रणायायाति नो नृपः।
इत्युक्ते तेन स प्राप्तो नाहं पितृवधोद्यतः॥ १३४॥
श्रुत्वेति मन्त्रिणस्ताजतन्त्रिपत्यादयस्ततः।
तत्तुरङ्गात्तवल्गाग्रा निष्ठुरं तेब्रुवन्निति॥ १३५॥
यदोक्तं समयो नायं याम इत्यवधीरितम्।
आरब्धस्यान्तगमनं तद्युक्तमधुना तव॥ १३६॥
यूयं चेज्ज्ञातसौहार्दा मार्दवानन्दितापराः।
वयमेव हताः कष्टं क्लिष्टास्त्वत्सेवनाशया॥ १३७॥
भवेत्संतप्तयोः संधिर्नित्यं तैलकटाहयोः।
तदन्तः पूरणी क्षिप्ता सैव दन्दह्यते क्षणात्॥ १३८॥
भवान्स्वामी वयं दासाः पौरुषं पश्य सांप्रतम्।
जयश्चेत्तव राज्याप्तिर्नष्टो याहि यथागतम्॥ १३९॥
यावद्युद्धं करिष्यामस्तावदेव विलम्ब्यताम्।
हतेष्वस्मासु कर्तव्यं यत्पुनस्तत्समाचर॥ १४०॥
अस्मदुक्तं न गृह्णासि यदि त्वं पितृवञ्चितः।
त्वय्येवानुचितं कृत्वा पुनर्यामो दिगन्तरम्॥ १४१॥
इति निर्भर्त्सनावाक्यजातभीतिर्नृपात्मजः।
तत्तच्चिन्तार्णवे मग्नो युद्धश्रद्धामगाहत॥ १४२॥
अत्रान्तरे द्विजं तादृगवस्थं वीक्ष्य भूपतिः।
पुरारातिरिव क्रुद्धो युद्धसंनद्धतां दधे॥ १४३॥
शुक्रयोगजनामर्क्षपरीक्षणविचक्षणः।
स्वपक्षरक्षणं क्ष्मापः पृष्ठीकृतरविर्व्यधात्॥ १४४॥

राज्ञः पृष्ठगतः सूर्यः खड्गान्तः प्रतिबिम्बितः ।
जयस्ते भवितेत्येव वक्तुं व्योम्नोवतीर्णवान् ॥ १४५ ॥
कियन्तोमीति यावत्सोचिन्तयत्तावदग्रतः ।
अर्कदीप्तिज्वलच्छत्रद्युतिद्योतितभूतलम् ॥ १४६ ॥
निर्यत्सन्नाहिसाद्योघपतद्भटतुरंगमम् ।
गणशो गणशो धावत्तत्सैन्यं समवैक्षत ॥ १४७ ॥
कोन्यो वीरो हाजीखानाद्यो राज्ञा वाग्रजेन वा ।
गृहीतसर्वसैन्येन धैर्यात्क्रष्टुमशक्यत ॥ १४८ ॥
तत्र मल्लशिलारङ्गसंगतास्तद्भटा नटाः ।
त्वङ्गदङ्गविहङ्गानां नाट्यभङ्गिमदर्शयन् ॥ १४९ ॥
ववर्ष शरधाराभिः स भूपकटकाम्बुदः ।
स्फुरच्छत्रतडिज्ज्योतिस्तूर्यगम्भीरगर्जितः ॥ १५० ॥
अन्योन्यमिलिताः कांस्यघनवत्कठिना घनाः ।
अन्योन्याघातसहना नदन्तः सुभटा बभुः ॥ १५१ ॥
भटा नयन्ति मां युद्धे मां मा ताडयत द्रुतम् ।
इतीव तारं दध्वान खानस्यानकदुन्दुभिः ॥ १५२ ॥
पूर्वं मया प्रतीहारमुख्या गुरुलंघ्रूर्जिताः ।
रणे फलतया दृष्टा रवेर्वृत्तेर्घना इव ॥ १५३ ॥
ततो भूपबलात्क्रुद्धौ धात्रेयौ भूपतेर्हितौ ।
ठक्कुरौ निरगातां तौ वीरौ हस्सनहुस्सनौ ॥ १५४ ॥
सुवर्णसीहनम्राद्या राजपुत्रा रणाध्वरे ।
शस्त्रज्वालावलीलीढे जुहुवुः श्रीफलं वपुः ॥ १५५ ॥
ते वीरभ्रमरास्तत्र रणोद्याने तदाभ्रमन् ।
स्वामिमाधवसान्निध्याद्यशःकुसुमलम्पटाः ॥ १५६ ॥

ते वीरमस्तकाश्छिन्ना रणभूभाजने स्फुटम्।
क्षुत्तप्तस्य कृतान्तस्य कवला इव रेजिरे॥ १५७॥
रणतूर्यस्वनैस्तैस्तैर्जनकोलाहलैस्तथा।
वीराणां सिंहनादैश्च शब्दाद्वैतमजायत॥ १५८॥
तच्छुद्धये ऋणमिवेक्ष्य नृपप्रसादं
प्राप्ते क्षणे जहति ये निजजीविताशाम्।
तत्तद्विहस्तपरिरक्षणधर्मलुब्धा
धन्यास्त एव कतिचिन्नृपसेवकेभ्यः॥ १५९॥
राजाग्रादागतास्तीक्ष्णाः शरास्तत्पक्षपातिनः।
स्वयं पाहीति भीत्येव स्खलन्तः समचोदयन्॥ १६०॥
ध्वजचेलाञ्चला राजसुतस्याग्रे तु वायुना।
सकम्पा रणभीत्येव पश्चाद्भागमशिश्रियन्॥ १६१॥
शस्त्रकृत्तस्फुरद्वीरशिरःकमलनिर्भरा।
जीवनाशा चलत्पत्रा नलिनी रणभूरभूत्॥ १६२॥
शौर्यमत्यद्भुतं दृष्ट्वा सूनोस्तत्कटकस्य च।
पुनर्जातमिवात्मानं रणोत्तीर्णं नृपोविदत्॥ १६३
कृ ा सर्वदिनं युद्धं बलाद्भृत्यैर्निवारितः।
हाजीखानः सवित्राणः समरात्स न्यवर्तत॥ १६४
भग्नं निजानुजं दृष्ट्वा पश्चाल्लग्नो विविग्नधीः।
अग्रजोथावधीन्नम्रान्मग्नांस्त्रासार्णवे भटान्॥ १६५॥
किमुच्यते नृशंसत्वं येन शूरपुरान्तरे।
जन्मयात्रागतो मोहान्निहतः पथिकव्रजः॥ १६६॥
यस्यां मन्दप्रभो भास्वाञ्जनैः सर्वैर्विलोकितः।
दक्षिणस्या दिशस्तस्याः प्रवासी स नृपोभवत्॥ १६७॥

दुर्योधनार्पितरसा गुरुशल्यविष्टा
भीष्मप्रियाः परहति प्रतिदत्तकर्णाः ।
ये धर्मजातिविमनस्कतया कृपेच्छा-
स्ते कौरवा इव रणे न जयं लभन्ते ॥ १६८ ॥
अन्येद्युर्हतशिष्टांस्तान्भृत्यानानीय पूर्ववत् ।
हाजीखानः सानुतापश्चित्रदेशे स्थितिं व्यधात् ॥ १६९ ॥
खिन्नानाश्वासयन्कांश्चित्संभिन्नान्प्रतिपालयन् ।
भक्षयन्क्षुधया क्षीणान्नगाग्रे सोनयन्निशाम् ॥ १७० ॥
मा बाधिष्ट सुतं कश्चिन्मत्परो वातिविह्वलः ।
इति कारुणिको राजा न्यवर्तत रणाद्द्रुतम् ॥ १७१ ॥
आसिष्ये सुखितः सुतार्पितभरो बुद्धेति दत्ता निजा
राष्ट्रेशा वरसेवकाः सतुरगाः संवर्धिता ये मया ।
तेमी राज्यजिहीर्षवः सुतरता युद्धाय मय्यागता
धिङ्मां येन नयोज्झितेन घृणयानर्थः स्वयं स्वीकृतः॥१७२॥
इत्यादि विमृशन्राजा स्वपुरं दुःखितोगमत् ।
विरोधादायिनो निन्दन्सेवकान्विधिकर्मणा ॥ १७३ ॥
संग्राममृतवीरेन्द्रच्छिन्नमस्तकपङ्क्तिभिः ।
आनीय राजा नगरे सुखागारमकारयत् ॥ १७४ ॥
इत्थं सेवकपैशुन्यात्पितापुत्रविरोधतः ।
समरे तत्र तद्वर्षे वीरलोकक्षयोभवत् ॥ १७५ ॥
राज्यस्थितिप्रविकसन्नलिनीहिमौघो
लोकक्षयोचितमहाभयधूमकेतुः ।
विघ्नप्रसक्तखलघूकनिशान्धकारः
शापः सुखस्य नृपतेः स्वजनैर्विरोधः ॥ १७६ ॥

इति पण्डितश्रीवरविरचितजैनराजतरङ्गिण्यां मल्लशिलायुद्धवर्णनं नाम प्रथमः सर्गः ॥

---

I, 2



## द्वितीयः सर्गः

भूभृतो निर्गता प्रेमसरित्प्रोद्यानुजच्छलात्।
प्रत्यावृत्ता कियत्कालं शुद्धाग्रजमशिश्रियत्॥ १॥

यत्स्नेहभागी सुदशाभिरामो
भाति प्रदीपः समुपास्य पात्रम्।
आशाप्रकाशैकनिधेस्तदारा-
दसंनिधानेन विरोचनस्य॥ २॥

ददावादमखानाय नायकः स क्षितेस्तदा।
प्रमेयान्क्रमराज्यस्थाननुजीयान्विरागतः॥ ३॥

जगृहे स च वित्तौघं गृहग्रामादिदेवगम्।
ह्राजीहैधरखानीयं पानीयमिव वाडवः॥ ४॥

ततःप्रभृति ज्येष्ठः स कश्मीरान्तर्नृपाग्रगः।
यौवराज्ये सुखं तद्बद्बुभुजे पञ्चशः समाः॥ ५॥

येषां सुखं वितनुते विधिरन्नवृद्ध्या
दुर्भिक्षदुःखमपि संतनुते स तेषाम्।
वृष्ट्या विवर्धयति यानि तृणानि मेघ-
स्तान्येव शोषयति भावितुषारभारात्॥ ६॥

सर्वसस्यसमृद्धेस्मिन्देशे षट्त्रिंशवत्सरे।
अकस्माद्भवच्चैत्रे गगनात्पांशुवर्षणम्॥ ७॥

बभूव वर्षः षट्त्रिंशः सर्ववृष्णिकुलक्षयात्।
भयकृत्सर्वजन्तूनां भारतादिति विश्रुतम्॥ ८॥

अभवन्यत्र पुष्पौघा धूलिधूसरताननाः।
भाविदुर्भिक्षपीडार्तजनचिन्तावशादिव॥ ९॥

भविता वत्सरेमुष्मिन्दुर्भिक्षं पांसुवर्षणात् ।
इत्याख्यन्नुत्तरं पृष्टा भूभुजा दैववित्तमाः ॥ १० ॥
षट्त्रिंशो वत्सरोतीतो दुर्भिक्षार्तिप्रदोभवत् ।
ऐषमस्तादृशः प्राप्तो भीतिरित्युदभूद्धृदि ॥ ११ ॥
पपात मार्गशीर्षेथ मास्युपद्रवदर्शनम् ।
देशेत्र विलसच्छालिमाले प्रालेयवर्षणम् ॥ १२ ॥
दुर्भिक्षदुःस्थितं लोकं कथं पश्यामि सांप्रतम् ।
इतीव भूरभूच्छन्नमुखी हिमसितांशुकैः ॥ १३ ॥
छादिताः शालयः पक्का हिमैर्जनमनोहराः ।
खलमूर्खसभामध्ये पण्डितैः स्वगुणा इव ॥ १४ ॥
कुक्ष्यावेगाद्बुभुक्षार्तः क्षपिताक्षः क्षणे क्षणे ।
आशु दुर्भिक्षयक्षोत्र व्यधात्प्रक्षीणलक्षणम् ॥ १५ ॥
प्रविश्य रात्रौ गेहान्तः क्षुद्रक्ष्यद्रोह्यपीडितः ।
हिरण्यादि धनं त्यक्त्वा भाण्डेभ्योन्नमपाहरत् ॥ १६ ॥
सर्वस्मिन्दिवसे रात्रावपि भिक्षुपरंपराः ।
शरा इवाविशन्देहे गेहे धान्यवहे तदा ॥ १७ ॥
धान्यवद्गृहसंदिष्टकुष्टकम्बुकदम्बकाः ।
नीरसापूपभोगेनाप्यरक्षन्केपि जीवितम् ॥ १८ ॥
पालीपालीवतासक्तटङ्कटङ्कितभोजनः ।
चिराच्चिरास्वादरतः कोपि कोपि हतोभवत् ॥ १९ ॥
क्षीणा ग्रामेषु वास्तव्याः केचिदन्नामृतात्यये ।
शाकमूलफलाहारा व्रतनिष्ठा इवाभवन् ॥ २० ॥
चिराट्टङ्कान्तरे क्षिप्त्वा शाकं किमपि तण्डुलम् ।
पक्कान्ये केपि तद्भोगादकुर्वन्प्राणधारणम् ॥ २१ ॥

सर्पिर्लवणतैलानां तण्डुलेन महार्घता ।
हृता नीचेन साधूनामिव सर्वोपयोगिनाम् ॥ २२ ॥
बहुधान्यकथानिष्ठो योभूत्पूर्वं पुरान्तरे ।
बहुधान्यकथानिष्ठस्तत्कालं स व्यलोकत ॥ २३ ॥
बन्धुजीवस्तदा कन्दो बन्धुजीव इवाभवत् ।
मन्दान्संधारयामास क्षुधान्धान्योन्धसा विना ॥ २४ ॥
धान्यखारेः क्रयः पूर्वं दीन्नाराणां शतत्रयम् ।
दुर्भिक्षतस्तदा सार्धसहस्रेणापि नापि सा ॥ २५ ॥
किमन्यत्कुत्रचिद्राष्ट्रे धात्रा निष्किंचनो जनः ।
अभवन्मण्डकुण्डस्य काञ्चिकेनापि वञ्चितः ॥ २६ ॥
यत्पूर्वमकरोद्धेलां रसवद्व्रीहिशालिषु ।
मन्ये तेनैव शापेन भयमापत्प्रजेदृशम् ॥ २७ ॥
करुणाकुलितो राजा स्वधान्यैः पुत्रवत्प्रजाः ।
पोषयामास मासेषु केषुचिद्यावदाकुलाः ॥ २८ ॥
तावदस्यैव माहात्म्यात्सस्यसंपद्व्यजृम्भत ।
सत्यव्रतानां भूपानां क्वावकाशश्चिरं शुचाम् ॥ २९ ॥
मन्येथवा विधिर्भूपकारुण्यप्रथनेच्छया ।
दौर्भिक्ष्यदौस्थ्याद्भूलोकमशोकमकरोत्तदा ॥ ३० ॥
पार्थिवोपप्लवे चौरा अन्धकारेभिसारिकाः ।
दुर्भिक्षे चैव तुष्यन्ति धान्यविक्रयिणो जनाः ॥ ३१ ॥
अतः क्षुधा महार्घा ये पदार्था धान्यविक्रयात् ।
गृहीतास्तेन्यदा पूर्वमूल्येनादापयन्नृपः ॥ ३२ ॥
दुर्भिक्षभक्षिताक्षोटलोकदक्षः क्षितीश्वरः ।
धिया सरलवृक्षेभ्यस्तैलाकर्षणमादिशत् ॥ ३३ ॥

तस्मिन्संवत्सरे राजा कारुण्याद्भूर्जगामिनी।
उत्तमर्णाधमर्णानां व्यवस्था विनिवारिता ॥ ३४ ॥

चतुःषष्टिकलाः शिल्पं विद्या सौभाग्यमेव च ।
दुर्भिक्षोपप्लवे सर्वं तदाभून्निष्प्रयोजनम् ॥ ३५ ॥

पदवाक्यतर्कनवकाव्यकथा-
बहुगीतवाद्यरसनृत्यकलाः ।
सुरतप्रपञ्चचतुरा वनिताः
क्षुधितस्य नैव जनयन्ति सुखम् ॥ ३६ ॥

इति जैनराजतरङ्गिण्यां श्रीवरपण्डितविरचितायां षट्त्रिंशद्वर्षे दुर्भिक्षवर्णनं नाम द्वितीयः सर्गः ।

---

## तृतीयः सर्गः

तुष्टः प्रसादमतुलं कुरुते क्षणाद्यः
क्रुद्धः प्रजासु कुरुते भयमप्रतर्क्यम् ।
उन्मत्तपार्थिवपतेरिव हन्त धातो-
र्लीलास्वतन्त्रचरितं भुवि बुध्यते कैः ॥ १ ॥

षट्त्रिंशद्वर्षदुर्भिक्षदुःखविस्मरणं जनः ।
न यावदकरोत्तावदष्टात्रिंशेपि वत्सरे ॥ २ ॥

वृष्ट्या सह रजोवर्षमपतद्गगनाद्भुवि ।
उदीपक्षतशाल्युत्थभाविदुर्भिक्षसूचकम् ॥ ३ ॥

अथाचिरेण गर्जन्तो धृतचापा घनाघनाः ।
जनानुद्वेजयामासुः शरासारैरिवारयः ॥ ४ ॥

वृष्ट्युपद्रवसंनद्धा फलर्द्धिहरणाकुलाः ।
उत्थिता बुद्बुदव्याजाद्दुष्टा नागफणा इव ॥ ५ ॥

उत्पन्नध्वंसिनो भावान्करिष्याम्यहमञ्जसा।
इति ज्ञापयितुं मेघो बुद्बुदानसृजद्भुवम्॥ ६॥
वृक्षाः सर्वत्र पत्रान्तःपतद्वृष्टिस्वनच्छलात्।
अश्रुबिन्दूनिवामुञ्चन्रुदन्तो जनचिन्तया॥ ७॥
वितस्तालेदरीसिन्धुक्षितिकाद्यास्तदापगाः।
अन्योन्यस्पर्द्धयेवोग्रा ग्रामांस्तीरेष्वमज्जयन्॥ ८॥
सविभ्रमा धृतावर्ता वाहिन्युत्थाः सहेषिताः।
जवादधावन्नुत्तुङ्गास्तत्तरङ्गतुरंगमाः॥ ९॥
अत्युच्चापातकृन्नीचोन्नतिदं च निरङ्कुशम्।
आसीदपथगं सत्यं तदा जलविजृम्भितम्॥ १०॥
मृद्वो जलस्य तत्कालेऽद्रिवृक्षविटपालिषु।
केनोपदिष्टं तत्काले मूलोत्पाटनपाटवम्॥ ११॥
आग्राग्रपशुगोप्राणिगृहधान्यादिहारकः।
भयदोऽभूज्जलापूरः स म्लेच्छौतिपञ्जसंनिभः॥ १२॥
तदा मडवराज्यस्था विशोका शोकदा नदी।
इतीव तज्जले तूर्णं ममज्जुर्गृहपङ्क्तयः॥ १३॥
पुराणेषु प्रसिद्धा या विशोका शोकनाशिनी।
तदाभूद्विपरीतार्था प्रजाभाग्यविपर्ययात्॥ १४॥
येभ्यः प्रतिष्ठा प्राप्ता तान्दुःस्थान्द्रष्टुमसांप्रतम्।
इतीव तोये तत्कालं ममज्जुर्नगरे गृहाः॥ १५॥
शिलादारुमयी मग्नस्तम्भीभूतचतुर्गृहा।
चतुष्पादिव धर्मो या लोकोत्तरणकृद्बभौ॥ १६॥
तारदाग्रामपङ्क्त्याश्च दर्शनाय विशांपतेः।
यात्रागतस्य रामस्य सेतुबन्ध इवाभवत्॥ १७॥

वितस्तायां कृता जैनकदलिः सा गृहोज्ज्वला ।
जलावेशात्तटे मग्ना भग्नाद्यनगरान्तरे ॥ १८ ॥
पादद्वयावशेषापि स्थापिताग्रे भविष्यताम् ।
पादद्वयं पूरयितुं समस्येव महीभुजाम् ॥ १९ ॥
क्रमराज्ये तदा कुर्वन्कल्लोलैराकुलं जनम् ।
महानप्प्रसरो वेगादगाद्दुर्गपुरान्तरम् ॥ २० ॥
अन्यः सरोवरः कोपि पद्मनागसरोन्तिकम् ।
प्रीत्या किमागतो दूराद्यं दृष्ट्वा विशशङ्किरे ॥ २१ ॥
स्वयमुत्पाटयत्यस्मान्वृक्षवत्स सहागतः ।
इतीव तत्र वेश्मानि चिक्षिपुः स्वं जलान्तरे ॥ २२ ॥
दूरे समुद्रो मद्भर्ता कोयं मे समुपागतः ।
इत्थं वितस्ता त्रस्तेव प्रतीपमगमत्तदा ॥ २३ ॥
सीमोज्झिता चलन्मार्गा पङ्कातङ्ककलङ्किता ।
स्थितिः कलियुगस्येव भूरभूज्जलपूरिता ॥ २४ ॥
तस्मिन्नवसरे धारासारं वर्षति वासवे ।
नौकामारुह्य भूपालो निरगाज्जनचिन्तया ॥ २५ ॥
पश्यञ्जलान्तरे मग्नां कृषिं कृशतरः शुचा ।
जनकारुण्यपुण्यात्मा विचचार पतिः स्थलम् ॥ २६ ॥
दृष्टानि यानि घोषेषु गहनत्वान्न जातुचित् ।
स्थानानि तानि भूपालो नौकारूढो व्यलोकयत् ॥ २७ ॥
प्रतापशिखिनेवाथ शोषितोगान्मितैर्दिनैः ।
शान्तिं क्रूरो जलापूरः स त्रिसारे समागतः ॥ २८ ॥
अथाचिरेण तद्वर्षे दानोत्कर्षादिव प्रभोः ।
हर्षमन्वभवन्सर्वे पक्वया शालिसंपदा ॥ २९ ॥

I, 3



प्रजाचन्द्रकलावृद्ध्यै कश्मीरेन्द्रपयोनिधिः।
तूर्णं पूर्णात्मतां प्राप दयापीयूषभूषणः॥ ३०॥

आत्मेव कश्चित्सुकृती क्षितीशः
प्रजा प्रियास्य प्रकृतिर्यथैव।
तत्सौख्यवृद्ध्या सुखिता यदास्ते
तदीयदुःखेन च दुःखभागः॥ ३१॥

वितस्तोच्चतटे भूयस्तदुपद्रवशङ्कया।
पुरं चिकीर्षुर्बभ्राम जयापीडपुरान्तिके॥ ३२॥

अकरोत्तिलकं भूमेरलकादर्पहृत्पुरम्।
स जैनतिलकं नाम नदीतीरोन्नतिस्थले॥ ३३॥

राज्ञो दिदृक्षयेवात्र राजधानीरुचिच्छलात्।
सौधभित्तिगता नूनं चन्द्रिकास्ते सुधासिते॥ ३४॥

मूलोत्पाटे दशास्योर्मिर्मेशेन विवर्धितः।
इतीव खिन्नः कैलासः सौधव्याजादिवागतः॥ ३५॥

सुधासितगृहा यत्र सन्नागारवसुंधरम्।
जयापीडपुरं जीर्णं हसतीव रुचिच्छलात्॥ ३६॥

तलद्वारोत्सुकस्यास्य राज्ञः प्रत्यक्षतां गतम्।
मयासुरपुरं किं वा यद्दृष्ट्वेत्यवदन्बुधाः॥ ३७॥

यद्वारि कान्तं संक्रान्तं परितः सरितस्तटात्।
द्वारिकां हसतीवास्य द्वारि कान्त्या सुधासितम्॥ ३८॥

तत्र राजपुरीयाय जयसिंहाय भूपतिः।
प्रददौ राज्यतिलकं निजजन्मदिनोत्सवे॥ ३९॥

तत्रोपविष्टः संतुष्टः सेवया मे महीपतिः।
भट्टतन्त्राधिकारं च प्रददौ ब्राह्मणप्रियः॥ ४०॥

काश्मीरकाश्यदेशीयसर्वगीताङ्किताङ्गने ।
तस्मिन्संवत्सरे राज्ञा चक्रे कनकवर्षणम् ॥ ४१ ॥
तत्रोपकण्ठे भूपालः स्मृत्यै कण्ठीरवद्विषः ।
हेलालनाम्नो दासस्य हेलालपुरकं व्यधात् ॥ ४२ ॥
शैलपीठं विधायोच्चैर्जयापीडपुरान्तरे ।
सरस्तीरे मनोहारिराजवासं स्वकं व्यधात् ॥ ४३ ॥
उदीपब्रुडितं जीर्णं निर्लुण्ठ्योपसरोवरम् ।
महाप्रज्ञो नृपश्चक्रे तद्वद्राजा गृहावलिम् ॥ ४४ ॥
नागयात्रादिने यत्र प्रत्यब्दं दिनपञ्चकम् ।
गणचक्रोत्सवे राजा योगिनो भोगिनो व्यधात् ॥ ४५ ॥
यत्र कादम्बरीक्षीरव्यञ्जनादिप्रपूरिताः ।
कृत्वा पुष्करिणीः सर्वान्स यथेच्छमभोजयत् ॥ ४६ ॥
यत्र योगिसहस्रोत्थशृङ्गनादासकृच्छ्रुतेः ।
जाने मानसनागोपि न्यमीलन्निजचक्षुषी ॥ ४७ ॥
न तदन्नं न तन्मांसं न तच्छस्यं न तत्फलम् ।
न ते भोगा न ये राज्ञा भोजिता भोजनक्षणे ॥ ४८ ॥
योगिनां त्रिविधाश्लीलं मद्यमत्ततयोदितम् ।
असहिष्ट नृपो भक्त्या यदसह्यं जनैरपि ॥ ४९ ॥
महार्घपरिधानोद्यद्दानमानादिलाञ्छनैः ।
तेषामधिपतिं यत्र मेरं स्वसदृशं व्यधात् ॥ ५० ॥
सत्कन्थाकिंनरामुद्रादण्डाद्यैर्द्वादशीदिने ।
भारिकान्योगिनः कृत्वा प्रत्यमुञ्चत्ततो बहिः ॥ ५१ ॥
वितस्ताजन्मपूजार्थं त्रयोदश्यां ततो नृपः ।
दीपमालादिदृक्षुः सन्नौकारूढोभ्यगात्पुरम् ॥ ५२ ॥

I, 3



सुभाषितानि संशृण्वन्संगीतानि जलान्तरे ।
समारोहावरोहाभ्यां स पौराशिषमग्रहीत् ॥ ५३ ॥
पूजार्थं प्रस्फुरत्पौरदत्तदीपावलिच्छलात् ।
वितस्तान्तरमायाता तीर्थकोटिरिवाद्युतत् ॥ ५४ ॥
पारावारतटप्रत्तदीपमालास्तदा दधुः ।
अर्चनाप्तसुरोन्मुक्तसुवर्णकुसुमश्रियम् ॥ ५५ ॥
वितस्तावलिपूजाप्तनागरीमुखनिर्जितः ।
लज्जया कम्पतीवेन्दुः सेवाप्तः प्रतिमाच्छलात् ॥ ५६ ॥
गर्वखर्वीकृताराति: सुपर्ण इव लीलया ।
सर्वां रात्रीं स गान्धर्वचर्वणैरनयत्सुखम् ॥ ५७ ॥
वन्द्योसौ गुणिबान्धवो दिनपतिर्यस्योदयानुग्रहा-
दृष्टा कुत्र न सर्वदर्शनसुखात्सच्चक्रहर्षस्थितिः ।
निन्द्यौ तस्य सुतौ पितुर्विसदृशौ लोकव्यथोत्पादकौ
यौ कालोयमिति प्रथामुपगतौ क्रूरग्रहौ निश्चितौ ॥ ५८ ॥
अत्रान्तरे निजद्वेषवशात्कलुषिताशयः ।
आदामखानो निःशेषं देशमाक्रामयद्धठात् ॥ ५९ ॥
यत्राश्मेवातिकठिनास्तन्त्रतन्त्रितयन्त्रिणः ।
दुर्मन्त्रिणोभजन्राज्ञि तस्मिन्सोपि स्वतन्त्रताम् ॥ ६० ॥
स्फीते भीते न कामास्त्रे शास्त्रे न रसिकोभवत् ।
केवलं मृगयासक्तश्चमत्कारं श्वभिर्व्यधात् ॥ ६१ ॥
सरसामन्तरेरण्ये यत्र कुत्रापि तिष्ठतः ।
मृगयारसिकस्यात्र रात्रिर्दिनमिवाभवत् ॥ ६२ ॥
किमुच्यतेन्यन्नीचत्वं यद्भृत्यैर्व्यवहारिवत् ।
श्येनसंहृतपक्ष्यौघविक्रयो नगरे कृतः ॥ ६३ ॥

अथैकदा विभज्यासौ यौवराज्यमदोद्धतः ।
क्रमराज्यं नृपत्याज्यं ययौ प्राज्यपरिच्छदः ॥ ६४ ॥
यत्र यत्रोपविष्टः स पापनिष्ठोप्यनिष्टवत् ।
अभवन्पीडितग्रामीणाक्रन्दमुखरा दिशः ॥ ६५ ॥
प्रसादमतुलोदग्रप्रतिग्रहदृढां क्षितिम् ।
उपग्रह इवात्युग्रः संजहार पदे पदे ॥ ६६ ॥
क्वचिद्भीत्या क्वचिद्भीत्या क्वचिन्नीत्या विलोभयन् ।
लोभग्रस्तो बलात्कारान्न केषामहरद्धनम् ॥ ६७ ॥
स प्राकृत इव व्याजमैत्रीं कुर्वन्गृहागतः ।
लोभादन्याँल्लुवन्यांस्तानन्यान्वित्तैरवञ्चयत् ॥ ६८ ॥
नीता जारकृताद्युक्त्या सभयास्ताडयन्स्त्रियः ।
तदुक्त्यादण्डयत्तस्य ग्रामीणान्सेवकव्रजः ॥ ६९ ॥
तत्तच्छिनिग्रहस्थानसावधानमतिस्तदा ।
स तार्किक इवात्युग्रो राष्ट्रियैर्दुर्जयोभवत् ॥ ७० ॥
जायास्नुषादुहित्राद्या भव्या येष्वभवन्गृहे ।
बलात्प्रविश्य संभुक्ता निर्लज्जैस्तस्य सेवकैः ॥ ७१ ॥
समण्डमत्स्यं कुण्डैस्ते पीत्वा शुण्डान्तरे मधु ।
भाण्डा इव मदोच्चण्डाः श्वासैर्भाण्डमवादयन् ॥ ७२ ॥
तण्डुलाश्च कुसूलेभ्यः शालाभ्यः पीनबर्कराः ।
वीटिकाभ्यः स्वयं मद्यं भुक्तं तैर्बलकारिभिः ॥ ७३ ॥
सेवकानौचिती तस्य कियती वर्ण्यते मया ।
येश्वमूर्धनि वास्तव्यान्घृताभ्यङ्गमकारयन् ॥ ७४ ॥
हसन्तीरिव ज्वालाभिस्तैलपूर्णा हसन्तिकाः ।
तान्वारयित्वा ये दीपाग्निशास्वज्वलयञ्शठाः ॥ ७५ ॥

इत्यादि कुत्सिताचारं भारार्त इव भूपतिः।
विज्ञप्योद्वेजितो लोकैर्निर्गन्तुं नाशकद्गृहात्॥ ७६॥
पीडां मा कुरुतेत्यादि राजदूते ब्रुवत्यमी।
अवोचन्निति तद्भृत्या राजा क्रन्दतु पीडितः॥ ७७॥
वैरं यो गुरुभिः करोति सततं पुष्णात्यलं दुर्जना-
ल्लोँभात्संचयमातनोत्यनुदिनं तद्दानभोगोज्झितः।
दीनान्ग्राम्यजनांश्च पीडयति यो निर्हेतुमत्याक्षिपं-
स्तस्यासन्नविनाशिनः स्वविभवस्तापाय शापाय वा॥७८॥
कुर्वन्स्वसैन्यसामग्रीं कुद्मदेनपुरे स्थितः।
एकदा जैननगरे भूपालं सबलोऽभ्यगात्॥ ७९॥
तद्दिने शङ्कितस्तस्मात्पूर्णकर्णो दुरुक्तिभिः।
स्वसैन्यसंग्रहं राजा राजधान्यां गतोऽकरोत्॥ ८०॥
वितस्तान्तर्वसद्दारुशैलपूर्णचतुर्गृहम्।
तरदायामपङ्क्त्युच्चदशकं नगरान्तरे॥ ८१॥
सेतुबन्धं व्यधाज्जैनकदलाख्यमयं नृपः।
स्वकृतं तं तदाज्ञासीत्स्वविघ्नमिव भीतिदम्॥ ८२॥
नगरोपप्लवाशङ्की संत्रस्तो यत्नमास्थितः।
पुरान्निष्कासयामास तं सुतं मन्त्रयुक्तिभिः॥ ८३॥
संतापप्रदमुत्तरायणमिहालोच्यापि रम्यं गुणै-
र्यो वाञ्छत्यथ दक्षिणायनममुं ज्ञात्वा हिमार्तिप्रदम्।
लोकानामसुखक्षयार्थमुभयोराद्यं पुनर्यो भज-
त्यर्थायैव परोपकारनिरतः सूर्याय तस्मै नमः॥ ८४॥
क्रमराज्यान्तरं प्राप्ते तस्मिन्द्वैराज्यशङ्कितः।
स्वाक्षरैर्हाजिखानं स प्राहैषीत्पत्रमित्यदः॥ ८५॥

पुत्र मेवसरो दुष्टस्तादृक्प्राप्तो दुरुत्तरः ।
यत्र मत्प्राणसंदेहे गतिर्नान्या त्वया विना ॥ ८६ ॥
मत्पत्त्रावेक्षणे युक्तं शयितस्य तवासनम् ।
आसीनस्य समुत्थानमुत्थितस्य च धावनम् ॥ ८७ ॥
किमन्यत्सत्यमेवोक्ते त्यक्त्वापि श्रुतयन्त्रणाम् ।
यद्यागच्छसि तत्तूर्णं पूर्णं प्राप्स्यसि वाञ्छितम् ॥ ८८ ॥
अतितूर्णं न चेत्प्राप्तो मयि जीवति विह्वले ।
गते मयि मदभ्यर्णं पुनरागमनेन किम् ॥ ८९ ॥
तावत्स्वयपुरं प्राप्तः सोभूत्तीर्णो नृपात्मजः ।
राजानीकैः समं युद्धमुद्धतं सबलो व्यधात् ॥ ९० ॥
राष्ट्राधिकारिणं तत्र नत्थभट्टं भटैः सह ।
हत्वा कृत्वा च कदनं देशोत्पिञ्जं क्षुधा व्यधात् ॥ ९१ ॥
अथोदतिष्ठत्तुमुलस्तत्कालं सैन्ययोर्द्वयोः ।
उन्नद्धखानसंनद्धयुद्धेक्षणसुदुःसहः ॥ ९२ ॥
अष्टाविंशाब्दवदस्मिन्पञ्चत्रिंशेपि वत्सरे ।
वैरं नीत्वा पितापुत्रौ पिशुनैः कारितो वधः ॥ ९३ ॥
तत्रत्यादरदा वान्ये परितः सरितो जले ।
ममज्जुस्तद्भयाद्येन शवपूर्णमभूत्सरः ॥ ९४ ॥
हत्वा मृत्युरिवात्युग्रां तद्दिने नृशतत्रयीम् ।
नौसेतुबन्धमुच्छिद्य नदीपारं समासदत् ॥ ९५ ॥
धिक्तं यः पैत्रिके देशे रक्षणीयेपि निष्कृपः ।
परदेशजयं त्यक्त्वा तादृङ्निन्द्यं समाचरत् ॥ ९६ ॥
पापास्ते शिखजादाद्या गृहीत्वोभयवेतनम् ।
भूपमुद्वेजयामासुः फलं यैरनुभूयते ॥ ९७ ॥

I, 3



उच्चः सत्फलदो यथायमहमप्येतादृगेतावता
स्पर्धी यावदियेष हन्त जनकेनैकेन मन्दः सुतः ।
भास्वानभ्युदितः स तावदतुलः सर्वप्रकाशोद्यतो
यन्माहात्म्यवशेन वक्रगतयो ध्वस्ता भवन्ति स्वयम् ॥९८॥
तद्देशकष्टदैर्दुष्टैः प्रजानां नाशहेतुना ।
आदामखानो वित्राणो लक्ष्म्या भाग्यैश्च तत्यजे ॥ ९९ ॥
इत्यातङ्कादिभिर्दुःखैर्वरं देशोत्र जीव्यते ।
सर्वनाशकरी मास्तु भूभर्तुर्बह्वपत्यता ॥ १०० ॥
सा चेत्तेषां स्वभेदो मा भूयाद्वैरात्परस्परम् ।
मा जायेताथ वा दुष्टः सुतः कस्यापि दुःखदः ॥ १०१ ॥
प्रजान्तकारिणौ क्रूरौ राजपुत्रावुभावपि ।
सूर्यस्येव महीभर्तुः पङ्कुकालाविवोदितौ ॥ १०२ ॥
अपकर्तॄन्विपन्नग्रान्दयमानः परानपि ।
क्षमी दाता गुणग्राही स्वामीदृग्लभ्यते कथम् ॥ १०३ ॥
व्यथितो यत्सुतैर्दुष्टैः सोस्मद्भाग्यविपर्ययः ।
शृण्वन्स रुदिताक्रन्दमिति पौरगिरः पथि ।
पाददाहव्यथार्तोपि नगरान्निरगान्नृपः ॥ १०४ ॥
पुत्रोत्पत्तिमवेक्ष्य तुष्यति नृपो वोढा धुरः स्यादिति
स्नेहात्संपदमस्य यच्छति नि...मुल्लङ्घ्य नीतिक्रमम् ।
ज्ञात्वा तं बलवन्तमात्मसदृशं तादृग्भिया शङ्कते
येनासन्नसुखो न जातु लभते निद्रां सचिन्ताज्वरः ॥ १०५ ॥
बद्ध्वा मल्लिकजस्रथेन स यदा राजालिशाहिर्हतो
भ्रातृद्वेषवशाद्बभूव कदनं काश्मीरिकाणां महत् ।
तद्वज्जैनमहीभुजोस्य तनयद्वेषात्किमालोक्यते
तन्माभूद्बहुसंततिर्नृपगृहे देशो विनाशप्रदा ॥ १०६ ॥

इति मार्गे कथाः शृण्वन्ग्राम्याणां जैनभूपतिः ।
वधात्कुतनयं निन्दन्प्राप स्वयपुरान्तरम् ॥ १०७ ॥
तीरद्वये वितस्तायाः पितापुत्रबलद्वयम् ।
न्यवीविशत्समासन्नं परस्परजयोद्यतम् ॥ १०८ ॥
अत्रान्तरे हाजिखानः पर्णोत्साच्चूर्णमागतः ।
सुपर्ण इव सद्वर्णदेशाभ्यर्णं समासदत् ॥ १०९ ॥
श्रुत्वा वराहमूलान्ते पुत्रं प्राप्तं बलान्वितम् ।
अग्रे भद्रामखानं तं सत्कर्तुं व्यसृजन्नृपः ॥ ११० ॥
कालापेक्षी हाजिखानः प्रेम्णाश्लिष्य कृतादरः ।
प्रीतिनिष्ठं कनिष्ठं तं भ्रातरं स्वममानयत् ॥ १११ ॥
अन्येद्युर्मानितं दृष्ट्वा जनकेन निजानुजम् ।
आदमखानो वित्राणः संत्रस्तोगाद्दिगन्तरम् ॥ ११२ ॥
शाहिभङ्गपथा सिन्धुं समुत्तीर्य बलान्वितः ।
प्राप सिन्धुपतेर्देशं कष्टक्लिष्टपरिच्छदः ॥ ११३ ॥
इत्थं त्रिंत्रिंशमे वर्षे ज्येष्ठं निष्कास्य युक्तितः ।
हाजिखानान्वितस्तुष्टो नगरं प्राप भूपतिः ॥ ११४ ॥
शिशिरसमये योभूत्क्लिष्टश्चिरं हतपक्षति-
धरणिकुहरेष्वन्तः कालं निनाय शुचाकुलः ।
कुसुमसमये प्राप्योद्यानं विकासिलतोज्ज्वलं
किसलयरतः सोयं भृङ्गः सुखं रमते पुनः ॥ ११५ ॥
अस्मिन्नवसरे तुष्टाद्धाजिखानोद्धृतं चिरात् ।
यौवराज्यपदं प्रापज्जनकाज्जनकोपमात् ॥ ११६ ॥
पितुः प्रेममणिं प्राप्य स्वच्छं भक्तिपरायणः ।
हृदयाभात्यजज्जातु श्रीमाञ्शार्ङ्गीव कौस्तुभम् ॥ ११७ ॥

विनयक्षिप्तदेवाग्रजानुसंकुचिताकृतिः ।
हकार इव सद्वर्णः सोष्मा सर्वावधिर्बभौ ॥ ११८ ॥

न तत्तीर्थं न सा यात्रा न सा लीला न चोत्सवः ।
तदाभून्नैव यत्रागाद्धाजिखानान्वितो नृपः ॥ ११९ ॥

यो नित्यं परितो वृतो गणशतैरत्यर्थभक्त्युज्ज्वलैः
पुत्राभ्यां सहितो हितस्त्रिजगतां नानाविलासान्भजन् ।
कालो गच्छति यस्य लास्यललितं गीतं च यच्छृण्वतः
शस्यः कस्य न तन्नमस्यविभवः कैलासवासो भवः॥ १२० ॥

इति जैनराजतरङ्गिण्यां आदमखाननिर्वासनं हाजिखानसं-
योगवर्णनं नाम तृतीयः सर्गः ।

---

## चतुर्थः सर्गः

अत्रान्तरे मदनबन्धुरयाद्वसन्तः
शृङ्गाररसारकुमुदाकररोहिणीशः ।
मानान्धकारविनिवारणभानुमूर्तिः
स्फूर्जल्लतालिललनानवयौवनश्रीः ॥ १ ॥

ततश्चैत्रोत्सवे राजा पुष्पलीलाचिकीर्षया ।
ययौ मडवराज्योर्वीं नौकारूढः सुतान्वितः ॥ २ ॥

तरण्डमण्डली राज्ञो वितस्तान्तरगा बभौ ।
शक्रस्येव विमानाली छायापटविभूषिता ॥ ३ ॥

स्वकीयराजवासस्थो राजावन्तिपुराद्गतः ।
विजयेशादिदेशेषु नाट्यं द्रष्टुमुपाविशत् ॥ ४ ॥

हरांशं भूभुजं जेतुं यत्र राजसभानिभात् ।
भवासक्तोभवत्कृत्वा बहुधा स्वं मनोभवः ॥ ५ ॥

सालंकारप्रबन्धज्ञाः सिद्धान्तश्रुतविश्रुताः ।
यत्रान्तःकरणोद्युक्ता द्रष्टारो गायना अपि ॥ ६ ॥
नानाग्रामगताश्चारुस्वररागमनोहराः ।
यत्र गीता रसस्फीता बभुर्युवतयोपि च ॥ ७ ॥
कलाकलापवेत्तासीन्मानमानससौख्यभृत् ।
रङ्गरङ्गद्रुचिर्लोको विद्याविद्यातसंशयः ॥ ८ ॥
प्रतितालैकतालादिबहुतालादिभूषितम् ।
तत्र ताराचनाराचसंज्ञानं विदधुर्नटाः ॥ ९ ॥
उत्सवा नाम कामास्त्रं गायनी नयनोत्सवा ।
लास्यताण्डवनृत्यज्ञा न केषां रञ्जिकाभवत् ॥ १० ॥
भावानेकोनपञ्चाशत्संख्यांस्तानांश्च तावतः ।
दर्शयन्त्यो बभुः पात्र्यस्ता मूर्ता इव मूर्च्छनाः ॥ ११ ॥
यासां नृत्ये च गीते च त्वत्तो मेस्त्यधिकं सुखम् ।
इति वादोभवच्छ्रोत्रनेत्रयोः प्रेक्षणक्षणे ॥ १२ ॥
पात्रीगानपिकध्वाने रङ्गोद्याने तदाद्युतन् ।
दीपचम्पकमालास्ता मधुपैः परितो वृताः ॥ १३ ॥
राज्ञो राज्येक्षणात्तुष्टैर्नृत्यप्रेक्षागतैः सुरैः ।
दीपमालाच्छलान्मुक्ता नूनं हेमाम्बुजस्रजः ॥ १४ ॥
जलान्तर्बिम्बिता कापि दीपाली नागलोकतः ।
वरुणेन नृपप्रीत्या दापितेवाद्युतत्तदा ॥ १५ ॥
ता दीपिता दीपमाला द्विधा रङ्गे चकाशिरे ।
दिदृक्षागतनागानां फणामणिगणा इव ॥ १६ ॥
किं राजालोकलोभात्तटभुवि मिलिताः पूर्वभूपालजीवाः
किं व्योम्नस्तारकौघः शशधरविमुखः सेवनायावतीर्णः ।

I, 4



किं वा सिद्धाः सुरेन्द्रा निजरुचिरुचिराः प्रेक्षणायोपविष्टाः
किं वैता दीपमाला इति जनमनसामास्त दूराद्वितर्कः॥१७॥
साक्षादेष पुरन्दरः कविबुधा विद्याधराः सेवका
अन्ते देवसभासदः सवपुषः सिद्धा अमी योगिनः ।
एता अप्सरसो रसोर्जितगुणा गन्धर्वका गायना
रङ्गोयं त्रिदिवस्थलीति जगदुः सर्वे जनाः प्रेक्षकाः ॥ १८ ॥
अङ्गारक्षारचूर्णादिगन्धकौषधयुक्तिभिः ।
रागैः शिल्पिकृता लीला क्रीडालोकमरञ्जयत् ॥ १९ ॥
तथाह्यौषधसंपूर्णान्नालाद्वन्हिकणा घनाः ।
निर्यत्कुसुमसंपूर्णस्वर्णवल्लीभ्रमं व्यधुः ॥ २० ॥
सर्पाकारानलज्वाला निर्गता सलिलान्तरात् ।
चक्रे प्रेक्षकलोकानां त्रासाश्चर्यभयोदयम् ॥ २१ ॥
नालकादुत्थिता व्योम्नि ज्वालागोलकपङ्क्तयः ।
राजद्राजतरोचिष्का जीवशुक्रोपमां व्यधुः ॥ २२ ॥
रज्जुबद्धागमद्दूरं ज्वलन्त्योषधनालिका ।
आहूतेव तया नीतास्ताहश्यो बहवो गताः ॥ २३ ॥
गतागतानि कुर्वन्त्यो दीप्ता उल्का इवोल्वणाः ।
प्रेक्षकाणां प्रिया दृष्टीरहरन्नद्भुतावहाः ॥ २४ ॥
अत्र पात्रीकरस्थापि ज्वलन्त्यौषधनालिकाः ।
द्युलोकोन्मुक्तसद्वर्णस्वर्णपुष्पश्रियं व्यधात् ॥ २५ ॥
निर्गतं ननु दण्डान्तर्ज्वालापिण्डं नभोन्तरे ।
उद्दण्डदण्डं सर्वेषां चण्डरश्मिभ्रमं व्यधात् ॥ २६ ॥
वन्हिक्रीडनलीलाया युक्तिज्ञेन महीभुजा ।
शिक्षयित्वा हभेभाख्यं तास्ताः सर्वाः प्रदर्शिताः ॥ २७ ॥

क्षारस्तदुपयोग्योत्र दुर्लभो योभवत्पुरा ।
तद्युक्तिशिक्षया राज्ञा स्वदेशे सुलभः कृतः ॥ २८ ॥
प्रश्नोत्तरमयी स्वोक्तिर्हेभेभं प्रति या कृता ।
पारसीभाषया काव्यं दृष्ट्वाद्य कुरुते न कः ॥ २९ ॥
ते शिल्पा मतिकल्पिताः स च सदा संगीतवाद्यो रसः
सालंकारविचारचारुधिषणा काव्ये च तत्कौशलम् ।
सच्छास्त्रश्रवणादरः स च नवप्रोत्पादनायोद्यमः
श्रीमज्जैनमहीपतेर्बहुमतेस्तस्येव कस्याधुना ॥ ३० ॥
खुजाब्दोल्कादराख्यस्य शिष्यः सर्वगुणाम्बुधेः ।
भूभुजश्चित्तमनयद्रागतालादिभिर्मुदम् ॥ ३१ ॥
खुरासानागतो मल्लाजादकाख्यो महीपतेः ।
वादनात्कूर्मवीणायाः प्रापातुलमनुग्रहम् ॥ ३२ ॥
मल्लाज्यमालनामापि म्लेच्छवाग्गेयकारकः ।
नारदो वासवस्येव राज्ञो भूदतिरञ्जकः ॥ ३३ ॥
तुम्बवीणाधरः सोहं सर्वगीतविशारदः ।
उद्गद्धनवगीताङ्ककौशलं समदर्शयन् ॥ ३४ ॥
अन्येपि जाफराणाद्या मया सह नृपाग्रगाः ।
तौरुष्कान्तुष्करान्रागानगायन्वीणया समम् ॥ ३५ ॥
गीतं द्वादशरागाङ्कं गायतां नः सभान्तरे ।
प्रीत्यैवैक्यमिवापन्नास्तन्त्रीकण्ठोत्थिताः स्वराः ॥ ३६ ॥
देशसंस्कृतकाव्यज्ञो राज्ञो निकटवास्यभूत् ।
पण्डितो नोत्थसोमाख्यो देशजैनचरित्रकृत् ॥ ३७ ॥
देशभाषाकविर्योधभट्टः शुद्धं च नाटकम् ।
चक्रे जैनप्रकाशाख्यं राजवृत्तान्तदर्पणम् ॥ ३८ ॥

भट्टावतारः शाह्नामदेशग्रन्थाब्धिपारगः।
व्यधाज्जैनविलासाख्यं राजोक्तिप्रतिरूपकम् ॥ ३९ ॥
वीणातुम्बीरभाभाद्याः सर्वास्तुष्टेन भूभुजा।
सुवर्णरौप्यरत्नौघैर्घटितास्ताश्चकाशिरे ॥ ४० ॥
तद्वाचिकाङ्गिकाहार्यसात्त्विकाभिनयोज्ज्वलम्।
नाट्यं दृष्ट्वा जनः सर्वश्चतुर्मुखमशंसत ॥ ४१ ॥
इत्थं त्रिवर्गविद्राजा त्रिजगत्ख्यातपौरुषः।
त्रियामास्त्रिविधैर्नृत्यैरनयत्त्रिदशोपमः ॥ ४२ ॥
स्फुरद्विचकिलोल्लासहासं स भवनान्तरम्।
आसदत्तारकापूर्णं पूर्णचन्द्रइवाम्बरम् ॥ ४३ ॥
ततो विमलकुण्डान्ते पानक्रीडां महीपतिः।
कर्तुं प्रचक्रमे तत्र पुत्रमित्रविभूषितः ॥ ४४ ॥
पितृप्रेमामृतोत्सिक्तो हाजीखानोथ भक्तिमान्।
वसन्तवर्णनोन्मिश्रां चाटूक्तिमवदद्विभोः ॥ ४५ ॥
संगीतनादनिपुणान्कलकण्ठभृङ्गा-
न्कृत्वानिलं व्रततिलास्यविधानदक्षम्।
गीतप्रियं नरपते किमु सेवितुं त्वां
प्राप्तो वसन्तऋतुचारणचक्रवर्ती ॥ ४६ ॥
मेघाडम्बरमम्बरं यदि तदा निर्नष्टशोभा वयं
नित्यं तीक्ष्णकरेण तेन दिवसे तत्राप्यहो बाधिताः।
स्वामी नः शशभृत्क्षयोदयहतो दुःखादितीवागता
उद्याने नरदेवसेवनपराः पुष्पच्छलात्तारकाः ॥ ४७ ॥
पङ्कातङ्ककलङ्किता जलमया ये भोगिदेहार्तिदा
स्त्वद्देशे विलसन्त्युपात्तविषयाः सन्मार्गविघ्नोद्यताः।

ते याताः स्वयमेव देव विलयं श्रीमत्प्रतापोदया-
दस्मिन्हर्षमये वसन्तसमये प्रालेयपूरा यथा ॥ ४८ ॥

श्रुत्वेति भूपतिर्हृष्टो हाजीखानाय सत्वरम् ।
सौवर्णकर्तरीबन्धमप्रमेयं समार्पिपत् ॥ ४९ ॥

यैर्यैः सेवा कृता तस्य शाह्यादेशे विचार्य तान् ।
पुत्रस्नेहेनभूपालो घोषराष्ट्राधिपान्व्यधात् ॥ ५० ॥

प्रेष्याद्याक्षेपसिन्ध्वौघमग्नांस्तान्सेवकव्रजान् ।
प्रसादपट्टपोतेन समुत्तीर्णान्व्यधान्नृपः ॥ ५१ ॥

विद्वद्गीताङ्घ्रिभृत्येभ्यस्तस्मिन्नवसरे नृपः ।
सुतास्यानन्दबाष्पाढ्यो व्यधात्कनकवर्षणम् ॥ ५२ ॥

दत्तमार्गोपचारार्था राष्ट्रिया दर्शनागताः ।
प्राप्तपट्टपरीधानमानतुष्टा न केभवन् ॥ ५३ ॥

तान्विलोक्य भवनोपवनादी-
न्पुष्पपूरपरिपूरितनौकः ।
संस्तुवन्मडवराज्यनिवासा-
न्प्राप जैननृपतिर्नगरं स्वम् ॥ ५४ ॥

इति जैनराजतरङ्गिण्यां पुष्पलीलावर्णनं नाम चतुर्थः सर्गः ।

---

## पञ्चमः सर्गः

अत्रान्तरे सुतप्राप्त्या निश्चिन्तः सुकृतोद्यतः ।
कुल्या नवनवाः कर्षन्प्रतिष्ठारसिकोभवत् ॥ १ ॥

कविः श्रीजोनराजो यां स्वसंदर्भान्तरेब्रवीत् ।
ग्रन्थविस्तारभीत्या तद्वर्णनं न मया कृतम् ॥ २ ॥

I, 5



एकैवास्त्यमरावती ननु पुरी साक्षातनिर्माणका
तत्राप्यत्र सदा विमानवसतिर्देवादिषु श्रूयते।
सोभूद्भूमिपुरंदरः पुरशतं कुर्वन्नवं सर्वतो
यत्रैते निवसन्ति मानसहितास्ते भूमिदेवादयः ॥ ३ ॥

श्रीजैननगरे पञ्चदशेब्दे या कृता पुरा।
राजधानी नवात्युच्चा विद्धा देवगृहोपरि ॥ ४ ॥

तस्याः समीपे नृपतिश्चत्वारिंशेथ वत्सरे।
इष्टिकादारुसंबद्धं राजवासं नवं व्यधात् ॥ ५ ॥

यत्पृष्ठे स्वर्णकलसो भाति भातिमनोहरः।
हेमपद्म इवोन्मुक्तः शक्रेण श्रुतकीर्तिना ॥ ६ ॥

यद्द्वाराग्रनियुक्तेभ्यस्तत्तत्कर्म समादिशन्।
आजीवं सोवसद्राजा राजधान्युज्झितस्थितिः ॥ ७ ॥

यत्र वापीगता हंसा गीतशंसां स्वनच्छलात्।
कुर्वन्तीव समीपस्था गायद्गीताङ्गिसंस्कृतैः ॥ ८ ॥

यत्र खर्वीकृताराातिः सुपर्वाधिपतिर्यथा।
सर्वाहः सुखगन्धर्वचर्वणैरनयत्सुखम् ॥ ९ ॥

यदन्तरे सुविस्तीर्णः सर्वदर्शनमण्डपः।
काचभित्तिमयो भाति त्र्यश्रसिंहासनोज्ज्वलः ॥ १० ॥

यद्गर्भोद्धूपसंदर्भनिर्भरान्नृपसंश्रितात्।
वातोपि सफलो यातः प्रातर्घ्राणसुखप्रदः ॥ ११ ॥

कदाचिल्लाहरं दुर्गे यात्रां द्रष्टुं गतो नृपः।
राजवासं नवं कृत्वा जीर्णोद्धारमकारयत् ॥ १२ ॥

समुद्रकोटादारभ्य यावच्छ्रीद्वारकावधि।
तत्तद्भवनवावासवासवालयसुन्दरान् ॥ १३ ॥

जैननामाङ्कितान्ग्रामानकरोन्नगभूषितान् ।
उपतीरं महापद्मश्रीमत्पन्नगभूषितान् ॥ १४ ॥
तदन्नसत्त्रतृप्तानामर्थिनां त्रिपुरेश्वरे ।
उदरं मेदुरं क्षान्तो राजा लम्बोदरः कथम् ॥ १५ ॥
अन्नसत्त्रे क्षितीशान्नैर्वराहक्षेत्रभूमिषु ।
अस्तु नम्रशिराः शेषश्चित्रमिन्द्रोपि चाभवत् ॥ १६ ॥
मत्स्येभ्यो नित्यतृप्तेभ्यः सूक्ष्माणामभयं ददौ ।
मत्स्यानामन्नसत्त्रेण वितस्तासिन्धुसंगमे ॥ १७ ॥
अर्थिनामतितृप्तानां श्रीशंकरपुरे नृपः ।
अपेक्ष्य विदधे छायां न फलानि महीरुहाम् ॥ १८ ॥
अश्रमायां व्यधादन्नसत्त्रैः संतर्पयञ्जनान् ।
भङ्गं शृङ्गाटवल्लीनां शृङ्गाटैरतिसंस्कृतैः ॥ १९ ॥
तस्य पद्मपुरे चान्नसत्त्रे व्यञ्जनसौरभैः ।
कथं न कुङ्कुमस्याभूद्गन्धभेदकदर्थना ॥ २० ॥
अच्छिन्नेनान्नसत्त्रेण विजेयश्वरवासिना ।
उदरे मेदुरे सिद्धः प्रणामो यत्नतो विभोः ॥ २१ ॥
अन्नसत्त्रमविच्छिन्नं कृत्वा शूरपुराध्वना ।
शुल्कस्थाने व्यधाद्राजा भारिकानभिसारिकान् ॥ २२ ॥
गुणी मूर्खो निराचारः साचारो यवनो द्विजः ।
नापोषि यस्तदन्नेन कश्मीरेषु स नाभवत् ॥ २३ ॥
शंभुश्रीपतिधातृजह्नुमनुभिः पूर्वं रवेरन्वये
जातेनापि कृतः श्रमस्त्रिपथगा गङ्गैव जाता नदी ।
तेषां स्वार्थमभूद्रसो नरपतिः सोयं परार्थे पुन-
र्देशेस्मिन्सुधिया नदीर्नवनवा नानापथः कृष्टवान् ॥ २४ ॥

I, 5



नवीनोदारकेदारभूम्युत्पन्नाः प्रतिस्थलम् ।
कूटा धान्यफलैः पुष्टा दृष्टाः पर्वतसंनिभाः ॥ २५ ॥
धान्यकूटच्छलान्नूनं साभूद्धात्र्याः कुचस्थली ।
प्राप्तोपाया प्रजा यस्माद्वृद्धिमापद्दिने दिने ॥ २६ ॥
दुर्लभोपद्रवानिष्टा यत्रयत्राभवत्क्षितिः ।
ससुप्य इव सस्याढ्यां तत्र तत्राकरोन्नृपः ॥ २७ ॥
न तत्स्थलं न कान्तारो न स देशो न साटवी ।
यत्र नानीय कुल्याः स्वाः स्वनामाङ्काः पुरीर्व्यधात् ॥ २८ ॥
न सा नदी न तत्क्षेत्रं न स ग्रामो न सा पुरी ।
न तत्स्थानं न यद्राजा जैननामाङ्कितं कृतम् ॥ २९ ॥
यत्र यत्राभवन्निम्नः प्रदेशस्तत्र कुल्यया ।
व्यधाद्राजा सरः पक्षिबिसशृङ्गाटभूषितम् ॥ ३० ॥
धन्यो वारिधरो धरोपकरणोद्युक्तः सदा जीवनै-
र्यैः सिन्धोः सलिलं निरर्थकतया निन्ये निकृष्यान्वहम् ।
कान्तारेष्वफलेषु केषु रुचिरं मुञ्चत्यभीक्ष्णं यत-
स्तत्सेकोदितसर्वशस्यविभवो लोकः सुखी जायते ॥ ३१ ॥
लोके डल इति ख्यातं यदगाधं सरोवरम् ।
तस्य प्रतिष्ठा प्रस्तावाद्वर्णनं क्रियते मनाक् ॥ ३२ ॥
आ राजधान्या यद्दीर्घं सुरेश्वर्याः सरोवरम् ।
नौकारूढोचरन्नित्यं व्योम्नीवेन्दुः सुनिर्मले ॥ ३३ ॥
अरित्रपत्रा यत्रान्तः सोड्डीनाः पटसुन्दराः ।
पोता इवारुचन्पोता राज्ञः शाकुनिकान्विताः ॥ ३४ ॥
तिलप्रस्थागता यत्र तटिनी त्रिपुरेश्वरात् ।
संगच्छते सुटङ्कां यल्लङ्कां द्रष्टुमिवोत्सुका ॥ ३५ ॥

श्रीपर्वतोपि षट्क्रोशस्तीर्थस्नानफलेप्सया ।
स्वसङ्घातिच्छलाद्यत्र मज्जतीव दिवानिशम् ॥ ३६ ॥
शैवलन्ति द्रुमा यत्र कमठन्ति च पर्वताः ।
पुर्यश्च नागलोकन्ति जलान्तर्यत्र बिम्बिताः ॥ ३७ ॥
यच्चलत्तृणभूशालिकुलानि सरसीरुहाम् ।
तत्सौगन्ध्यमिवाघ्रातुमानतानीक्षते जनः ॥ ३८ ॥
यल्लङ्कायुगलोत्प्रेक्षास्वोदयद्वयसंभ्रमात् ।
जाने याति रविः कुर्वन्प्रत्यब्दमयनद्वयम् ॥ ३९ ॥
यत्र तीरे सुरेश्वर्याः क्षेत्रं भुक्तिविमुक्तिदम् ।
वाराणस्यधिकं भाति तीर्थराजिविराजितम् ॥ ४० ॥
विहारैरग्रहारैश्च मठैः सुकृतकर्मठैः ।
आश्रमैरश्रमै राजवासैः स्वर्गोपमां व्यधात् ॥ ४१ ॥
दीर्घैश्चतुष्किकाहस्तैर्नृत्यन्त इव सूनृताः ।
दृश्यन्ते ये जनैर्दूराद्धेमच्छत्रवरोदराः ॥ ४२ ॥
येषां सिद्धपुरी नाम प्रसिद्धं नृपतेर्गृहम् ।
स्वसौधैः कुरुते सिद्धविमानावलिविभ्रमम् ॥ ४३ ॥
जीर्णा देवालया यत्र राजधान्यन्तरीकृताः ।
धृत्यौन्नत्या निजास्थित्या सत्यार्था भूभुजा कृताः ॥ ४४ ॥
यत्र सर्वतृणक्लेदनिर्भेदोत्पन्नभूस्थली ।
संचारिण्युर्वरा राज्ञां सफला विहिता धिया ॥ ४५ ॥
एकत्र देशे यत्रान्तःसत्रं श्रीजैनवाटिका ।
योगिनां पात्रपूजार्थं कृतं भोगाकृतस्मयम् ॥ ४६ ॥
मद्यपुष्करिणीमध्यसंक्रान्तः स्वादलिप्सया ।
यत्रैति द्विजराजोपि योगिचक्रान्तरे ध्रुवम् ॥ ४७ ॥

भूपतिर्भोजयन्योगिसहस्रं मीलदीक्षणम् ।
निष्कम्पमकरोन्नित्यं किं तृश्या किं समाधिना ॥ ४८ ॥

आहारमनु तीव्रोद्यत्कीर्त्या रसवतीश्रिया ।
दिवीव क्रियते यत्र सर्वा रसवती प्रजा ॥ ४९ ॥

पक्वान्नराशयोदभ्रा यत्राभ्रमुभ्रमप्रदाः
बिभ्रत्यभ्रभ्रमच्छुभ्रशरदभ्रश्रियोपमाम् ॥ ५० ॥

यत्राधर्ममृगं हन्तुं शृङ्गनादमिषाद्ध्रुवम् ।
संमिलत्सारसारावं श्रूयते मृगयारवः ॥ ५१ ॥

सामोदकामनिर्मुक्तमोदका यत्र योगिनः ।
श्रमघर्मोदका जग्धेर्जाता राज्ञः प्रमोदकाः ॥ ५२ ॥

योगिस्फुरत्करक्लिष्टदधिदिग्धाशनच्छलात् ।
योगाच्छशिकलास्रावास्तत्रैवान्त इवाद्युतन् ॥ ५३ ॥

मारी नाम नदी तस्माद्वितस्तान्तरमागता ।
केवलं याभवत्पौरस्नानपानप्रयोजना ॥ ५४ ॥

हस्तिकर्णाभिधे क्षेत्रे युक्त्या राज्ञा प्रवेशिता ।
सिन्धुसंगमपर्यन्तं निर्मिता शालिनालिनी ॥ ५५ ॥

मृतानां देहदाहेन स्वर्गदो नगरान्तरे ।
स मारीसंगमः ख्यातो जातः सङ्गाद्वितस्तया ॥ ५६ ॥

द्युक्षेत्रपालाः कालेन किंकराः पञ्चवारिकाः ।
पौरेभ्यः शवदाहोत्थमगृह्णञ्शुल्कमन्वहम् ॥ ५७ ॥

मतिपतृप्रमये राजा विज्ञप्तः स मयैकदा ।
दण्डयित्वा किरातांस्ताञ्शवशुल्कं न्यवारयत् ॥ ५८ ॥

ततः प्रभृति तत्स्थाने विमाना नगरान्तरे ।
दह्यन्ते दर्शनद्वेषिम्लेच्छानां हृदयैः समम् ॥ ५९ ॥

निरर्गला वयं जाता इतीव शिविकारकैः ।
छत्रहस्तैः प्रनृत्यन्तो दृश्यन्ते वाद्यनिस्वनैः ॥ ६० ॥
दिगन्तरीयया रीत्या यत्र राज्ञाप्यवारिताः ।
प्रियानुगमनं नार्यश्चितामारुह्य कुर्वते ॥ ६१ ॥
अर्थिसंघोपकारार्थं पौराणां सुकृती नृपः ।
विहारं बहुविस्तारं तत्संगमतटे व्यधात् ॥ ६२ ॥
स च हाजीविहारश्च पारावारे पुरद्वये ।
गृहश्रेणिमणिव्रातनायकश्रियमापतुः ।
अन्याः प्रतिष्ठास्तत्कालं राज्ञा स्वस्थेन कारिताः ॥ ६३ ॥
श्रीहर्षो नृपतिर्बभूव कविताराज्ये तदा येभवन्
सर्वे ते कवयः किमन्यदपि ते सूदाः स्त्रियो भारिकाः ।
सन्त्यद्यापि कृतानि तैः प्रतिगृहं पद्यानि विद्यानिधी
राजा चेद्गुणवान् गुणेषु रसिको लोको भवेत्तादृशः ॥ ६४ ॥
छात्रशाला विशालास्ता धर्मार्थं गुणशालिना ।
कृता याभ्यः श्रुतः शब्दस्तर्कव्याकरणोद्भवः ॥ ६५ ॥
आचार्यपुस्तकावाससहायान्नसमृद्धिभिः ।
पाठयन्सर्वविद्यानां वर्धयामास मण्डलम् ॥ ६६ ॥
न विद्यासुखयोः संधिस्तेजस्तिमिरयोरिव ।
इति व्यर्थं वचश्चक्रे मुनीनामभयप्रदः ॥ ६७ ॥
सौराज्यसुखिते देशे विद्याभ्यासपरायणे ।
अकाङ्क्षीत्सर्वदारोग्यं नृपतेः स्वस्य चान्वहम् ॥ ६८ ॥
राज्योत्पत्त्या नृपस्तादृकुष्टोभून्न प्रतिष्ठया ।
यथा पण्डितसामग्र्या यामग्र्यामविदद्गुणैः ॥ ६९ ॥
येषां स्वप्नेपि पाण्डित्यं नाभूज्जातुचिदन्वये ।
तेपि भूपप्रसादेन जाताः पाण्डित्यमण्डिताः ॥ ७० ॥

I, 5



वर्धिता जीवनोपायैर्दैवेन फलदाः सदा।
याताः सहस्रशाखत्वं विद्याः कल्पलता इव ॥ ७१ ॥
न सा विद्या न तच्छिल्पं न तत्काव्यं न सा कला।
श्रीजैनभूपते राज्ये नाभूद्या प्रथिता भुवि ॥ ७२ ॥
विदुषां मान्यतां दृष्ट्वा भूपतेर्गुणिबान्धवात्।
काङ्क्षन्ति स्मापि सामन्ताः पाण्डित्यं नित्यमादरात् ॥७३ ॥
निदाघकाले विषमः प्रतापो
दहेद्धरित्र्यां तृणगुल्मपूगान्।
वन्द्यो न केषां घनकाल एको
यो जीवनैस्तान्विततान्करोति ॥ ७४ ॥
सिकंदरधरानाथो यवनैः प्रेरितः पुरा।
पुस्तकान्सकलान्सर्वांस्तृणान्यग्निरिवादहत् ॥ ७५ ॥
तस्मिन्काले बुधाः सर्वे मौसुलोपद्रवाज्जवात्।
गृहीत्वा पुस्तकान्सर्वान्ययुर्दूरं दिगन्तरम् ॥ ७६ ॥
किमन्यद्विजवद्देशे सर्वे ग्रन्था मनोरमाः।
कथावशेषतां याताः पद्मानीव हिमागमे ॥ ७७ ॥
सुमनोवल्लभेनात्र राज्ञा भूषयता क्षितिम्।
नवीकृताः पुनः सर्वे मधुनेव मधुव्रताः ॥ ७८ ॥
पुराणतर्कमीमांसाः पुस्तकानपरानपि।
दूरादानाय्य वित्तेन विद्वद्भ्यः प्रत्यपादयत् ॥ ७९ ॥
मोक्षोपाय इति ख्यातं वासिष्ठं ब्रह्मदर्शनम्।
मन्मुखादशृणोद्राजा श्रीमद्वाल्मीकिभाषितम् ॥ ८० ॥
श्रुत्वा शान्तरसोपेतां व्याख्यां स्वप्नेऽपि नो नृपः।
अस्मार्षीदभिकाः कान्ता हावभावक्रिया इव ॥ ८१ ॥

यो यद्भाषाप्रवीणोऽस्ति स तद्भाषोपदेशभाक् ।
लोके न हि जना नानाभाषालिपिविदोऽखिलाः ॥ ८२ ॥
इति संस्कृतदेशादिपारसीवाग्विशारदैः ।
भाषाविपर्ययात्तत्तच्छास्त्रं सर्वमचीकरत् ॥ ८३ ॥
धातुवादरसग्रन्थकल्पशास्त्रोदितान्गुणान् ।
यवना अपि जानन्ति स्वभाषाक्षरवाचनात् ॥ ८४ ॥
दशावतारपृथ्वीशग्रन्थराजतरङ्गिणीः ।
संस्कृताः पारसीवाचा वाचकार्हास्त्वकारयत् ॥ ८५ ॥
म्लेच्छैर्बृहत्कथासारं हाटकेश्वरसंहिताः ।
पुराणादि च तद्युक्त्या वाच्यते निजभाषया ॥ ८६ ॥
कश्चिच्छ्रुत्वा शुचिरुचि चिरं धर्मशास्त्रं पवित्रं
धत्ते चित्ते पट इव सितो रञ्जनं तत्क्रियां यः ।
आकर्ण्यान्ये प्रतिदिनममुं पद्मिनीपत्रतुल्याः
कुल्याधारा अपि धृतगुणा गृह्णते तन्न किंचित् ॥ ८७ ॥
नौबन्धनगिरेर्यात्रामाकर्ण्यादिपुराणतः ।
तीर्थयात्रोत्सुकं राज्ञः कदाचिदभवन्मनः ॥ ८८ ॥
एकोनचत्वारिंशेऽब्दे पितृपक्षान्त्यवासरे ।
यात्रां दिदृक्षया भूयो जगाम विजयेश्वरम् ॥ ८९ ॥
नानावर्णांशुकच्छन्नैः प्रेक्षकैः परिपूरितम् ।
पुष्पाकीर्णमिवोद्यानमद्राक्षीद्रङ्गमण्डलम् ॥ ९० ॥
यत्र बान्दरपालाद्या राजानो वीक्ष्य सद्भलाः ।
तद्वर्षे दर्शनायाता हर्षमन्वभवन्निति ॥ ९१ ॥
गगनं तारकापूर्णं दीपाढ्यं रङ्गमण्डपम् ।
यत्रान्योन्यं तुलां चक्रे रात्रौ कविबुधार्चितम् ॥ ९२ ॥

अमावस्यादिने प्राप्तैर्नानानागरिकामुखैः।
शुशुभे शुभदं यत्र शतचन्द्रं भुवस्तलम्॥ ९३॥
दीपवृक्षो नृवाह्योपि यत्र रङ्गान्तरे स्फुरन्।
दध्रे तारकमध्योद्यत्कृत्तिकर्क्षचयोपमाम्॥ ९४॥
विजयेशादथोत्थाय भूपः पुत्रद्वयान्वितः।
पञ्चयामुलङ्घ्य दुर्मार्गं प्रपेदे वासरैस्त्रिभिः॥ ९५॥
दृष्ट्वा क्रमसरोविष्णुपादमुद्राकृतिं प्रभुः।
पादप्रणामजानन्दमविन्दद्भक्तिसुन्दरः॥ ९६॥
ब्रह्माच्युतेशगिरयः पतत्तोयरवच्छलात्।
अकुर्वन्कुशलप्रश्नं हरांशजमहीभुजे॥ ९७॥
कस्तूरीकुसुमश्यामां कोष्ठागारावनिं गिरेः।
दृष्ट्वा तुष्टो नृपश्रेष्ठो योगीवेष्टां हरेस्तनुम्॥ ९८॥
अथ नौकां समारुह्य धीवरैः पञ्चषैर्वृताम्।
धृत्वा मां सिंहभट्टं च चचार सरसोन्तरे॥ ९९॥
गीतगोविन्दगीतानि मत्तः श्रुतवतः प्रभोः।
गोविन्दभक्तिसंसिक्तो रसः कोप्युदभूत्तदा॥ १००॥
कुञ्जप्रतिश्रुतो मञ्जुर्गीतनादस्तदावयोः।
अनुगीत इवात्रस्थैः किंनरै राजगौरवात्॥ १०१॥
क्षणं सरोन्तश्चरतो हिमवृष्टिनिभाद्विभोः।
भक्तिप्रीतैरिवोन्मुक्तं देवैः कुसुमवर्षणम्॥ १०२॥
दृष्ट्वा सरोन्तरे श्वेता हिमान्यो भ्रमणाकुलाः।
तीर्थस्नानासकैलासशृङ्गभङ्गिभ्रमं व्यधुः॥ १०३॥
सत्यं विष्णववतारः स येन भक्त्या प्रदक्षिणम्।
त्रीन्वारानकरोन्नूनं ज्ञातुं स्वक्रमविक्रमम्॥ १०४॥

योभूदागमसिद्धार्थो नौबन्धनगिरिस्तदा ।
प्रत्यक्षार्थः कृतो राज्ञा बद्ध्वा नौकां यदागतः ॥ १०५ ॥
सकुमारसरो यावत्सुकुमारः स्मरन्पथि ।
स कुमारोम्बुपानेन सुखं पुण्यमिवासदत् ॥ १०६ ॥
शृण्वन्स्थानाभिधाः पुण्याः स्पृशंस्तीर्थजलं शुभम् ।
पिबन्सतुहिनं तोयं पश्यन्वनतरुश्रियम् ॥ १०७ ॥
जिघ्रन्नौषधिपुष्पाणि पञ्चेन्द्रियसुखप्रदाम् ।
तीर्थयात्रां विधायेत्थं नगरं प्राप भूपतिः ॥ १०८ ॥
इति राजतरङ्गिण्यां क्रमसरोयात्रावर्णनं नाम पञ्चमः सर्गः ।

---

## षष्ठः सर्गः ।

ततः क्रमसरस्तुल्यं राजा पद्मपुरान्तरे ।
तत्कौतुकापनोदाय चक्रे जैनसरो नवम् ॥ १ ॥
फुल्लत्कुङ्कुमपुष्पौघश्यामीभूतस्थलच्छलात् ।
शरदीवागता प्रीत्या यमुना यत्सरोवरम् ॥ २ ॥
कुलोद्धरणनागाख्यमण्डिते यत्तटे नवम् ।
राजद्राजगृहं राजा राजराजोपमो व्यधात् ॥ ३ ॥
उच्चैः पदस्थममलं रुचिरञ्जिताशं
संपूर्णमण्डलमखण्डकलाकलापम् ।
राजानमीशमवलोक्य हतोपतापं
काङ्क्षन्ति के न नितरामपि दूरसंस्थाः ॥ ४ ॥
दिगन्तरीया भूपालाः श्रुत्वैतद्गुणगौरवम् ।
नानोपायनवर्षौघैर्ववर्षुर्नितराममुम् ॥ ५ ॥
वेगेन जितवायुं स्वं ताजिकाख्यं तुरंगमम् ।
उपदां व्यसृजत्सख्यादुच्चैः पञ्चनदप्रभुः ॥ ६ ॥

I, 6



किंनरोश्वमुखः ख्यातः कण्ठान्नृत्यं न वेत्त्यसौ ।
इतीव नाट्यं यो दर्पाद्धरारूढोकरोत्पथि ॥ ७ ॥
प्रवालहस्तः सद्रश्मिः सुखलीनः सुलक्षणः ।
यथासावहमित्थं यो नासहिष्टास्य ताडनम् ॥ ८ ॥
पादैश्चतुर्भिः शुभ्रो यो मुखमध्येन चावहत् ।
कल्याणपञ्चकख्यातिं कल्याणाभरणोज्ज्वलः ॥ ९ ॥
माण्डव्यगौडभूमीशः खलुच्यो यो महीपतिः ।
अतूतुषन्द्रन्दामनामवस्त्रैरुपाहितैः ॥ १० ॥
इतो ह्यस्मै नृपो भव्यं काव्यं कृत्वा स्वभाषया ।
प्राहिणोद्द्रव्यसंयुक्तं सव्यसाच्यग्रजोपमः ॥ ११ ॥
सोप्यनर्घैः पदार्थैर्न तथा तुष्टो महीपतेः ।
सालंकारैर्यथा भूपकाव्यस्यातिमनोहरैः ॥ १२ ॥
वस्त्रं नारीकुञ्जराख्यं कुम्भराजो विसर्जयन् ।
अहरद्धृदि तच्छेषनारीकुञ्जरकौतुकम् ॥ १३ ॥
राजा डुगरसेहाख्यो गोपालपुरवल्लभः ।
गीततालकलावाद्यनाट्यलक्षणलक्षितम् ॥ १४ ॥
संगीतचूडामण्याख्यं श्रीसंगीतशिरोमणिम् ।
राज्ञे गीतविनोदार्थं गीतग्रन्थं व्यसर्जयत् ॥ १५ ॥
तस्मिन्राज्ञि दिवं याते कीर्तिसिन्धौ महीपतिः ।
तत्पुत्रः पितृवत्प्रीतिमरक्षत्प्रहितोपदः ॥ १६ ॥
मण्डलीकाधिपो राजा सुराष्ट्रनगराधिपः ।
प्राहिणोन्नृपतेः प्रीत्या ललामकमनीयकम् ॥ १७ ॥
चित्रवर्णोल्लसत्पक्षलक्ष्यशोभान्महीपतेः ।
पक्षिणो मुचुकुन्दाख्यान्प्राहिणोदक्षिसुन्दरान् ॥ १८ ॥

जिघांसया चरन्सोपि भूपतेः प्राकृतैर्गुणैः ।
बद्धो हिंस्रोपि डिल्लेशो बल्लूको रल्लुकोपमः ॥ १९ ॥
कश्चिच्छ्रीराजहंसस्य राजहंसयुगं ददौ ।
अन्ये हंसा यदुत्पन्ना राजहंसमरञ्जयन् ॥ २० ॥
सरःस्वन्तर्भ्रमन्तस्ते निर्दाराः पङ्क्तिपावनाः ।
तरङ्गतरलोत्फुल्लश्वेतोत्पलतुलां दधुः ॥ २१ ॥
खुरासानमहीपस्य यस्यैवाज्ञा हयप्रभोः ।
मूर्ध्नां मन्दारमालेव ध्रियते दिगधीश्वरैः ॥ २२ ॥
यस्यायुधोर्जितकराः किंकराः सुभयंकराः ।
यमस्य चार्पितकरा व्यचरन्धरणीतले ॥ २३ ॥
उत्तराशाधिपो मिर्जाभोसैदः स महीभुजे ।
उष्ट्राश्ववेसरीयुक्तं व्यसृजत्सोपधिं चरम् ॥ २४ ॥
कतेफसोफसग्लातख्यातवस्त्राद्युपायनैः ।
महम्मदसुरत्राणो गुर्जरीशोप्यतूतुषत् ॥ २५ ॥
गिलानमिस्रमक्कादिदेशाधीशा हितेच्छया ।
दुर्लभोपायनैस्तैस्तैर्न के भूपमरञ्जयन् ॥ २६ ॥
अनल्पाः शिल्पिनः कल्पवृक्षकल्पममुं न के ।
भृङ्गा इवाययुर्दूराच्छिल्पकल्पितकल्पनाः ॥ २७ ॥
काश्मीरिका अथाभ्यस्य तुरीवेमादिचातुरीम् ।
कौशेयकं वयन्त्यद्य बहुमूल्यं मनोहरम् ॥ २८ ॥
और्णाः सोफादयो वस्त्रविशेषा दूरदेशजाः ।
काश्मीरिकाश्च भान्त्यद्य समर्थास्ते नृपोचिताः ॥ २९ ॥
विचित्रवयनोत्पन्ननानाचित्रलताकृतीः ।
दृष्ट्वा चित्रकरा येषु जाताश्चित्रार्पिता इव ॥ ३० ॥

अनन्ततन्तुसंतानवर्णविच्छित्तिसुन्दरः ।
बभौ कौशेयकाख्यातो देशो वेशश्च भूपतेः ॥ ३१ ॥

नानावर्णविशेषचित्रकटकालंकारसारोचितो
विद्यामानवराजितोतिसुखदः कौशेयताख्यातिमान् ।
श्रीमान्नित्यमहोज्ज्वलोतुलगुणः सत्तन्त्रसंपत्तिभू-
द्राज्ञा तेन विशेषितो निजधिया वेशोपि देशोपि वा ॥३२॥

इति जैनराजतरङ्गिण्यां चित्रोपचयशिल्पवर्णनं नाम षष्ठः सर्गः।

## सप्तमः सर्गः

दाता भवेत्क्षितिपतिर्यदि सादरोयं
लोकोपि दर्शयति तत्स्वकलाकलापम् ।
वर्षासु वर्षति घनो यदि चातकोपि
नृत्यन्मुदा भवति तज्जनरञ्जनाय ॥ १ ॥

अथोत्तरपथाद्दानख्यातकीर्तेर्महीभुजः ।
रज्जुभ्रमणशिल्पज्ञः कोप्यागाद्यवनोन्तिकम् ॥ २ ॥

विशप्रस्थाभिधे स्थाने कदाचिद्यवनोत्सवे ।
तं द्रष्टुमगमद्राजा परिवारविभूषितः ॥ ३ ॥

धनुर्दण्डशतायामान्तरस्थान्दीर्घरज्जुभिः ।
उच्चान्स्तम्भानबध्नात्स स्वशिल्पप्रथनोद्यतः ॥ ४ ॥

अभवन्कलुषास्ते ये नागा रज्जुपुरादिषु ।
भाविस्वभक्तभूपालदेहानिष्टेक्षणादिव ॥ ५ ॥

अथो भूभागलग्नैकरज्जुमार्गेण निर्भयः ।
आरोहमकरोत्तत्र पतत्रीव नभोन्तरे ॥ ६ ॥

निपातास्खलितां तत्र लोकचित्तानुरञ्जिकाम् ।
कवितामिव शिल्पेज्याचित्रां पदगतिं व्यधात् ॥ ७ ॥

अनीचवर्तिनस्तस्य ग्रहस्येव फलप्रदा ।
सुरश्मिराशिगस्यालं बभूवाश्चर्यभूर्नृणाम् ॥ ८ ॥

कृत्वा सुखं सुरुचिरं सुचिरं विधाता
दुःखं पुनर्जनपदे जनयत्यसह्यम् ।
वर्षं प्रदर्श्य जलदः कृषिकर्षहेतुं
नेतुं फलं वितनुते करकाविकारम् ॥ ९ ॥

सौराज्यसुखिते देशे नरेशे निरुपद्रवे ।
अकस्माद्दुःसहाञ्जातानुत्पातान्ददृशुर्जनाः ॥ १० ॥

इत्यातङ्कागमे सेतुर्हेतुः सर्वजनक्षये ।
अथोत्तरदिशा रात्रौ धूमकेतुरदृश्यत ॥ ११ ॥

दीर्घपुच्छोच्छलत्कान्तितत्केतुकपटाङ्कुवम् ।
कालेन द्रुघणं क्षिप्तं क्षयायेव महीक्षिताम् ॥ १२ ॥

मासद्वयं स्फुरन्नासीत्स व्योम्नि विमले सदा ।
सदये हृदये राज्ञश्चिन्तौघोनिष्टशङ्कया ॥ १३ ॥

अदृश्यन्त सदा श्वानो विक्रोशन्तः पुरान्तरे ।
शुचेव रुदिताक्रन्दा भाविविघ्नेक्षणादिव ॥ १४ ॥

एकपक्षेभवच्चन्द्रसूर्यग्रहणसंस्थितिः ।
एकपक्षमिवादातुं राज्यं राजविपर्ययात् ॥ १५ ॥

सूर्यसंक्रान्तयः क्रूरदिनेष्वासास्तदा विशाम् ।
भाविक्रूरफलोत्पादसादचिन्तनभीतिदाः ॥ १६ ॥

मन्त्रिर्माता क्षयंयास्यत्ययं किमिति दुःखिता ।
राजधान्यरुदच्छत्रतलोलूकध्वनिच्छलात् ॥ १७ ॥

दृष्टोम्बरे द्वितीयस्यां सुधांशुस्तत्र तैर्जनैः ।
उत्तान इव भूपेशमन्यं सूचयितुं विशाम् ॥ १८ ॥

अत्रान्तरे महाघोरमनावृष्टिकृतं भयम्।
उदभूदन्यदेशेषु दुर्भिक्षोपद्रवासहम्॥ १९॥
भिक्षुकानन्यदेशीयान्प्रेतरूपानिवागतान्।
दृष्ट्वापृच्छन्नृपस्ते च वार्तां तस्याब्रुवन्निति॥ २०॥
राजन्देशेष्वनेकेषु वृष्ट्यभावात्समन्ततः।
सर्वान्तकृत्काल इव दुष्कालः समुपस्थितः॥ २१॥
दुर्भिक्षेण प्रभवता मणीनां सा महार्घता।
नीता नीचेन साधूनामिव सर्वोपयोगिनाम्॥ २२॥
भुञ्जते श्वादयोन्योन्यं पिशितं क्षुदुपद्रुताः।
तत्तच्छून्यगृहान्तःस्थनिःशेषितशवव्रजाः॥ २३॥
स्पृष्टोच्छिष्टतया दृष्टप्रायश्चित्तादिनिष्ठिताः।
क्षुधा द्विजवरा देव प्रयाताः सर्वभक्ष्यताम्॥ २४॥
क्वापि विप्रस्त्रियस्तत्तदभक्ष्यान्वीक्षणक्षमाः।
पक्वान्नं सविषं भुक्त्वा स्वमन्यांश्च व्यसून्व्यधुः॥ २५॥
अवृष्ट्या वसतिं त्यक्त्वा गते क्वापि मृते जने।
शून्या के न पुरग्रामा दृष्टा राजन्पदे पदे॥ २६॥
प्रीतिं स्नेहं च दाक्षिण्यं पत्न्यां पुत्रे पितर्यपि।
कुक्षिंभरिः क्षुदुत्तप्तो विस्मरत्यवनौ जनः॥ २७॥
खुरासानावनीशक्रं विक्रान्त्या शत्रुभूमिगम्।
अन्नाभावाद्भवन्मित्रमभिषेणेन निर्गतम्॥ २८॥
मिर्जाभोसैदनामानं सुरत्राणं रणान्तरात्।
इराकभूपतिर्बद्ध्वावधीत्कोटिबलान्वितम्॥ २९॥
तस्य दुर्योधनस्येव बद्धस्य हरणक्षणे।
अभूत्संख्यान्तरेसंख्यतुरुष्कनृपतिक्षयः॥ ३०॥

देशेषूद्भूतदुष्कालबलाबलविपर्ययात् ।
अन्योन्यनृपयुद्धेन विघ्नो देव पदे पदे ॥ ३१ ॥
सुखप्रदं भवद्देशं श्रुत्वान्नादिसमृद्धिभिः ।
आगतांस्तत्क्षमापाल रक्षास्मान्विक्षतान्क्षुधा ॥ ३२ ॥
श्रुत्वेतिवार्तामार्तो तां जानन्निव निजां प्रजाम् ।
द्रव्यकोटिं ददौ राजा तदर्थे करुणाकुलः ॥ ३३ ॥
अत्रान्तरे स्वयं सिद्धकृतं स्वयपरं महत् ।
समस्तं वह्निना दग्धं शून्यारण्यमिवाभवत् ॥ ३४ ॥
क्रमराज्यस्फुरत्प्राज्यराज्यतन्त्रक्रियाङ्कितम् ।
भूर्जभाण्डादि तत्रस्थं समस्तं भस्मसाद्भूत् ॥ ३५ ॥
ग्राह्यो जैनगिरिक्षेत्रे सप्तमांशोत्र भाविभिः ।
इति ताम्रमये पट्टे कल्पं यस्यां व्यधान्नृपः ॥ ३६ ॥
श्रीमाञ्जैनोल्लावदेवो नरेशो
याचे भूपान्भाविनो जैनगिर्याम् ।
कृष्टोत्पाद्य स्वैर्धनैर्भूमेयात्र
तस्या ग्राह्यः सप्तमांशो भवद्भिः ॥ ३७ ॥
जलावतरणं कृत्वा गिरीनुल्लङ्घ्य मत्कृतः ।
पुण्यकेतुरयं सेतुर्वर्धनीयः शुभेच्छया ॥ ३८ ॥
इत्थं ताम्रमये पट्टे श्रीवकाशीशनिर्मिता ।
प्रशास्तिरासीत्तां राजधानीवह्नी ररक्ष च ॥ ३९ ॥
प्रदीप्तः सुकृतोत्कर्ष इवास्यैव महीपतेः ।
अरक्षद्राजधानीं तां मध्यस्थामपि पावकः ॥ ४० ॥
श्रुत्वा दग्धं पुरं राजा शुचा दग्धो विदग्धधीः ।
अचीकरन्नवं तूर्णं चारु दारुमयैर्गृहैः ॥ ४१ ॥

राजा वराहमूलीयां राजधानीं पुरा कृताम्।
आनीय विदधे तत्र राजावासं नवं महत्॥ ४२॥
तन्त्रायकनृपागारं सेतुमत्तोम्भितं नवम्।
क्रमराज्यश्रियो हारं सारं सुय्यपुरं व्यधात्॥ ४३॥
सेतुमत्तोम्भिते तत्र गृहश्रेणिमणिव्रजे।
राजधानी स्फुरच्छत्रा धत्ते मध्यमणिश्रियम्॥ ४४॥
मानुष्यकं नववसन्तमिवाप्य हृद्यं
लोका लता इव वसन्ति नवे वनेस्मिन्।
तद्बान्धवा रुचिकरा इव पुष्पपूगाः
स्थित्वा दिनानि कतिचिच्चतुरं प्रयान्ति॥ ४५॥
विहगेष्विव जातपक्षपूगः
पुरुषेषु प्रभवेत्कुटुम्बवर्गः।
सुखगत्युचितोपि तत्प्रतिष्ठो
न चिरं तिष्ठति कायकष्टदायी॥ ४६॥
अत्रान्तरे दिवं याता सा बोधाखातोनाभिधा।
श्रीमत्सैदान्वयोदन्वच्चन्द्रिका नृपतिप्रिया॥ ४७॥
यत्संयोगसुखं प्राप्य सोह्लासीत्सफलं वयः।
तद्वियोगाद्विदग्धाङ्गः सर्वं शून्यमिवाविदत्॥ ४८॥
न्यस्तो राजेन्दुना सिन्धुदेशे यो गुणसुन्दरः।
स्वत्राणेन सुरत्राणपदे प्राणाधिकप्रियः॥ ४९॥
श्रीक्यामदेनं सिन्ध्वीशं भागिनेयं सुतोपमम्।
एवराहिमनाम्ना तं हतं युद्धेश्टणोन्नृपः॥ ५०॥
परमाश्वासनोपायः सुखे दुःखे च योभवत्।
तदा तन्मरणं राजा भुजच्छेदमिवाविदत्॥ ५१॥

दर्यावखानादिमृतौ याभून्मन्त्रिसभा नवा ।
लीलामित्रैः समं सर्वा सा ययौ स्मरणीयताम् ॥ ५२॥
लसन्मदो विभुशप्तकार्योत्पादितसौहृदः ।
तत्कालं प्रमयं यातो दाता मीरखुशाह्वदः ॥ ५३ ॥
दुर्वार्तामन्वहं शृण्वन्नार्तां जानन्निजां प्रजाम् ।
स्वसुतान्योन्यवीरेण चिन्तातप्तो नृपोभवत् ॥ ५४ ॥
अतीतान्बान्धवान्भृत्यान्सखीन्प्राणसमान्स्मरन् ।
स्वात्मानमविदद्राजा यूथभ्रष्टमिव द्विपम् ॥ ५५ ॥
अत्रान्तरे राजसूनोर्हाजीखानस्य रक्तजम् ।
अस्वास्थ्यमुदभून्नित्यं मद्यपानातिसेवनात् ॥ ५६ ॥
शौर्यौदार्यनिधेः सूनोरतिप्रियतया तया ।
राज्यसौख्यलता राजहृदुद्याने फलाचिता ॥ ५७ ॥
तदाभूनीरसप्राया तदस्वास्थ्यदवाग्निना ।
अथानीयान्तिकं दृष्ट्वा सविकारं भृशं कृशम् ॥ ५८ ॥
स्नेहादित्यब्रवीद्राजा पुत्रं मन्त्रिसभान्तरे ।
अहो पुत्रफलं लब्धं दोषासक्तेन पानजम् ॥ ५९ ॥
येनेदृशी दशा प्राप्ता चन्द्रेणेव क्षयावहा ।
स्वार्थापेक्षी हितः कोपि भृत्यस्ते नास्ति रक्षकः ॥ ६० ॥
पानव्यसनसंसक्तं यस्त्वामुपदिशत्यलम् ।
कियन्तो बत नो भोगाश्चमत्कारकरास्तव ॥ ६१ ॥
किमेकेन भवान्ग्रस्तो विषयेण पतङ्गवत् ।
अस्मिञ्जन्मनि सामग्री येयं प्राप्तान्यदुर्लभा ॥ ६२ ॥
प्राप्ता नैवेदृशी भूयो यदि दुर्व्यसनो भवान् ।
किं चिरंतनवृत्तान्तैर्वृष्ट्यादीनां समीरितैः ॥ ६३ ॥

मद्येनातनुभूपाला दृष्टनष्टा विचार्यताम् ।
तथा हि सबलारातिगणतूलसमीरणः ॥ ६४ ॥
मल्लेकजस्तथो योभून्मद्राज्याप्तिनिधानभूः ।
तेनापि दृष्टं दुष्टं प्राङ्नात्याक्षीत्तत्स्ववञ्चकः ॥ ६५ ॥
तस्य पुत्रोभवच्छाहिमसोदः प्रमये पितुः ।
सर्वं हारितवान्क्षीवः कुर्वन्नुन्मत्तचेष्टितम् ॥ ६६ ॥
सप्तप्रकृतिधात्वाढ्यं तन्मल्लेकपुरं महत् ।
कुपुत्रव्यसनाघातं देहवत्स्मरणीयताम् ॥ ६७ ॥
मद्यं यल्लोहितं वर्णं विभर्त्ति चषकान्तरे ।
जाने पापप्रवृत्तानां हृद्रक्तेनैव जायते ॥ ६८ ॥
न मद्येनामुना तुल्यः शत्रुरस्ति हि देहिनाम् ।
सेवितो हितकृच्छत्रुर्मद्यं हन्त्यतिसेवितम् ॥ ६९ ॥
मैरेयमदमत्ता यां कुर्वन्त्यनुचितां क्रियाम् ।
उन्मत्तोपि न तां कुर्याद्यत्स तस्मात्पलायते ॥ ७० ॥
मद्यरूपेण वेतालः प्रविश्य हृदयं क्षणात् ।
न केषां हरते प्राणान्सहासरुदितक्रियम् ॥ ७१ ॥
विषेण वामुना पुत्र पीतेनास्तेदृशी दशा ।
पाहि स्वं त्यज सावद्यं मद्यमद्यप्रभृत्यतः ॥ ७२ ॥
न चेत्त्यजसि मूढस्त्वं व्यसनार्पितमानसः ।
अचिराद्वञ्चितो लक्ष्म्या प्रक्षीणायुर्भविष्यति ॥ ७३ ॥
श्रुत्वेति राजपुत्रः स स्वपितुः संमता गिरः ।
त्वदाज्ञां न विना मद्यं पिबामीत्युत्तरं व्यधात् ॥ ७४ ॥
दीप्त्युज्झितं क्षीणदशं मन्दमस्नेहभाजनम् ।
सुतं दीपमिवेक्ष्याभूद्भूपो मोहतमोहतः ॥ ७५ ॥

उपदेशगिरः प्रियाः श्रुतौ गतभाग्येषु भवन्ति जन्तुषु ।
विपदभ्युदये पुनः स्मृता न मयाश्रावि किमित्यरुन्तुदाः ॥७६॥
अथ स्वावसथं गत्वा सोपिबद्यन्त्रितोपि सन् ।
विषवद्व्यसनान्धानामुपदेशो निरर्थकः ॥ ७७ ॥
तावता स्नेहमाशङ्क्य राजपुत्रेति मन्त्रिणः ।
आदमखानमानिन्युर्गूढलेखैर्दिगन्तरात् ॥ ७८ ॥
अनुजागमनत्रासाद्यथा यातोग्रजः पुरा ।
तथाग्रजागमत्रासादनुजो याति देशतः ॥ ७९ ॥
एतत्कलहनिश्चिन्तः प्राग्वत्स्यां निजमण्डले ।
इति बुद्ध्या प्रवेशोस्य कृतोपेक्षो नृपोभवत् ॥ ८० ॥
हाजीखानात्मजः श्रुत्वा तं पितृव्यं समागतम् ।
युयुत्सुः प्राप पर्णोत्सं त्यक्त्वा राजपुरीं ततः ॥ ८१ ॥
आन्द्रोटकोटमासाद्य भ्रातृपुत्रपितृव्ययोः ।
काश्मीरागमनद्वेषादभवद्युद्धमुद्धतम् ॥ ८२ ॥
दृष्टं हसनखानस्य क्षमित्वं बलशालिनः ।
विना पैतामहीमाज्ञां नागाद्देशोत्सुकोपि सन् ॥ ८३ ॥
अग्रजेभ्यन्तरं प्राप्ते द्वारस्थे लक्षिते पितुः ।
हाजीखानोनुजयुतो युक्त्या साम प्रयुक्तवान् ॥ ८४ ॥
दिव्यं मौसुलदेवेन ते कृत्वापि परस्परम् ।
नात्यजन्हृदयाद्वैरं कार्ष्ण्यमौर्णा इवांशुकाः ॥ ८५ ॥
अहो गुहायामेकस्यां प्राप्ता सिंहचतुष्टयी ।
एतदन्योन्यवैरोत्थो नाशोयं समुपस्थितः ॥ ८६ ॥
राज्ञो देशस्य खानानां परिवारस्य मण्डले ।
सर्वांस्तान्मिलितान्दृष्ट्वा प्रोवाच सकलो जनः ॥ ८७ ॥

अत्रान्तरे द्वयोर्द्विष्टं कनिष्ठं श्रेष्ठमात्मजम् ।
विचार्यानीय वह्रामखानं स विजनेब्रवीत् ॥ ८८ ॥
वह्राम ज्येष्ठो भ्रातायं द्विष्टो दुश्चेष्टितैः कृतः ।
स्मृतपूर्वापकारोयं हितो जातु न ते भवेत् ॥ ८९ ॥
अन्यं यं सेवसे भक्त्या दुराशाग्रस्तमानसः ।
स कथं स्वं सुतं त्यक्त्वा कार्ये त्वां समपेक्षते ॥ ९० ॥
तस्मात्त्वं पैशुनाचारं मा कृथा भाविदुःखदम् ।
मदेकशरणो भूत्वा कालं नय ततोचिरात् ॥ ९१ ॥
प्राप्स्यन्ति संपदः सर्वा न्यायमार्गस्थितस्य ते ।
अन्यथा तैलतप्तायःकटाहफरणीनिभः ॥ ९२ ॥
तद्वैरानलमध्यस्थो मुग्ध दग्धो भविष्यसि ।
श्रुत्वेति स पितुर्वाक्यं मुग्धधीरब्रवीदिदम् ॥ ९३ ॥
देव मे पितृवत्स्नेहं हाजीखानः करोत्यलम् ।
सेव्यः स एव मे भाति तं त्यजे नैव जातुचित् ॥ ९४ ॥
रक्षिष्यति स मां काले कोन्योस्मादधुना बली ।
श्रुत्वेति भूपः प्रोवाच क्रुद्धस्तं कृतनिश्चयम् ॥ ९५ ॥
हा धिग्त्वां मां परित्यज्य पितान्योङ्गीकृतस्त्वया ।
दृष्टिर्या विहिता मूढ प्रोल्लङ्घ्य वचनं मम ॥ ९६ ॥
तस्या नाशोचिरेणैव भविष्यति न संशयः ।
इत्युक्त्वा परिमुच्यामुं स्वान्तरेवमचिन्तयत् ॥ ९७ ॥
अहो प्रदीप्तान्मत्तोमी जाता विसदृशाः सुताः ।
त्रयोमी दहनागारादिव हा भस्ममुष्टयः ॥ ९८ ॥
अयोग्या दीप्तिरहिताः काष्ठाः कृष्टावनिष्ठिताः ।
कदाचिद्विजने राजा सुतानिष्टाविशङ्कितः ॥ ९९ ॥

अधुना करणीयं किं मयेति व्यक्तमब्रवीत् ।
तत्समक्षं बुधा येपि तत्प्रसङ्गाद्बभाषिरे ॥ १०० ॥
राजन्नुत्साद्यते देशो राज्यलुब्धैः सुतैस्तव ।
एकस्यैव निजं राज्यं किं नार्पयसि यो हितः ॥ १०१ ॥
व्याकुलत्वं विशां येन तव न स्याच्च भूपते ।
तत्रापि माणिक्यदेवः श्रुत्वामुं प्रबलं श्रिया ॥ १०२ ॥
वैरी स्याद्येन देशस्य सर्वनाशोऽचिराद्भवेत् ।
इति श्रुत्वाब्रवीत्पुत्रस्वभावेक्षणदक्षधीः ॥ १०३ ॥
ज्येष्ठः श्रेष्ठोस्ति किं त्वस्य कार्पण्यं येन सेवकाः ।
न सन्ति तादृशा येषां राज्यं दार्ढ्यमवाप्नुयात् ॥ १०४ ॥
मध्यमोतीव दातास्य प्रद्युम्नाचलसंनिभम् ।
द्युम्नं चेत्स्याद्व्ययान्नास्य कर्षमात्रोवशिष्यते ॥ १०५ ॥
कनिष्ठो दुष्टधीः पापनिष्ठोस्मादचिरात्सभा ।
नष्टा स्यात्तत्सुतं श्रेष्ठं जाने कमपि नोचितम् ॥ १०६ ॥
मया तावत्स्वयं राज्यं कस्मा अपि न दीयते ।
गते मयि बलं यस्य स प्राप्नोत्विति मे मतम् ॥ १०७ ॥
बहवो न मरिष्यन्ति यदि तन्मम को गुणान् ।
ज्ञासिष्यति यतः स्थित्या द्वयोर्भेदो हि लभ्यते ॥ १०८ ॥
ध्वान्तं पतेद्यदि न दिक्षु जनस्य दृष्टि-
र्नश्येन्न चेद्यदि मुषन्ति न तस्कराद्याः ।
संकोचमेति गुणवान्यदिनाम नासौ
जानाति नो दिनमणिं परलोकयातम् ॥ १०९ ॥
स्ववीर्येणार्जितं राज्यं योजितं स्वधिया मया ।
कुपुत्रैर्नाशितं सर्वं परस्परविरोधिभिः ॥ ११० ॥

सप्ताङ्गं धातुसंवद्धं राज्यं देहमिवोर्जितम्।
दोषैरिवैतैः पुत्रैर्मे त्रिभिः संदूषितं नु यत्॥ १११॥
तत्स्वास्थ्यमासादयितुं शक्ताः पथ्यचिकित्सया।
मन्मन्त्रिणोगदंकारा न सन्त्यद्यतने क्षणे॥ ११२॥
भुक्ता भोगाश्चिरं शास्त्रगीतकाव्यविनोदनैः।
वयः सफलतां नीतं कार्यं किमपि नास्ति मे॥ ११३॥
देशस्य यावत्युत्पत्तिर्नवा तत्त्रिगुणा मया।
संपादिता प्रजास्नेहात्कुल्याकर्षणयुक्तिभिः॥ ११४॥
सर्वदर्शनरक्षार्थै पात्राण्यालोच्य सर्वतः।
प्रतिपद्य शुभे काले भूर्नवा धर्मसात्कृता॥ ११५॥
सच्छिद्रमधुना राज्यं वदने रदनोपमम्।
तुदति प्रत्यहं तस्मात्तत्त्यागेन सुखं मम॥ ११६॥
चौराणामिव दीपोहं येषामक्षिगतोस्म्यहम्।
अचिरान्मद्गुणस्थित्या ते स्युरनुशयार्दिताः॥ ११७॥
स्थास्यन्ति न चिरं तेपि मद्विष्टा ये सुतादयः।
सकलाः प्रलयं यान्ति भुक्त्वा धान्यफलं न किम्॥ ११८॥
युक्त्या निर्याणमेवास्य जीवस्येच्छामि साप्रतम्।
येन सर्वे भविष्यन्ति पुत्राः पूर्णमनोरथाः॥ ११९॥
श्रुत्वेत्युक्तिं सदुःखस्य नृपतेस्तेब्रुवन्पुनः।
देवेदं चेन्मतं तत्किं कोशोयं रक्ष्यते महान्॥ १२०॥
परलोकस्य पाथेयं कुरु जीवन्स्वयं व्ययम्।
तदाकर्ण्याब्रवीद्राजा युक्तमुक्तमिदं वचः॥ १२१॥
किं तु शृण्वन्तु मे हेतुं यत्कोशोयं धृतो भृतः।
मयि प्रमीते मद्राज्यं मत्पुत्रः कोपि चेल्लभेत्।
मत्संचयेन तृप्तः स प्रजायाः स्वं त्यजिष्यति॥ १२२॥

पुत्राधिका प्रजेयं मे रक्षणीया विभाति या ।
तस्याः पीडां भविष्यन्तीं हरिष्ये संचयादतः ॥ १२३ ॥

पूर्णो विलासान्कुरुतेप्रजेशो
रिक्तः प्रजापीडनमातनोति ।
तृप्तो मृगेन्द्रो रमते गुहान्त-
र्भुङ्क्ते क्षुधार्तो वनजन्तुवर्गम् ॥ १२४ ॥

मत्संचयोपकारेण भाविभिः पीडनोज्झितैः ।
आयतिज्ञं वदद्भिर्मा करिष्यन्ते न गर्हणाः ॥ १२५ ॥

पूर्णाद्राजगृहादन्ये पूर्णाः स्युरुपकारकाः ।
नयन्त्यब्धेर्न चेत्तोयं भूमौ वर्षन्ति किं घनाः ॥ १२६ ॥

इयं या सामग्री भवति नृपतेः सर्वरुचिरा
धनेनैकेनैव प्रभवति चिरं सा प्रभवता ।
फलं पत्रं पुष्पं समुदयति यद्यद्विटपिनो
धरण्यन्तर्भूतो जनयति तदेको रसगुणः ॥ १२७ ॥

सुदीर्घदर्शिनो वाक्यं श्रुत्वेति पृथिवीपतेः ।
आसंस्तद्बोधकर्तारस्तदग्रे ते निरुत्तराः ॥ १२८ ॥

राजवेश्मनि पयोनिधौ च या
वाहिनीभृति पदार्थपूर्णता ।
जीवनाप्तजनयाचकाचिता
सैव तस्य सुषमा समाहिता ॥ १२९ ॥

यद्यदुक्तं नरेन्द्रेण स्मृत्वा तत्तत्फलेक्षणात् ।
न कः शंसति शोकार्तस्तदीयां दीर्घदर्शिताम् ॥ १३० ॥

सचिवाः सेवकाः पुत्रमित्रसंबन्धिबान्धवाः ।
दुःखापनोदं कुर्वाणाः केपि नासन्महीभुजे ॥ १३१ ॥

राजा गर्भगृहान्तस्थः शृण्वन्पुत्रस्थितिं मिथः ।
कृतकप्रेमवैराढ्यां न बहिर्निरयाद्धिया ॥ १३२ ॥

संसारदुःखशान्त्यर्थं मत्तो व्याख्यानवेदिनः ।
अशृणोद्गणरात्रं स श्रीमोक्षोपायसंहिताम् ॥ १३३ ॥

स्वकण्ठस्वरभङ्ग्याहं तद्वृत्तपरिवर्तनैः ।
व्याख्यामकरवं येन निःशोकोभूत्क्षणं नृपः ॥ १३४ ॥

भ्रमस्य जाग्रतस्तस्य जातस्याकाशवर्णवत् ।
अपुनः स्मरणं साधोर्मन्ये विस्मरणं वरम् ॥ १३५ ॥

दीर्घस्वप्नोपमं विद्धि दीर्घं वा प्रियदर्शनम् ।
दीर्घं वापि मनोराज्यं संसारं रघुनन्दन ॥ १३६ ॥

यदि जन्म जरा मरणं न भवे-
द्यदि वेष्टवियोगभयं न भवेत् ।
यदि सर्वमनित्यमिदं न भवे-
दिह जन्मनि कस्य रतिर्न भवेत् ॥ १३७ ॥

यतो यतो निवर्तेत ततस्ततो विमुच्यते ।
निवर्तनाद्धि सर्वतो न वेत्ति सुखमण्वपि ॥ १३८ ॥

मद्याख्याश्रवणाभ्यस्तान्स्वावस्थासूचकान्बहून् ।
इत्यादिकान्स्वयं श्लोकानपठत्स महीपतिः ॥ १३९ ॥

मोक्षोपाये श्रुते मत्तस्तत्तत्पद्यार्थभावनात् ।
अथैकदाब्रवीद्राजा विबुधानन्तिकस्थितान् ॥ १४० ॥

किमर्थं स्वसुतस्नेहं करिष्ये को न तेहितः ।
इत्येव वक्ति मे नूनं कर्णोपान्तागतो जनः ॥ १४१ ॥

अस्थिदन्तादिभिर्भङ्क्त्वा मांसं मांसेन भुज्यते ।
रक्तवीजमये भोगे भ्रमोयं न व्यपैति मे ॥ १४२ ॥

अहो मयि मृदौ सर्वसुखदे छिद्रकारिणः ।
नाशायामी सुता जाता राङ्कवे क्रिमयो यथा ॥ १४३ ॥
यैः समं स्ववयो नीतं तेवशिष्टा न केचन ।
आजीवनं चलत्येषा तद्वियोगविषव्यथा ॥ १४४ ॥
देहोटजमिदं जीर्णं केशतृणगणावृतम् ।
सच्छिद्रं रोचते नाद्य दुर्दिने मन्मनोमुनेः ॥ १४५ ॥
भुजगैरिव दष्टानि राज्याङ्गानि सुतैर्मम ।
तत्त्यागोपाय एवैको युक्तो मे नान्यथा सुखम् ॥ १४६ ॥
इत्यादि चिन्तयन्राजा पारसीभाषया व्यधात् ।
काव्यं शीकायताख्यं स सर्वगर्हार्थचर्वणम् ॥ १४७ ॥
राज्ञो धात्रेयपुत्राद्याः प्रमेयैरपि सत्कृताः ।
भूपपक्षं परित्यज्य हाजीखानमुपागमन् ॥ १४८ ॥
किमन्यद्व्यक्तमेवाह्नि ये दुष्टा नृपसंनिधौ ।
अलक्ष्यन्त निशि स्वैरं ते खानाग्रे गतत्रपाः ॥ १४९ ॥
ताटस्थ्येन स्थिते राज्ञि तद्भृत्यानां परस्परम् ।
तत्तदाक्षेपतो देशे कोप्यजृम्भत विप्लवः ॥ १५० ॥
भविष्यन्निव साम्राज्यस्यार्धभागी न कस्तदा ।
तत्पुत्रेष्वनुरक्तोभून्नतु राज्ञि सुखस्थिते ॥ १५१ ॥
इत्थं स्वभृत्यसंचारदुराचारविचारणात् ।
परिवारान्निजात्सर्वान्निर्विण्णोभून्महीपतिः ॥ १५२ ॥
अद्य ये स्वान्तिके दृष्टाः प्रातः खानान्तिके श्रुताः ।
दार्ढ्यं कुत्रापि नो प्रापुः सारसा इव सेवकाः ॥ १५३ ॥
हृद्गतो वर्ण्यते यस्मै तादृगाश्वासभाजनम् ।
तत्कालं सेवको भक्तो दृष्टः कोपि न भूभुजा ॥ १५४ ॥

यन्नोक्तं यच्च नो दृष्टं यच्छ्रुतं वा कदाचन।
निर्यन्त्रणो जनः प्रोचे प्रत्यहं राजमन्दिरे ॥ १५५ ॥
स्वभ्रातृकलहैकाग्रस्तत्तत्पैशुन्यकर्मणा।
वह्रामखानोनर्थानां कर्णो मूलमिवाभवत् ॥ १५६ ॥
स्निग्धोयमित्यवगते यदि काष्ठखण्डे
दत्तप्रदीपपदवीपरिदीपिताशे।
किं स ज्वलन्नपि करोति चिरं प्रकाशं
दोषं न कं वितनुते निजकज्जलौघैः ॥ १५७ ॥
प्राप्तस्त्राणाय राज्ञोसावित्याशा यन्निवेशिता।
अभूदादमखानः स वित्राणोप्यात्मरक्षणे ॥ १५८ ॥
भ्रात्रा समं जिघांसुं मां वह्रामो द्वैधनिष्ठुरः।
अहमेकोवलस्तन्मे गतिः कान्या त्वया विना ॥ १५९ ॥
नास्त्यस्मान्मे स्वजीवाशा तत्स्वात्मा रक्ष्यतां विभो।
त्वयि जीवति राज्यस्थे भयं मम न विद्यते ॥ १६० ॥
कुर्वन्त्यन्ये तदास्कन्दमद्यान्योन्यरणोद्यताः।
इत्यादिवार्ता शृण्वन्स बभूव भयविह्वलः ॥ १६१ ॥
इत्थमादमखानेन कदाचिज्ज्ञापितो नृपः।
ऊचे तं नास्ति मे लाभो राज्ये वा निजजीविते ॥ १६२ ॥
गच्छ कापुरुषाव स्वं विघ्नार्थे किमिहागतः।
इत्थं निर्भर्त्सितः पित्रा कुम्रदीनपुरीं गतः।
अनुजास्कन्दभीतोभूत्स्वरक्षणकृतक्षणः ॥ १६३ ॥
लुब्धेमुष्मिन्भवति हि सुखं सर्वदैवेति बुद्ध्या
यः संहर्तुं रिपुकृतभयो रक्षणीयोवभाति।
तत्तन्त्रस्थो यदि भवति स स्वात्मरक्षास्वशक्तो
भाण्डत्रासादिव तुरगतः प्रत्युतोपद्रवः स्यात् ॥ १६४ ॥

पित्रास्मदर्थमानीतो ज्येष्ठो द्विष्टो भयाय नौ ।
इति क्रुद्धौ सुतौ श्रुत्वा चकितः स नृपोभवत् ॥ १६५ ॥
राजा च राजपुत्रश्च तदमात्यपुरोगमाः ।
अन्योन्याशङ्किताः सर्वे न निद्रामुपलेभिरे ॥ १६६ ॥
भोगोपचारं संत्यज्य तत्कालं तेषु सेवकाः ।
यत्तज्जिह्वोपकारेणारञ्जयन्स्वामिनो निजान् ॥ १६७ ॥
कर्तव्यमादिशत्किंचिद्यत्स भृत्यान्क्षणान्तरे ।
अवोचत्कृतकर्तव्यान्किमुक्तं न स्मराम्यहम् ॥ १६८ ॥
स्वहस्ताक्षरसंपन्नां त्यक्ता रीतिं पुरातनीम् ।
ज्ञात्वा प्रकृतिवैगुण्यं चक्रे तन्त्रं स मन्त्रिसात् ॥ १६९ ॥
यैरस्मत्सदने क्षिप्तः सोयं वैरानलः खलैः ।
तच्छमाय कृतोपेक्षा तैस्तैरुभयवेतनैः ॥ १७० ॥
मद्वर्धितास्ते नश्यन्तु मन्त्रिणस्तनयाश्च मे ।
ये मन्नाशेन तुष्यन्ति राज्यलुब्धा जिघांसवः ॥ १७१ ॥
इत्युद्विग्नो महीपालः श्वसञ्जपपरायणः ।
प्राप्तदुःखोशपत्सर्वं यास्यति स्मृतिशेषताम् ॥ १७२ ॥
स्वामी विरक्तस्तत्पुत्रा मिथो वैरपरायणाः ।
किमु जीव विधेयं नः कष्टमापतितं महत् ॥ १७३ ॥
इत्थं पौरजनः सर्वश्चुक्रोशातितरां तदा ।
यवनव्रतमासाप्तौ त्यक्तमांसाशनो नृपः ॥ १७४ ॥
संदध्यौ च कुपुत्रोयं यैरानीतो दिगन्तरात् ।
तैः स्वात्मरक्षिभिः सर्वं राज्यं मे बत नाशितम् ॥ १७५ ॥
एकतः सबलौ पुत्रौ नगरे मिलितौ मिथः ।
एकतः पुत्र एकाकी तन्निष्ठा मन्त्रिणः शठाः ॥ १७६ ॥

पुत्रा युद्धं करिष्यन्ति कष्टमापतितं महत्।
किं तु दूये पुरी सेयं पाल्या कुलवधूरिव ॥ १७७ ॥
मयि जीवति नश्येच्चेत्किं कार्यं जीवितेन मे।
भक्ताः शक्ता गता भृत्याः किं पृच्छामि करोमि किम् ॥ १७८ ॥
इत्यादिचिन्तासंतापजाताधिव्याधिबाधितः।
विमुक्तराज्यनिर्बन्धः स निस्पन्द इवाभवत् ॥ १७९ ॥
सबालवृद्धं नगरं क्षुभ्यत्तत्तत्कुवार्तया।
सोभूदब्धिमिवोद्वृत्तं समास्थापयितुं क्षमः ॥ १८० ॥
भोक्तव्यं यन्मया भुक्तं किं भोक्ष्येद्य नय द्रुतम्।
आनीतभोज्यमन्येद्युः शिवभट्टं क्रुधाब्रवीत् ॥ १८१ ॥
अतिचिन्ताकुलो राजा छायायामप्यविश्वसन्।
दुध्रुक्षून्सचिवाञ्श्रुत्वा श्रद्दधे न स्वजीवितम् ॥ १८२ ॥
गतसंविदिव स्थित्वा दिनानि कतिचिन्निजैः।
स पृष्टोप्युत्तरं राजा न कस्मा अप्युदैरयत् ॥ १८३ ॥
पृष्टः प्रकृतिभिः कार्यं संभाष्यानर्थकं वचः।
रुजार्त इव शय्यायां स सुष्वापैकदालसः ॥ १८४ ॥
नाविदंस्तद्रुजो हेतुं लक्षणं वा चिकित्सकाः।
जानेवाच्यां शुचं हर्तुं बभूवानशनव्रती ॥ १८५ ॥
अत्युन्नतान्सुफलदान्विततोच्चशाखान्
ख्यातान्द्विजप्रियतया शुभमार्गसंस्थान्।
धाता निपातयति सर्वजनोपयोग्यान्
पृथ्वीधरांस्तरुवरानिव दुष्टवातः ॥ १८६ ॥
अत्रान्तरे त्रयः पुत्रा दोषा इव महोल्वणाः।
धातुवद्दूषयामासुर्देशे प्रकृतिसप्तकम् ॥ १८७ ॥

मूकप्रायं नृपं तादृगवस्थं द्रष्टुमन्वहम् ।
सशङ्कास्तमुपाजग्मू राजपुत्रा भटोल्वणाः ॥ १८८ ॥
गजांस्तुरंगांस्तत्पुत्रभीत्यै तादृग्दशं नृपम् ।
द्वाराग्रे स्थापयामासुः सर्वदर्शनदित्सया ॥ १८९ ॥
स्वस्तिवादध्वनिं श्रुत्वा सबाह्याभ्यन्तरा जनाः ।
द्वितीयेन्दुमिवाद्राक्षुः सानन्दा दर्शनागताः ॥ १९० ॥
श्रुत्वा बह्रामखानोथ चकितोन्तिकमागतः ।
गत्वरं लक्षणैर्ज्ञात्वा भूपं भ्रात्रेब्रवीदिति ॥ १९१ ॥
जीवत्यस्मत्पिता नैव मिथ्यैवोत्थाप्यते विटैः ।
द्वाराग्रात्पतितो भूमौ मूकप्रायो विचेतनः ॥ १९२ ॥
तदुत्तिष्ठ वयं यामः ससंनाहा नृपाङ्गनम् ।
हरामस्तत्तुरंगादि बद्ध्वा दुष्टांश्च मन्त्रिणः ॥ १९३ ॥
नौसेतुबन्धं छेत्स्यामस्तेन नश्यति तेग्रजः ।
श्रुत्वेति सोभ्यधान्नैवं वक्तुं युक्तं ममाग्रतः ॥ १९४ ॥
स्वप्नेप्यनिष्टं यस्याहं नेच्छामि स्वामिनः पितुः ।
तच्छ्रुत्वैकां निशां यावत्तदग्रे सोनयच्छुचा ॥ १९५ ॥
तावन्मुमूर्षुं तं श्रुत्वा पितृराज्यजिहीर्षया ।
आदमखानः श्रीजैननगरं सबलोभ्यगात् ॥ १९६ ॥
भटसंनाहसामग्रीं प्रापय्य पथि गोपिताम् ।
अवसत्स निशामेकां राजधान्यन्तरालये ॥ १९७ ॥
तावद्धस्सनकोशेशः स्वार्थान्धो मोहयन्परान् ।
गृहीतद्रव्यः श्रीहाजीखानपक्षं समाश्रयत् ॥ १९८ ॥
अथ निष्काशितोन्येद्युः सचिवैः सबलोग्रजः ।
कुत्रदीनपुरं गत्वा धिया भाग्यश्रियोज्झितः ॥ १९९ ॥

ज्येष्ठोप्यभूत्कुशलधीरपि भृत्ययुक्तः
शूरोप्यनन्यसदृशोद्यमधैर्ययुक्तः ।
प्राप्ते क्षणे किमपि साधु न कर्म कुर्या-
त्पुण्यैर्विना न हि भवन्ति समीहितार्थाः ॥ २०० ॥

स चेत्तन्निशि हत्वैकमहरिष्यत्तुरङ्गमान् ।
अलभिष्यद्ध्रुवं राज्यं बुद्धिः कर्मानुसारिणी ॥ २०१ ॥

अत्रान्तरे हाजीखानः कोशेशानुजचोदितः ।
राजधान्यङ्गनं गत्वा तुरंगाद्यहरत्पितुः ॥ २०२ ॥

यद्वार्तया विनिर्धैर्या येभवन्सुतसेवकाः ।
विविशुस्ते ससंनाहाः समदाः कालपर्ययात् ॥ २०३ ॥

अभिमन्युप्रतीहारमुखा निन्द्यं यदब्रुवन् ।
तदुत्पिञ्जे तत्फलं तैरचिरेणानुभूयते ॥ २०४ ॥

तद्दिने हाजीखानः स सबलो बहिरास्थितः ।
नाशकज्जनकं द्रष्टुं सोत्कोपि द्रोहशङ्कया ॥ २०५ ॥

तद्वार्ताकर्णनाद्भीतो निराशः सपरिच्छदः ।
आदामखानो वित्राणो विपुलाटाध्वना ययौ ॥ २०६ ॥

स तारबलमार्गेण गच्छन्निजजनावृतः ।
अन्धागतानुजभ्रातृवीरलोकक्षयं व्यधात् ॥ २०७ ॥

अभिमन्युप्रतीहारमुख्याः शौर्यममानुषम् ।
दृष्ट्वैवादामखानस्य सान्वर्थाभिधमूचिरे ॥ २०८ ॥

यावान्स्वयंपुरे तेन कृतो लोकक्षयः क्रुधा ।
तावानेव कृतस्तत्र संकटे गिरिगह्वरे ॥ २०९ ॥

तावद्धस्सनखानोपि राजपुत्रो गुणोज्ज्वलः ।
तूर्णं पर्णोत्समुल्लङ्घ्य काश्मीरान्तरमाययौ ॥ २१० ॥

ग्रीष्मोष्मशोषिततनुर्विरसश्चिरं य-
श्छायोज्झितो मरुतरुः पथिकैर्निरस्तः ।
वर्षाप्तसेकमहिमा जनतापशान्त्यै
सेव्यः स एव बत पत्रविचित्रशोभः ॥ २११ ॥

सदृशैवावहन्मध्ये या द्वयोस्तटयोरिव ।
एकपार्श्वगता सर्वा तदाभूद्राज्यनिम्नगा ॥ २१२ ॥

इत्थं भ्रातृद्वयस्थित्या विजयाविजयक्रमः ।
अन्यथा कल्पितः सर्वैरन्यथाभूद्विधेर्वशात् ॥ २१३ ॥

पुत्रः स्यान्नु कदेति शोचति पिता जातेतिहर्षाकुल-
स्तद्वृद्ध्यै यततेऽन्वहं विधिशतैश्चिन्तास्तदीया वहन् ।
वृद्धो विघ्नमिव स्वकं स जनकं जानाति लोभान्वित-
स्तद्वित्ताप्तिधिया मरिष्यति कदेत्यन्तःसदा चिन्तयन् २१४

अस्मिन्नवसरे राजा कियद्भिः सेवकैर्वृतः ।
श्रुतमश्रुतवत्कर्तुं स निश्चिन्त इवाभवत् ॥ २१५ ॥

दर्शितास्वास्थ्यवाग्बन्धस्त्यक्तपेयाद्युपक्रमः ।
नृपेन्द्रो विरुचिः क्षीणकलचन्द्र इवाभवत् ॥ २१६ ॥

प्रजाभाग्यविपर्यासात्सर्वायासाय विच्छविः ।
कल्पान्तरविवत्सोस्तं गन्तुं प्रावर्ततातुरः ॥ २१७ ॥

कम्पितोष्ठपुटज्ञातमन्त्रपाठः कवेर्दिने ।
द्वादश्यां ज्येष्ठमासस्य मध्याह्ने जीवितं जहौ ॥ २१८ ॥

प्राणप्रयाणसमये नृपतिः स मयेक्षितः ।
सर्वाङ्गनिर्यत्सौभाग्यभाग्यावृतमुखच्छविः ॥ २१९ ॥

जाने तद्वदनं लक्ष्मीसदनं स्वेदसंततिः ।
निर्यद्भाग्यतरङ्गिण्याः प्रवाह इव दिद्युते ॥ २२० ॥

तज्जीवरत्नहरणाज्जातभीतिरिव ध्रुवम्।
प्राणवायुर्हरन्नायुः क्षणं तूर्णगतिं व्यधात्॥ २२१॥
प्राणान्ते विगलत्सूर्यसोमनेत्रजलच्छलात्।
निरगान्नरदेवस्य प्रजास्नेहरसो ध्रुवम्॥ २२२॥
द्वापञ्चाशतमब्दान्स राज्यं कृत्वा सुखप्रदम्।
षट्चत्वारिंशवर्षेगाद्दिवं श्रीजैनभूपतिः॥ २२३॥
कर्णीरथशवप्रोद्यच्छत्रचामरकैतवात्।
शुचेव पतितौ नूनं सूर्याचन्द्रमसौ दिवः॥ २२४॥
तत्कालं मन्त्रिणो भृत्या दासाजनपदाश्च ये।
रुदितास्रुस्रुतिव्याजान्निवापाञ्जलिमाक्षिपन्॥ २२५॥
राज्यं षण्णवते वर्षे ज्येष्ठे मास्यग्रहीन्नृपः।
उत्तरायणकालान्तस्तेनैवान्तर्धिमासदत्॥ २२६॥
अतीतगणितैकोनसप्तत्यब्दायुषं नृपम्।
वदनावगतप्रोद्यत्कृष्णकूर्चकचच्छटम्॥ २२७॥
शवीभूतं शिवीभूतं शिबिकायां शवाजिरम्।
रुदन्तो मन्त्रिणो निन्युश्छत्रचामरराजितम्॥ २२८॥
यत्र सुप्ता इवैकत्र भान्ति पूर्वे महीभुजः।
भर्तृप्रेम्णा धरण्येव निहिता हृदयान्तरे॥ २२९॥
रुदत्पौरजनप्रोद्यत्ताररोदननिःस्वनैः।
बभूवुस्तच्छुचेवारं साक्रन्दमुखरा दिशः॥ २३०॥
क्व प्रयासि प्रजास्त्यक्त्वा हा देव नरजीवित।
इत्यस्मादपरः शब्दो नाश्रावि नगरान्तरे॥ २३१॥
तत्तदाक्रन्दितैः शश्वत्कर्णसंजातसंस्तवाः।
शून्येप्यशृण्वँल्लोकानामाक्रन्दितमथासकृत्॥ २३२॥

कर्णीरथादथोत्क्षिप्य पितुः पार्श्वे नरेश्वरम् ।
कृत्वा पटैकसंवीतं भूगर्भाभ्यन्तरे न्यधुः ॥ २३३ ॥

नेत्रनालस्रवद्बाष्पधाराः स्वाचारकारणात् ।
मुखावलोकनं कृत्वा सर्वे मृन्मुष्टिकां जहुः ॥ २३४ ॥

भूपतिर्भविता नान्यस्त्वत्समो भूरियं गता ।
इतीव भावनां चक्रुर्मृन्मुष्टिग्रहणच्छलात् ॥ २३५ ॥

जित्वारीन्प्रबलाग्रणे क्षितिमिमां वृत्वा धनैः सर्वतो
दत्त्वा कोशमशेषदेशविदिताः कृत्वा पुरीः स्वाभिधाः ।
सप्ताङ्गोर्जितभङ्गिसङ्गिसुभगं कृत्वापि राज्यं चिरं
हित्वा सर्वमहो पटैकरचनामन्ते लभन्ते नृपाः ॥ २३६ ॥

स वैरराज्यदावाग्निसंतप्त इव शीतलम् ।
तद्गुहान्तरमासाद्य सुखनिद्रामिवाभजत् ॥ २३७ ॥

मुखं निद्रावृतस्येव दृष्ट्वा सौभाग्यसुन्दरम् ।
हाजीखानोकरोत्पित्रे मस्तकं स्वमरात्रिकाम् ॥ २३८ ॥

अपराद्धं मया तात बहुशः पापबुद्धिना ।
मन्ये तेनैव रुष्टस्त्वमसहायो गतो दिवम् ॥ २३९ ॥

सिकन्दरनृपो धन्यो यस्त्वां पश्यति नाकगः ।
धिङ्मां यो वञ्चितो राजन्दर्शनामृतवर्षणैः ॥ २४० ॥

विहृतं क्वापि नो तात मां विना स्वोत्सवक्षणे ।
वदाद्य कथमेकाकी भजसे स्वर्गसंपदः ॥ २४१ ॥

यस्त्वं कोमलशय्यासु नागा निद्रां गणावृतः ।
स कथं भूगणस्यान्तस्तिष्ठस्येकः सशर्करे ॥ २४२ ॥

प्रतिमुच्य भवन्तं मे प्राप्तस्य स्वगृहं न कः ।
प्रशपेन्मास्तु मेलापो भूयो वामिति कोपितः ॥ २४३ ॥

औन्निद्र्यं कारितोस्माभिः कुपुत्रैः सततं भवान्।
अद्यैवावसरं प्राप्य दीर्घनिद्रां करोषि किम् ॥ २४४ ॥
ज्वलिताभूत्तनुर्नित्यं सततोदितया यया।
साद्य किं चलिता राजंश्चिन्ता ते मानसान्तरम् ॥ २४५ ॥
चित्रे वाप्यथ संकल्पे पश्यामि वदनाम्बुजम्।
शृणोमि ताः कथाः कुत्र तात ते बहुपातकी ॥ २४६ ॥
राज्यं विपद्दिनं रात्रिः सूद्यानं पितृकाननम्।
जीवनं मरणं नाथ त्वां विना मम सांप्रतम् ॥ २४७ ॥
कुपितो वा प्रसन्नो वा कुतोप्यागत्य तात मे।
दर्शनं देहि नो सोढुं क्षमो विरहवैशसम् ॥ २४८ ॥
विहाय क नु मां तात गतः पादैकसेवकम्।
द्युतिं न लभते पद्मकोरको भास्करं विना ॥ २४९ ॥
किं रुष्टोसि महीपतेहमधुना दासोस्मि सेवापरो
मौनं मा भज देहि वाक्यमधुनाप्येकं ममात्यादरात्।
नो जीवामि विना त्वयेति विलपन्कुर्वन्भुजारात्रिकां
साक्रन्दं रुदितं चकार सुचिरं दृष्ट्वा मुखं भूपतेः ॥ २५० ॥
इति प्रलापमुखरं हाजीखानं शुचार्दितम्।
राज्यधानीं ततो निन्युर्दिनान्ते मन्त्रिणो बलात् ॥ २५१ ॥
पितुर्लोकान्तरस्थस्य प्रीत्यर्थं तत्क्षणं सुतः।
सालोरग्राममात्मीयं न्यधात्तत्र शवाजिरे ॥ २५२ ॥
ग्रीष्मपानीयदानेन तृप्त्यर्थं तत्प्रदायिनाम्।
बहूनां प्रददौ क्षोणीमहार्यां धर्मसात्कृताम् ॥ २५३ ॥
राज्ञानेन विना शून्यां नास्मि क्ष्मामीक्षितुं क्षमः।
इतीव दुःखात्तत्कालं स्वमब्धौ रविराक्षिपत् ॥ २५४ ॥

संध्याभ्रशाटीमुत्सृज्य रोदनार्थमिवेशितुः ।
शुचेव विसृतं चक्रे तमःकचचयं क्षितिः ॥ २५५ ॥
आशाप्रकाशके वन्द्यदर्शने गुणिबान्धवे ।
परलोकं गते तस्मिन्मण्डले प्रोद्भूत्तमः ॥ २५६ ॥
तद्दिने रन्धनाभावाद्गृहधूमविवर्जिता ।
शोकमूका निरुच्छ्वासा निर्जीवेवाभवत्पुरी ॥ २५७ ॥
शवागारोपरि शिलां स्फाटिकीं रचनोज्ज्वलाम् ।
दीर्घां सर्वोन्नतां राज्ञो मूर्तिं परिणतामिव ॥ २५८ ॥
घनोत्कण्ठदिदृक्षाप्तरुदल्लोकाश्रुबिन्दुभिः ।
यत्र मुक्ताफलैः पूजा लसतीवोपरि प्रभोः ॥ २५९ ॥
पौराः शुक्रदिने भान्ति यत्रान्तःप्रतिबिम्बिताः ।
राज्ञेव निकटं नीताः कुतूहलतयात्मनः ॥ २६० ॥
कवाटविकटं वक्षो मुखं पूर्णेन्दुसुन्दरम् ।
शुकवद्दीर्घनासाग्रं नेत्रे कमलकोमले ॥ २६१ ॥
भ्रूलेखे लोमशे भालं प्रभालम्भितलक्षणम् ।
सा बुद्धिस्ते गुणास्ताश्च राज्यकार्यावधानताः ॥ २६२ ॥
स्मारं स्मारं जनः सर्वो राज्ञः पुर इव स्थितः ।
पर्यन्तनीरसासारं संसारं निन्दते न कः ॥ २६३ ॥
ज्योत्स्ना पूर्णसुधाकरस्य कुसुमोत्कर्षो वसन्तस्य य-
त्सौभाग्यं शरदि प्रसन्ननभसो नार्या नवं यौवनम् ।
राज्ये चैव विवेकिनो नरपतेर्यत्सर्वसौख्यप्रदं
धाता तत्कुरुते स्थिरं यदि जने स्वर्गार्जने न स्पृहा ॥२६४॥
बाल्ये पित्रा वियोगो वरसचिवभियो भ्रातृभृत्यैर्विरोधः
प्राप्ते राज्ये प्रवासो बहिरथ समरोऽप्यग्रजेनातिकष्टः ।

धात्रेयेभ्योथ चिन्ता तदनु निजसुतैर्यावदायुश्च बाधा
संसारे सर्वदाश्रुच्युतिकृति भविनां नित्यदुःखां स्थितिं धिक् २६५
नूनं जातकयोगेन पुत्रेभ्यो दुःखमन्वभूत् ।
अभूदस्य सुतस्थाने भौमो यत्पापवीक्षितः ॥ २६६ ॥
पण्डिताः कवयस्तस्य वाचाला येभवन्सदा ।
त एव तं विना दृष्टाः पौषे मूकाः पिका इव ॥ २६७ ॥
याभूत्सरस्वती नेत्रनिभा विकसिता सदा ।
ग्रन्थ्या संकुचिता साभूद्बुधपुस्तकसंततिः ॥ २६८ ॥
तर्कव्याकरणादीनां शास्त्राणां ये श्रमं व्यधुः ।
ते राजरञ्जनायालं देशभाषाश्रमं व्यधुः ॥ २६९ ॥
राज्ञा ये बहु मानिता गृहसुखश्रीमण्डिताः पण्डिताः
शास्त्राभ्यासमहर्निशं प्रविदधुर्ग्रन्थार्जनाद्युत्सुकाः ।
पृष्टाः किं पठतेति ते प्रतिजगुः श्रीजैनलाभे गते
कुत्र व्याकरणं क्व तर्ककलहः कुत्रापि काव्यश्रमः ॥ २७० ॥
योभूत्सर्वकलानिधिः शुभविधिर्दाताभिगम्यो गुणी
काव्यज्ञो बहुभाषया गुणिरतः कारुण्यपुण्याकुलः ।
सोयं हन्त समीक्ष्यतेवनितले धिक्पापिनोस्मान्शठा-
न्ये जीवन्ति शुचा न यान्ति विपिनं संसारतृष्णाजिताः२७१
हारेणेव विनाङ्गनाकुचतटी शास्त्रेण हीनेव धीः
सूर्येणेव विना प्रफुल्लनलिनी तारुण्यहीना तनुः ।
चन्द्रेणेव विना यथैव रजनी पत्या विना भामिनी
येनैकेन विना नृपेण न बभौ कश्मीरराज्यस्थितिः ॥२७२॥
श्रीमत्तर्कादिविद्याभ्यसनरसलसद्गर्वसर्वप्रवीण-
प्रेक्षोद्यद्दानमानोचितविचितयशोभूषिताशेषदेहः ।

श्रीजैनोल्लाभदीनो नरपतितिलकः सर्वशास्त्रप्रवीणः
कश्मीरान्योजयित्वा दिवमपि स गतो योजनायेव नष्टाम् २७३

इत्यादि संततं सन्तो वदन्तोत्यन्तचिन्तया ।
नितान्ततान्तहृदया विश्रान्तिं नाभजन्त ते ॥ २७४ ॥

दृष्टो रम्यश्चिरमुपवने वंशवाटो जनैर्यो
नानावर्णैर्नवतृणगणैर्भूषितो भूरिपत्रः ।
तत्रान्योन्याहननजननात्तादृगभ्युत्थितोग्नि-
र्येनैकान्तादुपवनगतं सर्वमेव प्रनष्टम् ॥ २७५ ॥

या कारकसभा भव्याभवच्छ्रीजैनभूपतेः ।
वर्षेणैकेन तच्छापात्सर्वा स्वप्नोपमाभवत् ॥ २७६ ॥

क्षुब्धे राज्यमहाम्भोधौ भूपप्रमयवायुना ।
तत्तत्सेवकरत्नौघः शतैकीयोवशिष्यत ॥ २७७ ॥

प्रभवत उत यावत्स्वप्रभुः सौख्यदाता
विदधति खलु तावत्सेवकास्तस्य मानम् ।
इह वसति वसन्तो यावदेव स्वनन्तो
मधुकरपिकभेकास्तावदेवाद्रियन्ते ॥ २७८ ॥

केचिदप्यवशिष्टा ये सेवकास्तस्य भूपतेः ।
तेप्यनन्तरविज्ञानात्तृणतुल्योपमां गताः ॥ २७९ ॥

इति पण्डितश्रीवरविरचितायां जैनराजतरङ्गिण्यां जैनशाहि-
वर्णनं नाम प्रथमस्तरङ्गः ।

---

# द्वितीयतरङ्गः

वन्दे विश्वमयं देवं सर्ववाङ्मन्त्रनायकम् ।
यदंशावर्णनस्तुत्या तत्पूजाफलभाङ्क कः ॥ १ ॥
पादो दक्षिण एष यच्छति पदं यत्रैव नास्येच्छया
तत्रैवेच्छति नाम वामचरणः संचारसंस्कारतः ।
इत्थं मण्डलमण्डितां समपदां चारीं नरीनर्ति यः
संध्यायां स सदा ददातु सुखितां देवोर्धनारीश्वरः ॥ २ ॥
अथ हैदरशाहाख्यां ख्यापयन्मुद्रिकार्पणैः ।
हाजीखानोग्रहीद्राज्यं स ज्येष्ठप्रतिपद्दिने ॥ ३ ॥
अर्घ्यार्चो दक्षिणानन्दी तत्तत्सुकृतसूचकः ।
बभावर्थिजनानन्दो स राज्यग्रहणोत्सवः ॥ ४ ॥
शुद्धांशुकचितै राजवल्लभैः सुखशालिभिः ।
बभौ सिकन्दरपुरी पूर्णा द्यौरिव तारकैः ॥ ५ ॥
राजधान्यङ्गने हैमं सिंहासनमशिश्रियत् ।
अतितीक्ष्णो नवो राजा मेरोस्तटमिवांशुमान् ॥ ६ ॥
बभतुर्भूपतेरग्रे स्थितौ तस्यानुजात्मजौ ।
इन्दोः पुरस्तादुद्यन्ताविव शुक्रबृहस्पती ॥ ७ ॥
राज्ञो हस्सनकोशेशस्तद्राज्यतिलकं ददौ ।
सौवर्णं पुष्पपूजाढ्यं यदृच्छाविहितव्ययः ॥ ८ ॥
स हाजीहैदरनृपो घनकालोर्जितप्रभः ।
धाराधर इव धरां दधार धरणीधरः ॥ ९ ॥
सोनुजं स्वसमं भूमिनायकः सुक्षितेरसात् ।
बन्हामखानं नाम्रामदेशे तं स्वामिनं व्यधात् ॥ १० ॥

क्रमराज्येक्षिकादेशो स्वामिनं स्वसुतं व्यधात् ।
चिरान्निजसुतप्राप्त्या यौवराज्यसुखादपि ।
पितृशोकहतोप्यन्तर्विश्रान्तिमभजन्नृपः ॥ ११ ॥
तस्माद्विहितमेवास्तु देशाधीशत्वराजिताः ।
प्रसादमतुलं प्रापू रावत्रलवकादयः ॥ १२ ॥
अन्येप्युच्चावचान्ग्रामान्सेवका नवभूपतेः ।
पूर्वसेवानुसारेण प्रसादं प्रतिपेदिरे ॥ १३ ॥
राजा राजपुरीसिन्धुपत्यादीन्दर्शनागतान् ।
प्रत्यमुञ्चदलंकृत्य पार्थिवोचितया श्रिया ॥ १४ ॥
सौवर्णकर्तरीबन्धसुन्दरा नृपमन्दिरे ।
ननन्दुर्मन्त्रिसामन्तसेनापतिपुरोगमाः ॥ १५ ॥
पितृशोकार्पितानर्घपट्टांशुकविभूषणाः ।
विचेरुः सेवकास्तस्य तदन्तिकगताः सदा ॥ १६ ॥
आसीद्राजा च सततं प्रकामं दोषनिष्क्रियः ।
स्वपक्षपालने सक्तः संध्याक्षण इवोडुपः ॥ १७ ॥
पक्षपातोक्षणापत्यप्रतिपालनतत्परः ।
लोभक्रोधविरक्तात्मा मोहान्धक्षपणक्षमः ॥ १८ ॥
सैदनासिरपुत्रो यः स मेर्जाहस्सनाभिधः ।
अहो तत्पितृवत्पूज्यो बहुरूपादिराड्भाक् ॥ १९ ॥
उत्सवादिसदाचारसत्कारेषु सभान्तरे ।
त एव प्रथमं मान्यास्तद्राज्ये सर्वदाभवन् ॥ २० ॥
एतान्पक्षाश्रयान्मद्भ्राव्ययं बलवानिति ।
मेर्जाहस्सनपुत्र्याः स पाणिं पुत्रमजिग्रहत् ॥ २१ ॥
हृत्वा ज्यंसरमार्गेशात्स ज्यहाङ्गिरमार्गपे ।
वाङ्गिलं प्रददौ राजा तद्गुणाकृष्टमानसः ॥ २२ ॥

II, 1



चक्रे कृतापकाराणामप्यनुग्रहमेव सः।
प्रणम्य सिंहः पूर्वं हि हन्ति दन्तिगणं ततः॥ २३॥
गूढभावो महीपालस्तत्तच्चेष्टां चरैर्विदन्।
तदा हस्सनकोशेशं संमान्याधिकृतं व्यधात्॥ २४॥
प्रतापतापितारातिच्छन्नकोपो महीपतिः।
भस्मान्तरगतो वह्निरिवासीत्परमृत्युदः॥ २५॥
कांश्चित्सन्नभयान्कांश्चित्संधाय प्रतिपालयन्।
कांश्चिदुन्मीलयन्नीत्या नानावृत्तिरभून्नृपः॥ २६॥
प्रसादकृत्स भृत्यानामभूद्वैश्रवणोपमः।
मनागप्यपराधेन बभूवान्तकसंनिभः॥ २७॥
पयः पितृकृतामात्यफिर्यडामरकादयः।
विचार्यासहनं कोपे बभूवुर्वृतयन्त्रणाः॥ २८॥
चौरा जाराश्च रिपवो भृत्या दुर्णयकारिणः।
अहीव जम्बुकाश्चेरुस्तद्राज्ये भयविह्वलाः॥ २९॥
श्रीजैननृपतौ शान्ते मूर्धगूढशिलोपमे।
अबाधन्त पुनर्लोकं व्याला इव नियोगिनः॥ ३०॥
विरुद्धपक्षो रुचिरञ्जिताशः
कलाकलापो विबुधोपजीव्यः।
पूर्णेन्दुनानेन समोऽस्तिकोऽन्यः
कलङ्क एको यदि नास्य दोषः॥ ३१॥
श्रुत्वास्मद्दूषणाः सोयं सर्वान्हन्तीति कद्धिया।
ऐक्यं पुरप्रवेशार्थे मिथस्तद्दूषका व्यधुः॥ ३२॥
कुकृत्यप्रेरकः पापश्चान्यायोत्कोचहारकः।
प्रियोभवद्दिवाकीर्ती राज्ञो रिक्केतराभिधः॥ ३३॥

कामीव व्यसनं नित्यमुपालब्धोपि भूभुजा ।
यं त्यक्तुं नाशकद्राजा संस्तवाद्धृदयंगमम् ॥ ३४ ॥
संचितार्थः प्रजायासैर्मुद्रादानादिकर्मभिः ।
आसीत्स्वकार्यकुशलः ख्यातो धूर्तः स नापितः ॥ ३५ ॥
रुद्धं चित्तेन काठिन्यं माधुर्यं जिह्वया धृतम् ।
शठस्य यस्य सततं लोकोद्वेजनकारकम् ॥ ३६ ॥
येनाधिकाराद्देशेस्मिन्प्रजाः कुकर्मभिः कृताः ।
दुःखिता रक्षिताः पूर्वं पुत्रवच्छ्रीमहीभुजा ॥ ३७ ॥
मीरभोखारनामापि बुद्धिमान्प्रथितो भुवि ।
नितरामपकोपाग्रे राज्ञः साचिव्यमादधे ॥ ३८ ॥
वात्सल्याद्विहितो राज्ञा स चुटगणनापतिः ।
समस्तकार्यस्थानेभ्यो भुङ्क्ते राजोपजीविकाम् ॥ ३९ ॥
यो वर्षणैकनिरतः शिखिहर्षहेतुः
संदर्शितातुलफलः कृतकर्षणेषु ।
जातोपि यः प्रतिदिनं हृतसर्वतापः
सोयं घनस्तुदति दुःसहवज्रपातैः ॥ ४० ॥
दुर्मन्त्रिप्रेरितो राजा व्यधान्मदविचेतनः ।
प्रजाभाग्यविपर्यासाद्विवेकविगुणाः क्रियाः ॥ ४१ ॥
सिकन्दरपुरीपार्श्वस्वनिर्माणचिकीर्षया ।
अमृतोपवने प्रांशुतरुच्छेदनमादिशत् ॥ ४२ ॥
छिन्नांस्तान्पुष्पितान्वृक्षान्समीक्ष्यैतत्समुत्थिताः ।
तच्छुचेव व्यधुस्तत्र रोलम्बा रोदनध्वनिम् ॥ ४३ ॥
तन्निर्माणग्रहोन्येषां न केषां प्रत्यभाद्धृदि ।
अग्रे दिनपतेर्दीपप्रकाशनरसोपमः ॥ ४४ ॥

तद्भ्रमः क्षीव एवैष करोतीति विनिश्चितम्।
स्वाहितापि क्रिया हेतोः घूर्णितं तं नृपं व्यधात् ॥ ४५ ॥
वहूनामथ लोकानां नापितोवयवच्छिदाम्।
भूपालवाक्यनिरतः क्षीवतोपि तथाकरोत् ॥ ४६ ॥
नापितो निर्घृणः पापी क्रोधी क्रकचपाटितान्।
पैतृकांष्ठक्कुरादींश्च कारयामास भूपतेः ॥ ४७ ॥
चलितानग्रजभ्रातुः स्वावनायान्तिकं पथि।
रुद्ध्वा शूलेधिरोप्यान्यान्पञ्चषानप्यघातयत् ॥ ४८ ॥
जीवन्तो गणरात्रं ते स्वकुटुम्बोक्तवेदनाः।
पौरैः सास्रुजलैर्दृष्टाः शूलपृष्ठे पुरान्तरे ॥ ४९ ॥
वैडूर्यभिषजं ज्ञात्वा दूषकं परपक्षगम्।
अमुञ्चद्बन्धनात्कृत्तभुजनासोष्ठपल्लवम् ॥ ५० ॥
तथैव नोनदेवादींश्शिखजाजादिसंयुतान्।
पञ्चषानकरोत्कृत्तजिह्वानासैकहस्तकान् ॥ ५१ ॥
विरुद्धावयवच्छेदशूलारोपणकर्मणा।
स पूर्णनापितः पापी बभूव नरशौनिकः ॥ ५२ ॥
आचार्यपुत्रो जय्याख्यस्तथा भीमाभिधो द्विजः।
छिन्नाङ्गौ स्वं यथाशक्तौ वितस्तायां समौज्झताम् ॥ ५३ ॥
मद्यलीलाव्यसनतस्तद्राज्ये बाह्यदेशवत्।
आसीन्मार्द्वीकवद्गौडी देशेत्र प्रचुरा सुरा ॥ ५४ ॥
तन्मद्यरसिके राज्ञि सर्वभोगपराङ्मुखे।
खण्डादीक्षुविकारास्ते सुलभा न गुडोभवत् ॥ ५५ ॥
खुज्याद्बुल्कादिर्यस्यान्तेवासी गीतगुणाम्बुधेः।
मल्लाडोदकनामासीत्तन्त्रीवाद्यगुरुर्नृपे ॥ ५६ ॥

कूर्मवीणादिवाद्यानां प्राप्यास्मद्गीतकौशलम् ।
आजीवं क्षणमप्यासीन्न तन्त्रीवादनं विना ॥ ५७ ॥

तन्त्रीवादविशेषज्ञो राजा व्यञ्जनधातुभिः ।
स्वयं वादननिष्णातो वैणिकानप्यशिक्षयत् ॥ ५८ ॥

रबाबवाद्यरचनैर्बह्लोलाद्यैश्च गायनैः ।
राज्ञः प्रसादात्किं नाप्तं तत्तत्कनकवर्षिणः ॥ ५९ ॥

शौचालयस्थैः सुरतालयस्थै-
  र्भूतैरिवान्तश्छलनप्रवीणैः ।
वशीकृतो यः पिशुनैर्नरेशो
  बिभेति तस्मान्ननु को न मर्त्यः ॥ ६० ॥

रहः स्थितं नृपं जातु पिशुनः पूर्णनापितः ।
अपृच्छत्प्रेरितोमात्यैश्चिकीर्षो पूर्वमन्त्रिषु ॥ ६१ ॥

भवत्पक्षविनाशो यैः कृतस्त्वत्पितृमन्त्रिभिः ।
प्राप्तराज्येन भवता त एव प्रबलीकृताः ॥ ६२ ॥

अमी हस्सनकोशेशमुख्यास्तदनुजादृताः ।
सोपि धूर्तो धिया तत्तद्वशीकारसमुद्यतः ॥ ६३ ॥

असमर्थशरीरस्त्वं भ्रात्रर्पितभरः सदा ।
तत्ते सपुत्रभृत्यस्य न नाशो भविता चिरात् ॥ ६४ ॥

श्रुत्वेत्यवोचन्मत्पुत्रः सत्यं मदनुजाप्रियः ।
किं तु ब्रवीमि येनायं रक्ष्यते कुटिलाशयः ॥ ६५ ॥

उग्रो मदनुजस्तीक्ष्णो मत्पदाक्रान्तिसूद्यतः ।
अनेन क्रष्टुमिच्छामि कण्टकेनेव कण्टकम् ॥ ६६ ॥

कार्यापेक्षावशादेतं रक्षामि न तु गौरवात् ।
श्रुत्वेति द्वित्रान्महतो व्यधाज्ज्ञातचिकीर्षितान् ॥ ६७ ॥

अत्रान्तरेऽग्रजो राज्ञो मद्रदेशाद्बलान्वितः।
भ्रातृराज्यजिहीर्षायै पर्णोत्सं प्राप दर्पितः॥ ६८॥
तच्छ्रुत्वा नृपतिः क्रुद्धस्तान्समानीय पैतृकान्।
अवोचत्किं नु कर्तव्यं ते तमित्यूचुरुत्तरम्॥ ६९॥
तट्टिकासेतुबन्धं तं छेत्तुं यामोऽस्य तिष्ठतः।
अन्यथा दुःसहः प्राप्तस्तदाज्ञा दीयतां विभो॥ ७०॥
श्रुत्वेति कातरं वाक्यं तेषां दुर्लक्ष्यचेष्टितः।
तत्पक्षपातिनो ज्ञात्वा तथेति प्रत्यपद्यत॥ ७१॥
प्रतिमुच्य नृपस्तान्स रात्रावित्यब्रवीन्निजान्।
आनीय फिर्यडारादीन्मन्त्रिणः कार्यनिष्ठुरान्॥ ७२॥
इयं हस्सनकोशेशचक्रिका यत्समागतः।
एतद्वधेन नष्टः स्यादन्यथाभ्यन्तरं विशेत्॥ ७३॥
तत्प्रातरेते हन्तव्या युक्त्यानीयेति तान्नृपः।
छन्नकोपः सेवकान्स्वानकरोत्कृतसंविदः॥ ७४॥
राज्ञा प्रातः समाहूय विसृष्टानुचरा गृहात्।
सर्वे हस्सनकोशेशमुख्यास्तूर्णं समाययुः॥ ७५॥
कम्पते तुरगस्त्रस्तो ज्ञातवृत्त इवाचलः।
ताडनैर्बहुशः सास्रुः प्राप कष्टान्नृपाङ्गनम्॥ ७६॥
महार्हास्तरणस्थांस्तान्राजकर्तव्यताकुलान्।
कोशेशहस्सनमीरकाकादीन्पञ्चषान्नृपः॥ ७७॥
भृत्यैः संजरमीराद्यैराज्ञप्तैर्मण्डपान्तरे।
छलाद्विश्वासमुत्पाद्य राजधान्यन्तरेऽवधीत्॥ ७८॥
किं द्रोह इति यावत्स कोशेशोऽभ्युत्थितोऽब्रवीत्।
द्रुघणैकप्रहारेण तावत्प्राणैर्व्ययुज्यत॥ ७९॥

शस्त्राघातैर्मुमूर्षुः सन्नुत्थितो मीरकाककः ।
राज्ञ एवाशिषः कुर्वन्पुनः परशुना हतः ॥ ८० ॥
लिखन्नह्मदमीराख्यः स विद्याव्यसनी गुणी ।
हतो जनमनःकान्तो ययौ कस्य न शोच्यताम् ॥ ८१ ॥
जीवतां मनसा चैक्यं तेषां नित्यमभूद्यथा ।
शस्त्रकृत्ततनूद्गच्छच्छोणितैक्यमभूत्तथा ॥ ८२ ॥
वर्णकम्बलपृष्ठस्था जीवन्तस्ते यथाभवन् ।
निद्राणा इव ते तत्र मृता अपि तथेक्षिताः ॥ ८३ ॥
क्षत्रमात्रात्तथा शस्त्रैर्मरणं राजवेश्मनि ।
अनन्यसुलभं तत्र तेषां श्लाघार्हतामगात् ॥ ८४ ॥
न वित्तं न च दारास्ते न भृत्या न शवाजिरम् ।
तेषां तथा प्रमीतानां ययावन्तोपकारिताम् ॥ ८५ ॥
निजपरिभवभीत्या बन्धवो यान्ति दूरं
त्यजति च निजपत्नी का कथा सेवकानाम् ।
प्रतिदिनमृणहेतोस्ताडनं बन्धनं वा
भवति हि यमभङ्गाद्राजभङ्गोतिकष्टः ॥ ८६ ॥
स्फुलिङ्गालिङ्गनात्क्रुद्धकृष्णसर्पोपसर्पणात् ।
मकराकरपाताच्च कष्टं नृपतिसेवनम् ॥ ८७ ॥
प्रद्युम्नगिरिपादान्ते चण्डालैर्निश्यनाथवत् ।
इष्टिकाभिस्ततो नीत्वा भूगर्तेषु निवेशिताः ॥ ८८ ॥
कुर्वन्ति मौसुलजनाः स्वशवाजिरार्थे
यत्नं सदैव बहुकारुषु दत्तवित्ताः ।
नो चिन्तयन्ति परमेश्वरमन्तरेण
जानाति को मम कदा मरणं कथं स्यात् ॥ ८९ ॥

TT, 1



यः स्वायुषोवधिमवैति स्वदेहनिष्ठं
यस्यान्तको भवति मित्रतयातिवश्यः।
युज्येत तं प्रति शवाजिरकर्म कर्तुं
म्लेच्छेषु दुर्व्यसनमात्रमिदं मतं मे ॥ ९० ॥

ते वैश्रवणभट्टाद्याः कृत्वापि स्वशवाजिरम्।
अन्ते यत्र मृता ग्रामे भुवि तत्रैव शायिताः ॥ ९१ ॥

एक एको भुवो हस्तशतमात्रावृतौ रतः।
पराप्रवेशदो यत्नात्प्राकृतो लज्जते न किम् ॥ ९२ ॥

श्रुतं यच्छास्त्रतः सूक्ष्मशिलाश्मेच्छवभूतले।
स्थाप्यन्ते तत्सुखं तस्मिन्परलोकगते भवेत् ॥ ९३ ॥

अहो लोभस्य माहात्म्यं जीवद्वद्यन्मृताअपि।
शवाजिरापदेशेन कुर्वन्त्यावरणं भुवः ॥ ९४ ॥

महान्तो हन्त कुर्वन्तु कृतयत्नाः शवाजिरम्।
तन्निर्माणेन जीवन्ति कियन्तोपि बुभुक्षिताः ॥ ९५ ॥

वन्योन्यदर्शनाचारो हस्तमात्रे भुवस्तले।
दग्धा यत्कोटिशो नित्यं सावकाशं तथैव तत् ॥ ९६ ॥

इत्याद्यनुचिता निन्दा प्रस्तावाद्विहितात्र यत्।
क्षन्तव्या मौसुलैर्यस्मात्कविवाचो निरर्गलाः ॥ ९७ ॥

ये राजवैभवमवाप्य निपीड्य लोकं
कुर्वन्ति संचयमतो न च दानभोगौ।
अत्युत्कटाघभरतत्फललब्धदुःखा-
स्ते कोशरक्षणनिभाद्वितरन्ति राज्ञः ॥ ९८ ॥

द्रव्यं गृहतुरंगादि तेषां तद्राजसादगात्।
तत्कुटुम्बैर्निरालम्बैर्नाप्ताप्येका वराटिका ॥ ९९ ॥

कोशेशसंचितं स्वर्णपूर्णं रूपकभाजनम् ।
दृष्ट्वा धिक्कृत्य कृपणं थूत्कारं नृपतिर्व्यधात् ॥ १०० ॥
तत्पक्षान्बह्मरागादीन्हृतसर्वस्वसंचयान् ।
कारायामक्षिपद्राजा मुक्त्वैकं सैदहुस्सनम् ॥ १०१ ॥
अन्ये पित्रपराधेन तस्माद्भृगुसुतोपमात् ।
क्षत्रिया इव ते सर्वे नाशं प्रापुः पुरातनाः ॥ १०२ ॥
यासीत्पितुः सभा योग्या तत्तत्कार्यविशारदा ।
स्मृतपूर्वापकारेण तेन सर्वावसादिता ॥ १०३ ॥
अन्तरङ्गान्हमेभादीन्पञ्चषानधिकादरैः ।
अरक्षत्प्राक्तनां स्मृत्वा प्रेमसेवां च पैतृकीम् ॥ १०४ ॥
आदामखानः पर्णोत्से श्रुत्वा कोशेशनाशनम् ।
स्वनामान्वर्थतां बिभ्रद्ययौ भीतो यथागतम् ॥ १०५ ॥
बह्रामखानो वित्राणस्तद्वधाच्छङ्कितो भृशम् ।
गृहमेत्य नृपेणाश्वासितः कार्यावलोकिना ॥ १०६ ॥
अस्मिन्नवसरे मद्रमण्डले सुभटक्षयः ।
अभून्माणिक्यदेवस्य तुरुष्कैः सह संयुगे ॥ १०७ ॥
मातुलेन समं यातो योद्धुं तत्रैव संगरे ।
आदामखानः स प्रापच्छरभिन्नमुखः क्षयम् ॥ १०८ ॥
केप्यूचुः स निजैरेव हतस्तत्र भयाश्रितैः ।
केपि व्रणशलाकाग्राकृष्टिमर्मविदारणात् ॥ १०९ ॥
श्रुततन्मरणो राजा दूतैरत्यन्तदुःखितः ।
तद्देशाच्छवमानीय जननीसंनिधौ न्यधात् ॥ ११० ॥
ज्येष्ठोपि शौर्यनिलयोपि बलान्वितोपि
प्राप्तोपि जन्मभुवमाप्तधनप्रपञ्चः ।

नैवाप राज्यमुचितं स कृतप्रयत्नो
भाग्यैर्विना न हि भवन्ति समीहितार्थाः ॥ १११ ॥
अथ वा पितृशापः स तस्यापि फलितोभवत्।
यद्प्राप्तोपि निजं देशं परदेशे क्षयं गतः ॥ ११२ ॥
अत्रान्तरे महोत्पाता दिव्यभौमान्तरिक्षगाः।
अहंपूर्विकयेवापुर्नृपतेर्जनकम्पदाः ॥ ११३ ॥
तथा हि प्रथमं राज्ञि पुष्पलीलाचिकीर्षया।
गते मडवराज्योर्वीं भूमिकम्पोभवन्महान् ॥ ११४ ॥
अस्मत्कर्तृजनः कोपि सुखी नैवाधुना स्थितः।
इतीव देशे तत्कालं चकम्पुर्जनवद्गृहाः ॥ ११५ ॥
उद्भूत्पूर्वदिक्पुच्छः केतुर्नभसि विस्तृतः।
पूर्वं बह्वामखानेन दृष्टो रिष्टस्य सूचकः ॥ ११६ ॥
स दूरविस्तृतः पुच्छः कालकुन्तोपमो दिने।
स्फुरन्प्रतीचीं प्रत्याशां तस्यैव ददृशे जनैः ॥ ११७ ॥
युग्मसूर्वडवा राजमन्दुरान्तर्गताभवत्।
देशात्कष्टुं ददौ राजा यां भिया यवनक्षये ॥ ११८ ॥
सिंहाद्योवने चेरुर्वन्याः श्रीनगरान्तरे।
विडालपोतं सुषुवे शुनी च प्रसवक्षणे ॥ ११९ ॥
निष्फलः सफलस्तूलीतरुः स सफलोभवत्।
उपराजगृहं मूलाद्दाडिमीकुसुमोद्गमः ॥ १२० ॥
सुमनोवाटशाटान्तर्भवं शोणितवर्षणम्।
इति दृष्ट्वा जनः सर्वः क्षते क्षारमिवान्वभूत् ॥ १२१ ॥
अत्रान्तरे वसन्सैदखानगाहादिपीडनम्।
हिन्दुका विदधुः पूर्णनापितोद्ध्वलिताः क्रुधा ॥ १२२ ॥

तच्छ्रुत्वा यवनाः सर्वे गत्वा क्रुद्धा नृपान्तिकम् ।
चुक्रुशुर्येन राजापि लोकपीडनमादिशत् ॥ १२३ ॥
अजरामरयुद्धादीन्स्वकीयान्सेवकानपि ।
तत्कोपेनाकरोद्राजा निकृत्तभुजनासिकान् ॥ १२४ ॥
त्यक्तस्वजातिवेशास्तद्दिनेषु ब्राह्मणादयः ।
न भट्टोहं न भट्टोहमित्यूचुर्भट्टलुण्ठने ॥ १२५ ॥
बहुखातकमुख्या ये पुरे सन्तीष्टदेवताः ।
क्रोधेन तेषां नगरे तदोत्पातो महानभूत् ॥ १२६ ॥
दत्ता भूर्जैनभूपेन येषां गुणपरीक्षया ।
तेभ्यस्तां निर्निमित्तेनाप्यहरन्नधिकारिणः ॥ १२७ ॥
समाहिसफरो मासः प्रसिद्धो म्लेच्छदर्शने ।
सर्वदर्शनविघ्नाय न केषां भयकार्यभूत् ॥ १२८ ॥
भूपं नित्यमदोन्मत्तं स्वतन्त्रं मन्त्रिमण्डलम् ।
उत्कोचहारिणः सर्वानन्तरङ्गांस्तरङ्गितान् ॥ १२९ ॥
दर्शिताबलपीडार्तिपण्डितानवलोक्य च ।
स्मृतश्रीजैनभूपालगुणमालस्तदा जनः ॥ १३० ॥
देशे सरुदिताक्रन्दं शुशोचात्यन्तदुःखितः ।
सर्ववृद्धिश्चिरारूढो ग्रस्तो दृष्टपराभवः ॥ १३१ ॥
सर्वकार्यान्तरङ्गोयं क्षयं याति कदा नृपः ।
इति येप्यवदन्दुष्टास्तत्सुतविभवार्थिनः ॥ १३२ ॥
पारसीभाषया काव्ये यदूचे दूषणा विशाम् ।
स शापः फलितो देशे श्रीमज्जैनमहीपतेः ॥ १३३ ॥
सेवकाः कितवप्राया भुक्तप्रेष्या नियोगिनः ।
तच्छापादिव कालेन प्रापात्यन्तनिपीडनाः ॥ १३४ ॥

किमस्मद्रक्षको दैवहतो वृद्धो महीपतिः ।
इत्यादि सास्रु साक्रन्दाः शुशुचुस्तेपि पार्थिवम् ॥ १३५ ॥
स्वल्पोपि राज्यकालोभून्नवायामैः सुदुःसहः ।
निदाघरात्रिसंदृष्टदीर्घदुःस्वप्नसंनिभः ॥ १३६ ॥
लोत्रराशिगृहद्रव्यहरणैः परपीडनैः ।
तुतुषुस्तस्यभृत्यौघाः कौशिकास्तिमिरैरिव ॥ १३७ ॥
शय्यारूढो मधुक्षीवः प्रजाकार्यपराङ्मुखः ।
सर्वं दिनं निनायान्तः स्वपार्श्वपरिवर्तनैः ॥ १३८ ॥
कुलालगायनोद्गीतं गीतं शृण्वन्दिवानिशम् ।
गुणिभ्यो राजयोग्येभ्यो नादाद्दर्शनमात्रकम् ॥ १३९ ॥
शाहावदीनराज्ये या संपन्नातिमनोहरा ।
लक्ष्मीपुरे राजधानी तां पुष्योषोदितः शिखी ॥ १४० ॥
या बलाढ्यमठस्थाने वेश्माली विपुलाभवत् ।
सापि दग्धा समं तत्र तत्तत्पौरजनश्रिया ॥ १४१ ॥
इत्याद्युपद्रवाद्देशे दृष्ट्वा वास्तव्यनाशकान् ।
एतन्नाशाद्भवेद्विघ्नशान्तिरित्यवदज्जनः ॥ १४२ ॥
राजा पञ्चगृहावासं स्वं ज्वलन्तं समीक्ष्य च ।
हर्म्यमारुह्य संतुष्टः पानलीलां व्यगाहत ॥ १४३ ॥
अस्मिन्नवसरे नेयधिषणः पिशुनेरितः ।
यात्रार्थं सबलं पुत्रं बहिर्देशे व्यसर्जयत् ॥ १४४ ॥
यत्सैन्यं वीक्ष्य दैन्यं ते ययुर्बाह्यमहीभुजः ।
प्रदीप्तं रविरश्म्योघं दिवसे तारका इव ॥ १४५ ॥
पूर्वं राजपुरीराजो जयसिंहो नृपात्मजम् ।
स्वसारं च स्वसारं च दत्त्वा तोषयति स्म तम् ॥ १४६ ॥

कालाधारामसिलतामिव वीक्ष्य तदाश्रिताम् ।
कम्पं के नात्र देशस्थाः प्रापुस्तद्भयतो जनाः ॥ १४७ ॥
सेना दीन्नारकोटीयाः शिश्रियुस्तां भयच्छिदे ।
बलिभिर्मङ्गलादेवीमिवोन्नतभुवि स्थिताम् ॥ १४८ ॥
मद्रगगडचिम्भेशा राजहंसास्तमाययुः ।
सरोवरमिव प्रोद्यच्छुक्लपक्षा विनिर्मलम् ॥ १४९ ॥
राजवृत्तान्तरोधेन स्वपदार्थोपपादकैः ।
मातुलैरपि तस्याग्रे सुल्हणैः कल्हणायितम् ॥ १५० ॥
कौमारोद्धंसिकं वीक्ष्य कटकालंकृता अपि ।
अभूवन्धैर्यरहिता माहिला महिला इव ॥ १५१ ॥
बद्धपङ्क्तिस्तरन्ती सा ज्यलेमस्तनदीतटात् ।
तत्सेना रामबद्धाब्धिसेतुकौतुकमातनोत् ॥ १५२ ॥
कुटीपाटीश्वरप्राप्तं तत्सैन्यं दैन्यवर्जितम् ।
नारायणोदरोद्गच्छद्विश्वलोकभ्रमं व्यधात् ॥ १५३ ॥
संप्लुष्टे भोगपालानां पुरे मद्याचितान्यपि ।
सुचिरं धूमितान्यासन्गृहाणि हृदयानि च ॥ १५४ ॥
उन्नादह्लदसंसङ्गतत्तुरङ्गतरङ्गिता ।
बाल्येश्वरगिरेः पादमूलं प्रापास्य वाहिनी ॥ १५५ ॥
तदीयकटको दीपस्तत्तुरङ्गतरङ्गितः ।
तं तमेव नतं चक्रे येन येन यथावहत् ॥ १५६ ॥
निस्तृणं भूतलं तत्तु निष्पानीया जलाशयाः ।
निरिन्धनान्यरण्यानि तत्सैन्ये चलितेभवन् ॥ १५७ ॥
सोहं संमान्य राज्ञास्मै दत्तस्तत्समयेन्वहम् ।
कुर्वन्बृहत्कथाख्यानमभूवं धृतपुस्तकः ॥ १५८ ॥

करदीकृतभूपालः स षण्मासकृतस्थितिः।
अभवच्चैत्रमासान्ते कश्मीरागमनोत्सुकः॥ १५९॥

तावद्बभ्राम बह्रामखानो दामनिरर्गलः।
आक्रान्तमन्त्रिसामन्तो ज्ञात्वा व्यसनिनं नृपम्॥ १६०॥

अथ संततपानेन क्षीणदेहबलच्छविः।
स वातशोणितव्याधिबाधितोभून्महीपतिः॥ १६१॥

प्राप्तो हस्सनखानः स पूर्णचन्द्र इवोदितः।
तान्दुष्टमन्त्रिणः पद्मानिव संकुचितान्व्यधात्॥ १६२॥

किं नैतेन समानीतो बद्धा पिरुजगख्खडाः।
इति रोषं सुते राजा पिशुनप्रेरितोग्रहीत्॥ १६३॥

पश्चिमाशागतं श्रुत्वा तमपूर्वार्कसंनिभम्।
बह्रामखानो मन्देहोसंदेह इव सोभवत्॥ १६४॥

प्राप्ते सुतेन्तिकं सोभून्न तदत्यधिकादरः।
प्रत्यासन्नविनाशानां धीर्भीत्येव पलायते॥ १६५॥

अन्योत्क्रान्तितया मन्त्रिसामन्तानां महीपतिः।
यात्रागताय पुत्राय ददौ दर्शनमात्रकम्॥ १६६॥

नूनं स्वानुजभीतोभूत्तत्कालं सोन्यथा कथम्।
परिधानादिसत्कारं न्यूनमेवाकरोत्सुते॥ १६७॥

बह्रामो बाधते नूनं मत्पुत्रमिति शङ्कितः।
स तस्मिंश्छन्नकोपाग्निः शमीतरुरिवाभवत्॥ १६८॥

पानार्थं राजधान्यग्रं तस्मिन्नवसरे नृपः।
आरुरोह समं भृत्यैर्मृत्युनेव प्रचोदितः॥ १६९॥

तत्र पुष्करसौधान्तर्लीलया काचमण्डपे।
धावन्पपात नासाग्रस्रवदस्रविसंस्थुलः॥ १७०॥

कक्षाक्षिप्तभुजैर्भृत्यैर्नीतः शयनमण्डपम् ।
ध्वस्तच्छाय इवादर्शः संमूर्छञ्शयनेपतत् ॥ १७१ ॥
भिषजोस्यावमत्याप्तान्कोपि योगी चिकित्सतः ।
विषौत्कटौषधस्तस्य यतते स्म कृतव्यथः ॥ १७२ ॥
तस्यौषधप्रयोगेण प्राप्तदाहो दिवानिशम् ।
काङ्क्षति स्म स्वमरणं क्षणमात्रं न जीवनम् ॥ १७३ ॥
राजधान्यन्तरे राजसुतः स्वजनकान्तिके ।
आयुक्ताह्मदसंयुक्तस्तद्दिनेषु स्थितिं व्यधात् ॥ १७४ ॥
मुमूर्षौ पितरि ज्ञात्वा महतो दर्शनागतान् ।
तन्निर्गमनिरोधाय द्वारधान्यां भटान्व्यधात् ॥ १७५ ॥
स्वालयस्थोनुजो राज्ञो भयहर्षाप्तसंभ्रमः ।
करानिव रविस्तीक्ष्णांश्चारान्संचारयन्नभूत् ॥ १७६ ॥
तत्कालं राजलक्ष्मीः सा पितृव्यभ्रातृपुत्रयोः ।
द्वयोरासीत्समारूढा चित्ते संशयधीरिव ॥ १७७ ॥
अत्रान्तरे ह्मदायुक्तः संमन्त्र्य सचिवैः सह ।
बह्रामखानमागत्य युक्तमित्यब्रवीद्वचः ॥ १७८ ॥
स्वामिहैधरशाहोद्य समर्प्य स्ववयस्त्वयि ।
सुगृहीताभिधो भ्राता प्रयातः कीर्तिशेषताम् ॥ १७९ ॥
ज्येष्ठोधुनावशिष्टस्तद्भवान्भज नृपासनम् ।
स्वयं हस्सनखानाय यौवराज्यं प्रदीयताम् ॥ १८० ॥
त्वत्पित्रा महतो यत्नाद्रक्षिता चकिता सती ।
सेयं त्वयाद्य नगरी पाल्या कुलवधूरिव ॥ १८१ ॥
किमन्यत्पुरलुण्टाकाः काका इव बलिप्रियाः ।
यथागतं प्रयान्त्वेते कुशब्दा मलिनात्विषः ॥ १८२ ॥

श्रुत्वेति भाषितं तस्य कोपरूक्षाक्षरोऽब्रवीत्।
सुस्निग्धो जनकस्त्यक्तस्तादृक्कल्पद्रुमोपमः॥ १८३॥
सदैवादमखानः स बाधितस्तदुपाधिभिः।
परलोकमनालोच्य स्वार्थं संत्यज्य दूरतः॥ १८४॥
अस्वस्थः स यथा भ्राता सेवितः सततं मया।
जानात्येवं न को राज्यं यथा तस्य मयार्जितम्॥ १८५॥
कोयं मद्भ्रातृपुत्रोद्य वद कैवास्य योग्यता।
अस्मिन्मत्पैतृके राज्ये योग्यो मदपरस्तु कः॥ १८६॥
स कनीयानहं ज्येष्ठो वयसा च गुणेन च।
पृथिव्यां वीरभोग्यायां साम्नः कोवसरोऽधुना॥ १८७॥
इत्याद्यनुचितं यत्तश्चोक्त्वा तं प्रत्यमोचयत्।
यैः स ग्रथितकन्थोभूद्राज्यार्थे कृतभावनैः।
अप्राप्यैतांस्तथा मत्वा निराशः समपद्यत॥ १८८॥

प्रत्यासन्ने नाशे
रुद्धजलौघस्य बद्धमूलस्य।
कुपथा प्रसरत्यादौ
धूर्तिरिव सेतौ मतिर्जन्तौ॥ १८९॥

युक्तमयुक्तवाक्ये चेदग्रहीष्यन्नयान्वितः।
तुरगाद्यर्जितं सर्वमदास्यच्चेत्स्वयं गतः॥ १९०॥
अथवाप्तं तमेकं चेदहनिष्यद्बलोन्नतः।
कोशं हर्तुमयास्यच्चेत्स्थितं पितृपुरान्तरे॥ १९१॥
अथवा बाह्यदेशं चेदगमिष्यत्तदध्वना।
निवृत्तः क्रमराज्ये चेदाक्रमिष्यच्छनैर्महीम्॥ १९२॥
क्रमाप्तसकलस्यास्य किमु नश्येद्विलम्बतः।
बालबालिशभृत्योक्ता युक्तवाक्याविनिश्चयात्॥ १९३॥

अनभिज्ञतया तेन तव किं किं न हारितम् ।
नास्मत्कोपि चिरं भोक्ष्यत्यतितीक्ष्णतया धिया ॥ १९४ ॥

वरमज्ञे सुते राज्ञो राज्यं दत्त्वास्ति नः सुखम् ।
इत्येकमेवं संबोध्य बलिनं नृपवल्लभम् ॥ १९५ ॥

आयुक्ताह्लादमल्लेकः संमन्त्र्य सचिवैः सह ।
चक्रे संभावनां राज्यनिश्चये राजसूनवे ॥ १९६ ॥

गत्वास्कन्दं प्रदास्यामि बह्रामामिति दर्पतः ।
अभिमन्युप्रतीहारो निश्चिकायाभिषेचनम् ॥ १९७ ॥

अथ स्वच्छन्दवार्तां स श्रुत्वा तूर्णं सुतान्वितः ।
वह्रामखानो वित्राणो निरगान्नगरान्तरात् ॥ १९८ ॥

दृष्ट्वा महार्घमणिमौक्तिकविद्रुमौघा-
न्रत्नाकरं श्रयति लुब्धमतिः स एकः ।
तत्तन्महाभयकरान्मकरांस्तदीया-
न्वीर्येण यः शमयितुं गतभीः समर्थः ॥ १९९ ॥

श्रुत्वा स्वभ्रातृपुत्रस्य चरितं चित्रमत्र सः ।
वित्रासितबलः पुत्रयुतो द्वाराध्वनाचलत् ॥ २०० ॥

यथैवादमखानस्य निष्काशनमयं व्यधात् ।
तथैवास्याभवद्रात्रौ न चिरेण फलत्यघः ॥ २०१ ॥

राज्यं च दशमासाब्दे कृत्वा मासि स माधवे ।
वर्षेष्टचत्वारिंशेगाद्दिवं श्रीपञ्चमीदिने ॥ २०२ ॥

वेतालोवसदुद्दण्डस्तम्भमण्डितमण्डपे ।
तेनैवोच्चण्डकोपेन खण्डितोक्रियया नृपः ॥ २०३ ॥

इत्यूचुः केपि केप्यूचुर्योगिनोशस्तहस्ततः ।
न्यस्तोत्कटौषधैर्ध्वस्तरुचिरस्तमगान्नृपः ॥ २०४ ॥

केचिद्भ्रात्रैव दुष्टेन कैवल्यात्सुतवर्जिते।
भूपतेर्दुश्चिकित्सार्थे कारिता भिषजस्त्वराम्॥ २०५॥
दिव्यं मौसुलदेवेन कृत्वाश्वस्ततया तथा।
वहिः श्यौटालदेशादौ हत्वा द्रोहेण पार्थिवान्॥ २०६॥
येभ्यश्च राज्यतिलकं सिंहासनगतोग्रहीत्।
पित्र्यांस्तान्सचिवान्हत्वा प्रमीत इति केचन॥ २०७॥
नूनं स पितृशापेन तत्तत्पापेन दूषितः।
हिमौघ इव तापेन विलयं प्रापदञ्जसा॥ २०८॥
निष्कण्टकं पुरं ज्ञात्वा निःशङ्को नृपनन्दनः।
जनकं शिविकारूढं स निनाय शवाजिरम्॥ २०९॥
मञ्जूषिकान्तरान्नीत्वा तं पटैकावृतं शवम्।
पितुः पादतले तत्र भूगर्भाभ्यन्तरेक्षिपत्॥ २१०॥
सर्वे मृन्मुष्टिकामात्रमेतदेवेति शंसिनः।
मुखावलोकनं कृत्वा तस्मिन्मृन्मुष्टिकां जहुः॥ २११॥
गर्तं तत्र समापूर्य शिलां मध्योन्नतां न्यधुः।
कठिनोयमभूद्युद्धे जनानित्येव सूचितुम्॥ २१२॥
अरुदन्सेवकास्तस्य कृतवक्षोवदारणाः।
स्मृत्वा स्वामिप्रसादानां मुखरीकृतदिङ्मुखाः॥ २१३॥
तद्राज्यं स्वल्पकालीनं प्रसादसुभगोर्जितम्।
अविन्दन्सेवकास्तस्य स्वप्नस्वर्गाप्तिसंनिभम्॥ २१४॥
पारसीभाषया हिन्दुस्थानवाचा च भूपतिः।
काव्यं गीतं व्यधाद्येन प्रशसन्ति न के जनाः॥ २१५॥
पुराणधर्मशास्त्राणि मोक्षोपायादिसंहिताः।
शृण्वतो भूपतेरासीद्यामिनीषु प्रजागरः॥ २१६॥

दोषाकुलाः परगृहाशुभपाकदा ये
घूकादयो दिनपतेरुदयं द्विषन्ति ।
तस्मिन्समुद्यति महारुचिरप्रकाशे
निष्ठा भ्रमन्ति विपिनेषु गुहाप्तदुःखाः ॥ २१७ ॥

दुष्टान्मेरेप्तकारादीञ्ज्ञात्वा निष्टान्विशिष्टधीः ।
खानोन्येद्युः सुदुःखोपि कारागारान्तरे न्यधात् ॥ २१८ ॥

निर्वर्त्यान्यक्रियां सर्वां स पितुर्व्ययशालिनीम् ।
राज्याभिषेकसंभारं चक्रे षोडशभिर्दिनैः ॥ २१९ ॥

घूकादयो नभसि सन्ति पराप्रशस्ता-
स्तावत्प्रदोषसमयाप्तसुखप्रचाराः ।
आशाप्रकाशविशदो विलसत्प्रकाशो
भास्वान्न यावदुदयं कुरुते सुचण्डः ॥ २२० ॥

इति जैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां हाजीहैदर-
शाहराज्यवृत्तान्तवर्णनं नाम द्वितीयस्तरङ्गः ॥

शिवायास्तु नमस्तस्मै त्रैलोक्यैकमहीभुजे ।
अशेषक्लेशनिर्मुक्तनित्यैश्वर्यदशाजुषे ॥ १ ॥

भूतं यद्राज्यवृत्तान्तं वर्तमानं करोत्यलम् ।
स्ववाग्योग्यप्रकारेण वन्द्यो योगीश्वरः कविः ॥ २ ॥

प्रतिग्रहानुग्रहाप्ता भुक्ता यन्नृपजीविका ।
तद्वृत्तं स्वस्य निष्कृत्यै वक्ष्ये श्रीवरपण्डितः ॥ ३ ॥

स्वदृग्दृष्टस्मृतक्ष्माभृद्विपद्विभववैकृतैः ।
सेयं कस्य न वैराग्यं सूते राजतरङ्गिणी ॥ ४ ॥

राज्यवृत्तानुरोधेन न काव्यगुणचर्चया ।
सन्तः शृण्वन्तु मद्वाचः स्वधिया योजयन्त्वपि ॥ ५ ॥

कायस्थोक्तिवदेवेयं कृता स्मृत्यै भविष्यताम् ।
दृष्ट्वेदं ललितं काव्यं कुर्वन्त्वन्येत्र पण्डिताः ॥ ६ ॥
ततः श्रीहस्सनो राजा व्यसनोज्झितवासनः ।
सिकन्दरपुरीं त्यक्त्वा पित्र्यं प्राशस्त्यसुन्दरम् ।
अगमज्जैननगरं पितामहविनिर्मितम् ॥ ७ ॥
सिंहासनोपविष्टः स निर्मलाम्बरभूषणः ।
बभौ कुवलयानन्दी शशीवोदयपर्वते ॥ ८ ॥
मल्लकोथाह्वदायुक्तो विधाय तिलकं स्वयम् ।
सौवर्णकुसुमैः पूजामकरोन्नवभूपतेः ॥ ९ ॥
रौप्यासनसमुद्भ्रान्तः कृत्वा छत्रपिधानकम् ।
एकशेषतयेव श्रीररक्षद्वंशभूषणम् ॥ १० ॥
चित्रं नवनृपस्यास्य मुखचन्द्रावलोकनात् ।
नगराननपद्मानां विकाशः समपद्यत ॥ ११ ॥
अभिषेकक्रियारब्धहोमधूममिषाद्भुवः ।
हर्षेणैवोद्गतो राज्ञो मुखोच्छ्वास इवाबभौ ॥ १२ ॥
वाद्यमानोद्यतातोद्यतोद्यत्प्रतिरवच्छलात् ।
सुप्रसन्नाः सुदेवस्य प्रोचुः पूर्णाशिषो दिशः ॥ १३ ॥
ध्वजमाला बभुर्दीर्घस्फुरद्रक्तपटाञ्चलाः ।
ज्वाला इव प्रतापाग्नेर्निर्गता नवभूपतेः ॥ १४ ॥
छायाकुसुमकार्यास्ता बभुः श्वेताः प्रविस्तृताः ।
चिरात्तरुणराजाप्त्या हर्षहासा इव श्रियः ॥ १५ ॥
कौशेयकोज्ज्वलाः सर्वे सेवका नवभूपतेः ।
स्फुरद्भाग्यतरङ्गस्य तरङ्गा इव तेरुचन् ॥ १६ ॥
कार्पासकपरीधानं यत्र यत्राभवत्पुरा ।
तत्र तत्रास्त तद्राज्ये कौशेयकव्ययो महान् ॥ १७ ॥

राज्यलाभे वसन्ताभे सूर्यस्येव महीपतेः ।
प्रत्यापहारकाः सर्वे दुष्टमेघा लयं ययुः ॥ १८ ॥

रविः प्रदीप्तः कुरुते प्रकाशं
विभाति चास्मिन्सति सूर्यकान्तः ।
तस्मात्समुत्थः स च पावकोर्च्य-
स्तमोपहः किं न करोति कार्यम् ॥ १९ ॥

आसन्पितृपितृव्याद्या यत्कृते विफलश्रमाः ।
पौत्रेण हेलया प्राप्तं तद्राज्यं गतकण्टकम् ॥ २० ॥

पितुः पितामहस्यापि पितृव्यस्य च संपदः ।
भाग्यभाजं नृपं प्रापुः सर्वाः सिन्धुमिवापगाः ॥ २१ ॥

षड्दर्शनपरिचयं सोग्रहीन्मत्सरोज्झितः ।
षड्दर्शनक्रिया यस्मिन्नैकमत्यमिवाययुः ॥ २२ ॥

भूपतेरह्मदायुक्तो नियुक्तः सर्वकर्मसु ।
साचिव्यं पुत्रसंयुक्तः पुण्योद्युक्तः सदाकरोत् ॥ २३ ॥

अथ प्रथममेवाह्मदायुक्तं मल्लिकं नृपः ।
स ग्रामग्रामनाग्रामप्रमेयस्वामिनं व्यधात् ॥ २४ ॥

पुत्रोस्य नौरुजा युक्तो द्वारपालादिकार्यभाक् ।
इक्षिकामभजद्राष्ट्रं स ग्रामविभवोर्जितः ॥ २५ ॥

पानलीलान्तरे तत्र प्रसादामृतवर्षिणा ।
येन दारिद्र्यदावाग्निः केषां न क्षपितः क्षणात् ॥ २६ ॥

वहिर्देशस्थिते राज्ञि बाल्ये यः सेवकोभवत् ।
स ताजिभट्टो मल्लेकमतः प्रापान्तरङ्गताम् ॥ २७ ॥

निग्रहानुग्रहव्यग्रः समग्रे राज्यविग्रहे ।
दत्तदूत्याधिकारेण राज्ञो जिह्वेव सोभवत् ॥ २८ ॥

अधिकारलदी पूर्वं स्फुरन्ती शतधाभवत् ।
तदा द्वितीयया वृत्त्या तस्मिन्कृतपदा बभौ ॥ २९ ॥
अन्येप्युच्चावचान्ग्रामाञ्जोनराजानकादयः ।
पूर्वसेवानुसारेण प्रसादं प्रापुरञ्जसा ॥ ३० ॥
श्रीमल्लेकाह्वदः सर्वकार्ये यां स्थितिमब्रवीत् ।
तां नोदलङ्घयद्राजा वेलां सिन्धुरिवोल्वणः ॥ ३१ ॥
पित्र्याः पैतमहा वापि निरुद्धा बन्धनेवसन् ।
भुट्टदेशं धिया तस्य तेषां निष्काशनं व्यधात् ॥ ३२ ॥
सर्वदर्शनसंयुक्तो नृपो मन्त्रिविधेयधीः ।
पितामहसमाचारं प्रावर्तयत मण्डले ॥ ३३ ॥
स्वामी क्षमी कृतज्ञश्च मन्त्री भक्तः स्मयोज्झितः ।
संयोगोयं प्रजापुण्यैः संचिरेण निरोक्षितः ॥ ३४ ॥
उच्चासनेषु मार्गेशठक्कुरादीन्निवेशयन् ।
तद्दूत इव राजाग्रे स निषण्णोभवत्तदा ॥ ३५ ॥
हितं प्राणपणेनापि प्रभोः संपादयन्नयम् ।
महेश्वरवदेतस्मिन्नाभवद्भक्तिखण्डितः ॥ ३६ ॥
मठाग्रहारसदननिर्माणातिथिपूजनैः ।
नृपोपचारैः साफल्यमनैषीत्सर्वसंपदः ॥ ३७ ॥
कमलममलं दृष्ट्वा श्रीमत्स्वकोशविभूषितं
मथयितुमथ प्राप्तो यावन्मदान्मदवारणः ।
प्रकृतिमलिनस्तावन्मग्नः सपङ्कसरोवरे
श्रवणचपलो बद्धो याति क्षयं मधुपैः सह ॥ ३८ ॥
अत्रान्तरे स बन्हामखानः पिशुनमोहितः ।
देशान्तरोद्यमं त्यक्त्वा युद्धायागान्मदोद्धतः ॥ ३९ ॥

त्वद्बलान्तरमेष्यामो वयं तव रणक्षणे ।
इति लेखैर्धृताशं तमकुर्वन्राजपूरुषाः ॥ ४० ॥
कर्णाभ्यन्तरतः शैलानुल्लङ्घ्य कटकोत्कटः ।
क्रमराज्यपुरं प्राप्तः क्रमराज्यजिहीर्षया ॥ ४१ ॥
तावन्मन्त्रियुतो राजा स्थितोवन्तिपुरान्तरे ।
तत्प्रत्यावृत्तिवार्तां तां श्रुत्वा तूर्णं न्यवर्तत ॥ ४२ ॥
राजा सुय्यपुरं प्राप्तः पितृव्यागमविह्वलः ।
आनीय सचिवान्सर्वान्सभान्तरिदमब्रवीत् ॥ ४३ ॥
पितुः क्रमागतं राज्यं पुत्रस्येत्युचितं मम ।
कोयं पितृव्यो ज्येष्ठोपि कनिष्ठो निर्मितोधमः ॥ ४४ ॥
अथ वा वीरभोग्यायां भुवि कोयं न यो द्वयोः ।
युद्धेन विजयी यः स्याद्राज्यभाक्सोस्तु मण्डले ॥ ४५ ॥
श्रुत्वेति नृपतेर्वाक्यं प्रत्यूचुर्मन्त्रिनायकाः ।
ये तेप्याद्मखानाद्यास्त्वदर्थे विधिना हताः ॥ ४६ ॥
कोयमल्पबलस्ते स्याद्योद्धा स्थानपरिच्युतः ।
किं त्वद्यावसरो नास्ति समित्युभयवेतनाः ॥ ४७ ॥
अमुमेव मिलन्त्येते यदि किं क्रियते पुनः ।
तद्धृत्वा कोशसामग्रीमितो गत्वा बहिस्ततः ॥ ४८ ॥
देशमाक्रम्य नः कार्यं सिद्ध्यत्येवाचिराद्विभो ।
श्रुत्वेति मल्लिकः प्राह भूपं तत्र सभान्तरे ॥ ४९ ॥
तिष्ठत्वत्र भवांस्तावन्मौनं मन्त्रिसभान्वितः ।
स्वकीयाद्मखानीयाञ्जेतुं तं विसृजामहे ॥ ५० ॥
ते चेज्जिता वयं यामः पुनः सर्वबलान्विताः ।
कोयं तत्संभ्रमः कस्य सहायः किं करोत्यसौ ॥ ५१

श्रुत्वेत्यादि मतं तेषां विविधं निश्चयोज्झितः।
मल्लेकाह्वदमन्त्रेण कर्तव्ये प्रत्यपद्यत॥ ५२॥
पितुः पितामहस्याथ सैन्यं वृत्वा निजान्तिके।
पैतृव्यान्सेवकान्स्वांश्च दत्त्वा तत्तद्बलान्वितान्॥ ५३॥
सफिर्यडामरांस्ताजिभट्टादीन्व्यसृजन्नृपः।
योद्धुं बऱ्हामखानाय मावरीदेशवासिने॥ ५४॥
अथ स्वल्पबलानेताञ्जेष्यामीति त्वराकुलः।
तावद्बऱ्हामखानः स प्राप डुलपुरान्तरम्॥ ५५॥
अनागतैः कृताश्वासैरपि राजमहत्तमैः।
स्वात्मानं वञ्चितं मेने तन्निराशो नृपात्मजः॥ ५६॥
तद्दिने राज्यलक्ष्मीः सा पितृव्यभ्रातृपुत्रयोः।
द्वयोरासीत्समारूढा कोट्योः संदेहधोरिव॥ ५७॥
चौरा इवान्धकारौघे द्वैराज्योपप्लवप्रियाः।
तुतुषुश्चक्रवाडाद्यास्तं श्रुत्वा क्रमराज्यजाः॥ ५८॥
अथ जैनगिरिं यावदाययौ तद्रणाकुलः।
दूतस्तावत्समागत्य भूपतेरिदमब्रवीत्॥ ५९॥
देव बऱ्हामखानः स तनयो नयविच्युतः।
युयुत्सुः समरे बद्धः करीव मदनिर्भरः॥ ६०॥
पतिते तद्रणोद्याने त्वद्बलोद्धतमानसे।
तत्यजेनुचरैः खानः पौषे पर्णैरिव द्रुमः॥ ६१॥
ततः संजरमीराद्या गर्जन्तः सैन्यनायकाः।
दुष्टमेघा इवायाताश्चक्रुस्तच्छरवर्षणम्॥ ६२॥
धन्यास्ते श्लाघ्यमरणाः स्थरणाः स्वामिनः पुरः।
स्मृत्वामितप्रसादानां जीवं यत्तृणवज्जहुः॥ ६३॥

तच्छुद्धये ऋणमिवेक्ष्य मितप्रसादं
प्राप्ते क्षणे जहति ये निजजीवरत्नम् ।
शस्त्राणि पुष्पनिकरानिव संविदन्तो ।
धन्यास्त एव कतिचित्प्रभुसेवकेभ्यः ॥ ६४ ॥

अथ देवस्य माहात्म्यं यत्तस्यैव रणे भटाः ।
शिरालमार्गपाद्या ये तद्भृत्याः प्रलयं ययुः ॥ ६५ ॥

इदं चित्रतरं यन्नः कटके कोपि नो मृतः ।
किं त्वस्मद्भटनिर्मुक्तशराग्रफलसंधितात् ॥ ६६ ॥

निष्क्रष्टुं नाशकत्कोष्ठात्खड्गं खानो रणोद्यतः ।
तेनाफलयुधः खानो दीनस्त्वद्भटवेष्टितः ॥ ६७ ॥

चितानल इवासारैर्मिथोष्मा समपद्यत ।
यावत्समेत्य हन्तुं तं प्रारभन्कृपया द्रुतम् ॥ ६८ ॥

तं फिर्यडामरस्तावदरक्षद्बाहुपञ्जरे ।
भूः पङ्किलातिवृष्टिश्च द्विजोग्रे निःसहायता ॥ ६९ ॥

मृत्युभीतिरिति प्राभूत्किं किं तस्य न दुःखदम् ।
शीतवातभयोद्विग्नाः मग्नाः केदारकर्दमे ॥ ७० ॥

त्यक्त्वा तं तद्भटा नग्ना गतोटा इव तेचलन् ।
अर्जितां सर्वसामग्रीं पामरैः परिलुण्ठिताम् ॥ ७१ ॥

साक्रन्दं च सुतं पश्यन्नश्यद्धैर्यः स विव्यथे ।
दध्यौ च क्क च मे भ्राता क्क भृत्याः क्क गृहादिकम् ॥ ७२ ॥

स सुतः शत्रुभिर्बद्धः कं पृच्छामि करोमि किम् ।
वरं मरणमेवास्तु मा मास्तु मम जीवनम् ॥ ७३ ॥

फलितं वचनं मेद्य यदुक्तं जनकेन तत् ।
धिङ्मां चिन्तामणिं त्यक्त्वा येन काचमणिः श्रितः ॥ ७४ ॥

इत्यादि निन्दन्स्वात्मानं पश्चात्तापहताशयः ।
जीवन्मरणमापन्नः खानः संप्रति वर्तते ॥ ७५ ॥
पौषे तरुरिवोन्नम्रः फलपत्रविवर्जितः ।
राज्यं तव क्रमायातं दत्तं देवेन भुज्यताम् ॥ ७६ ॥
फलितो धर्मविजयः सोयं भाग्यैर्महीपते ।
किमन्यत्तस्य कर्तव्यं यत्तत्तूर्णं समादिश ॥ ७७ ॥
श्रुत्वेति नृपतिस्तुष्टो दत्त्वास्मै पारितोषिकम् ।
जयवाद्यनिनादौघैः सर्वं बलमतोषयत् ॥ ७८ ॥
अन्येद्युस्तद्भटा जैनगिर्या कटकवेष्टितम् ।
बन्हामखानमानिन्युः ससुतं भूपतेः पुरः ॥ ७९ ॥
संग्रामविजयोत्सिक्तं सत्कर्तुं स्वभटव्रजम् ।
सहर्षो राजधानीं तामारुरोह नरेश्वरः ॥ ८० ॥
उच्चावचोक्तिमुखरपौरान्तरगतं नतम् ।
भूमेरन्ध्रमिवेक्षन्तं लज्जया च भयेन च ॥ ८१ ॥
रणक्षणभटन्यस्तहस्तध्वस्तविभूषणम् ।
दयालुनीचदत्तात्मजीर्णवस्त्रावगुण्ठितम् ॥ ८२ ॥
मुखलग्नेषुभेदोद्यद्रक्ताक्तधृतवेष्टनम् ।
अलक्ष्मीवीक्षितं दूरात्पितृव्यं क्षणमैक्षत ॥ ८३ ॥
भाग्योर्जितस्य भूभर्तुरग्रे बद्धः समात्मजः ।
दीनात्मा ददृशे पौरैः स्थिराः कस्य विभूतयः ॥ ८४ ॥
लोभाक्रान्तधियो विवेकमुचितं मुञ्चन्ति यन्मोहिता
भुक्ता या मनसापि दर्पकचितास्त्यक्तुं न शक्याः स्वयम् ।
संतापाय भवन्ति संततमलं नीताः परैश्चेद्बला-
न्मामा सन्तु भवेत्र हन्त चपला वेश्या इवैताः श्रियः ॥८५॥

उपेक्षितः पिता तादृगस्वास्थ्ये स्वार्थलिप्सया ।
ज्येष्ठोप्यादमखानः स बाधितोपाययुक्तिभिः ॥ ८६ ॥

दुराशयापरो भ्राता श्रियोसाध्या अपेक्षणात् ।
राज्यलोभाद्भ्रातृसुते तास्ता द्रोहधियः कृताः ॥ ८७ ॥

अथैतेन फलं प्राप्तं तदधर्मविनिश्चयात् ।
दृष्ट्वा बद्धं तमानीतं खानमित्यवदज्जनः ॥ ८८ ॥

केप्यूचुः स पितुः शापाद्विमूढः समपद्यत ॥
तथा हि तं पिता जातु पितृद्वैधे रहोब्रवीत् ॥ ८९ ॥

राज्यं त्वदग्रजाभ्यां मे नाशितं वैरतो मिथः ।
तत्राप्यनिष्टौ द्वावेव मम चिन्ताज्वरप्रदौ ॥ ९० ॥

तदेतौ विनिवार्याहं युक्त्या देशसुखाशया ।
त्वामेव वर्धयिष्यामि त्वं मदेकाश्रयो भव ॥ ९१ ॥

श्रुत्वेति प्राह तं नाहं जातु चेद्भ्रातरं त्यजे ।
यतो ज्येष्ठोस्ति मे द्विष्टो द्वयोः किं स करिष्यति ॥ ९२ ॥

श्रुत्वेत्याहाग्रजं हन्तुं त्वयेच्छुस्त्वां स रक्ष्यति ।
प्राप्तप्राघुणहस्तेन भुजङ्गमिव वेश्मगम् ॥ ९३ ॥

सिद्धकार्यः सपुत्रः स बाधते यदि का गतिः ।
तच्छ्रुत्वा संस्कृतज्ञः स श्लोकेनेत्युत्तरं ददौ ॥ ९४ ॥

विद्यातीर्थे श्रुतपरिचिताः साधवः सत्यतीर्थे
गङ्गातीर्थे सकलमुनयो योगिनोध्यात्मतीर्थे ।
लज्जातीर्थे कुलयुवतयो दानतीर्थे वदान्या
धारातीर्थे धरणिपतयः किल्विषं क्षालयन्ति ॥ ९५ ॥

तदाकर्ण्याब्रवीद्राजा सक्रोधं तं दुराशयम् ।
बहुधा युद्धदृष्टोसि नाहं यत्रास्मि तत्क्षमः ॥ ९६ ॥

घराकः खड्गधारार्थी तत्र त्वमपि दर्पितः।
किं वच्म्युत्पाटने योग्ये नेत्रे पश्यामि दुर्धियः॥ ९७॥

तदेक एव नष्टस्त्वं भवेः सानुशयोचिरात्।
इत्युक्तमस्मिन्पित्रा यत्तदद्य फलितं वचः।
तमीक्ष्येति कथा लोकः सशोकोप्यकरोन्मिथः॥ ९८॥

(इति वन्हामखानपराजयः।)

यथोचितैर्दानमानैस्तोषयित्वा निजं बलम्।
तस्मिन्नेव दिने राजा तुष्टो नगरमाययौ॥ ९९॥

बद्धं रिपुं समादाय नौकारूढं सुतान्वितम्।
श्रीजैननगरे राजावासे स्वे बन्धने व्यधात्॥ १००॥

जननी नृपतेः प्रीता दर्शनामृतहर्षणा।
अमन्यत रणोत्तीर्णं पुनर्जातमिवात्मजम्॥ १०१॥

शङ्कितो यौनसंबन्धाद्भूपतिः कतिचिद्दिनैः।
रुषावतारसीहादीन्कारागारान्तरे व्यधात्॥ १०२॥

पापो मल्लिकजाजः स पञ्चगह्वरदेशजः।
पुनश्चटुकतन्त्रेण तत्तदायासकार्यभूत्॥ १०३॥

उत्कोचमुद्रादानादिप्रपञ्चाञ्चितवञ्चनः।
सुसंचयकृता येन देशोशेषो विलुण्ठितः॥ १०४॥

अभिमन्युप्रतीहारः स्वतन्त्रो मन्त्रिमण्डले।
स देवसरसि स्वाम्यमभजद्बलदर्पितः॥ १०५॥

लोत्रप्रतिग्रहक्षेत्रदत्तरुद्धिः पदे पदे।
लुब्धः स निजमात्मानमनाशीर्भाजनं व्यधात्॥ १०६॥

शङ्क्यो राजगृहासन्नः पितृव्यो बन्धनस्थितः।
त्वय्यन्यत्र स्थिते कोपि नीत्वा द्वैराज्यमाचरेत्॥ १०७॥

इत्यादिप्रेरितोनेन नेयबुद्धिर्नरेश्वरः ।
क्रुद्धो बह्लामखानाय नेत्रोत्पाटनमादिशत् ॥ १०८ ॥
तस्य तूलाचिते नेत्रद्वये तप्तां शलाकिकाम् ।
जैनराजानको लौहीं दङ्गाशार्थमदापयत् ॥ १०९ ॥
नैर्घृण्यमक्षिहर्तुर्यत्कष्टाक्षस्य च या व्यथा ।
द्वयं न शक्यते वक्तुं यथार्थं मादृशां गिरा ॥ ११० ॥
दुर्नीतिमवदन्केचित्केचिदीश्वरजृम्भितम् ।
प्राक्कर्मपाकमपरे नीचसङ्गमथापरे ॥ १११ ॥
केचिद्विभववैशस्यं कातरत्वमथापरे ।
तदन्धकरणं श्रुत्वा कोप्यवाच्यगिरोब्रवीत् ॥ ११२ ॥
मानुष्यं मास्तु तच्चेत्स्याद्वरं प्राकृतवेश्मनि ।
राजगेहेस्तु मा जन्म कस्यापीति न कोवदत् ॥ ११३ ॥
स्फूर्जद्भाग्यसमुद्भवन्नवनवप्रोल्लाससंपत्सुखः
प्रायो वेत्ति विभुर्विनोदकलया कालं विशालं क्षणम् ।
दौर्भाग्योदितदुर्गतेः स्मृतनिजप्राच्यप्रकर्षोन्नते-
स्तस्य प्राप्तमहाभयस्य स भवेत्स्वप्नोपि कल्पोपमः ॥११४॥
अयःशृङ्खलबद्धाङ्घ्रिः सोन्धस्तत्रैव बन्धने ।
स्मरन्विभवसामग्रीमनयच्छेषमायुषः ॥ ११५ ॥
नायं गीतैर्विना जातु वर्तते स्म गृहान्तरे ।
इत्येव तस्य साराव झिल्ल्यो जागरणं व्यधुः ॥ ११६ ॥
योभूच्छय्यागृहे नित्यं सर्वाङ्गे सेवकैर्वृतः ।
अभूवन्केवलं तस्य भृत्याश्चटकमत्कुणाः ॥ ११७ ॥
वितानावलयो यस्य बभूवुर्दुर्लभाः सुरैः ।
दृष्टास्त एव तद्गेहे लूतातन्तुविनिर्मिताः ॥ ११८ ॥

यद्वपुः कोमलं पट्टतूलशय्यामभूषयत् ।
तदा तत्तस्य भूपृष्ठेशयिष्टादृष्टविष्टरम् ॥ ११९ ॥

दीयतां दीयतां तस्य वाणी या त्यागिनः श्रुता ।
विपत्क्षणेन सैवाभूत्तत्तद्वस्तूपयाचने ॥ १२० ॥

गतं स्वाम्यं हता भृत्याः प्राप्तः परिभवो नवः ।
बन्धनं शृङ्खलाबन्धैर्नेत्रोत्पाटनतो व्यथा ॥ १२१ ॥

इत्येवैकः स्मरन्दुःखं सोन्धो राजसुतश्चिरम् ।
नाज्ञासीत्स्वात्मनस्तुल्यमपरं प्राक्कथास्वपि ॥ १२२ ॥

कोशोज्ज्वलं कमलमीक्ष्य नवं समन्ता-
दस्मिन्नमेहमिति तुष्यति चञ्चरीकः ।
दोषानुषङ्गमधिगम्य निबद्धमूर्ति-
स्तत्रैव नाशमुपयाति विधौ विरुद्धे ॥ १२३ ॥

राजवासः स्वलीलार्थं निर्मितस्तेन यः स्वयम् ।
स एव बन्धनायाभूत् को वेत्ति भवितव्यताम् ॥ १२४ ॥

इत्थं वर्षत्रयं तावदनुभूतमहाव्यथः ।
अस्थिशेषतनुः क्लेशात्तस्मिन्नेव क्षयं ययौ ॥ १२५ ॥

देशकालमनालोच्य वैरं यः कुरुतेरिभिः ।
स नश्यत्यचिरेणैव शौर्यश्रीमण्डितोपि सन् ॥ १२६ ॥

अभिमन्युप्रतीहारस्तत्तच्छौर्यमदोद्धतः ।
अयुक्तपक्षं प्रबलं नासहिष्ट स निष्ठुरः ॥ १२७ ॥

स्वातन्त्र्येण स्फुरत्प्राग्वत्स्फुरद्वाक्शरताडनम् ।
दर्पादायुक्तपक्षस्य सूचीवाक्षिगतोभवत् ॥ १२८ ॥

उपायान्कुर्वता तांस्तांश्छन्नकोपेन मन्त्रिणा ।
बन्द्धुं तं मल्लिकेनात्र नाप्राप्यवसरः क्वचित् ॥ १२९ ॥

एकदा तद्गृहं गत्वा श्वस्तं श्रीविजयेश्वरे ।
तद्धिया नृपती राजधान्यन्तस्तमबन्धयत् ॥ १३० ॥
अभिमन्युः स्वयं ख्यातः पाण्डवाद्याश्च तत्सुताः ।
शृगालवत्तदाभूवन्धिगिच्छां विविधां विधेः ॥ १३१ ॥
यस्याहवे वदनमीक्ष्य महागजेन्द्रा
दूरं प्रयान्ति बलिनः सशिलीमुखौघाः ।
दर्पोद्विशेद्यदि न निर्मितकूटयन्त्रं
कस्तं निरोद्धुमलमुत्सहते मृगेन्द्रम् ॥ १३२ ॥
सपुत्रं हृतसर्वस्वं बद्ध्वा नौकान्तरे ततः ।
ताजिभट्टः समानीय कारागारान्तरेऽक्षिपत् ॥ १३३ ॥
यादृग्वह्लामखानाय कारयन्नृपतेरसौ ।
वर्षेणैकेन तादृक्तं नेत्रोत्पाटनमन्वभूत् ॥ १३४ ॥
यादृग्वन्हामखानस्य व्यथाभूदतिदुःसहा ।
अविन्दत्तादृशीं सोपि वक्तुं नान्येन शक्यते ॥ १३५ ॥
यस्मिन्नेव दिने यस्मिन्मासे विप्रियमातनोत् ।
तस्मिन्नेव दिने तस्मिन्मासे सोपि समासदत् ॥ १३६ ॥
सोपि वर्षद्वयं भुक्त्वा सपुत्रो नरकव्यथाम् ।
बह्लामखानवद्बद्धो व्यसनान्तर्व्यपद्यत ॥ १३७ ॥
अद्यैव मद्दृशौ धन्ये याभ्यां मत्कुलवैरिणः ।
सर्वस्वहरणं दृष्टं मरणं जैनभूपतेः ॥ १३८ ॥
इत्यूचे निष्ठुरं यत्स दुष्टात्मा कृतलुण्ठनः ।
तदुक्तिफलमापासौ तयोर्नाशोभवत्फलम् ॥ १३९ ॥
चिन्तितं जैनभूपेन संपन्नं नैव यत्पुरा ।
हेलयास्याद्य पौत्रेण कृतमित्यवद्ज्जनः ॥ १४० ॥

यत्कर्तुमिच्छति परापचयं मनुष्य-
स्तेनैव तस्य नियमेन भवेद्विनाशः।
शृङ्गं बिभर्ति हरिणः पररन्ध्रबुद्ध्या
शार्ङ्गीकृतं तदिषुभिर्हरते तमेव॥ १४१॥

दृष्टो रम्यश्चिरमुपवने वंशवाटो जनैर्यो
नानावर्णैस्तृणगणगुणैर्भूषितो भूरिपत्रः।
तत्रान्योन्याहननजननात्ताद्दगभ्युत्थितोग्नि-
र्येनैकान्तादुपवनगतं सर्वमेव प्रनष्टम्॥ १४२॥

या कारकसभा रम्याभवन्मौलमहीभुजाम्।
अचिरेणैव कालेन सर्वा स्वप्नोपमाभवत्॥ १४३॥

कृष्टुं मल्लिकजादोयमन्धजं स्थानमिच्छति।
राज्यार्थमिति केनापि राज्ञोग्रे पैशुने कृते॥ १४४॥

सर्वस्वहरणं कृत्वा कारायां बन्धुमादिशत्।
श्रुतेन तेन तद्विष्टो न कः सौख्यं समासदत्॥ १४५॥

आक्षेपैरर्जिता यद्वत्तेन श्रीर्न्यायवर्जिता।
तद्वदाक्षेपतस्तस्मान्नीता राजाधिकारिभिः॥ १४६॥

उत्कोचमुद्रादानादितत्तदायासकारणात्।
स विपत्पतितो नाभूत्कस्यापि करुणावहः॥ १४७॥

कदर्यहस्ते क्षणसौख्यनिष्ठं
विशल्यशुद्धं प्रसभं धनं यत्।
कष्टेन निर्याति तदेव कष्टं
शुनीभगे लिङ्गमिव प्रविष्टम्॥ १४८॥

एकैकं संचितं वस्तु कृष्टुं कष्टेन तत्करात्।
नियुक्तैः पीडनं कृत्वा विलान्तर्गतसर्पवत्॥ १४९॥

पूर्णनापितमल्लेकजादाद्या हृतसंचयाः ।
बन्धनस्थाश्चिरं भूत्वा ते सर्वे प्रमयं ययुः ॥ १५० ॥
तत्तद्राज्यहिताकाङ्क्षिकुले तस्य क्षयावधिः ।
शापः श्रीजैनभूपस्य प्रसारितभुजोभवत् ॥ १५१ ॥
मन्त्रे राज्यविवर्धनं कुरुत भोः सत्यं ब्रुवे मन्त्रिणो
नाशं स्वामिनि कुर्वतां न हि सुखं स्याद्वः परत्रेह च ।
यैर्यैर्जैनमहीपतावपकृतं पुत्रैर्न भृत्यैर्न वा
तैर्लब्धं फलमीदृशं तदहिता मात्सर्यधीस्त्यज्यताम् ॥१५२॥
अन्येप्युच्चावचास्तस्य सेवका ये तदाभवन् ।
तदनिष्टकराः सर्वे तद्धत्तेपि प्रमिम्यिरे ॥ १५३ ॥
यावद्वसति वसन्तस्तावद्विलसन्ति संततं भृङ्गाः ।
तस्मिन्निष्टे नष्टे भ्रष्टच्छाया न चेष्टन्ते ॥ १५४ ॥
पूर्वं जैननृपः सैदनासीरादीन्समागतान् ।
पैगम्बरान्वये जातान्पूज्याञ्ज्ञात्वा महागुणान् ॥ १५५ ॥
प्रोच्चासनकरस्पर्शदर्शितातुलसत्कृतीन् ।
स्वसुतादानमानेन यांस्तान्राष्ट्राधिपान्व्यधात् ॥ १५६ ॥
तेभ्यः सैदञ्जमालादीन्राजा ज्ञात्वा तरङ्गितान् ।
प्रत्यमुञ्चत्तदादेशात्तत्संचयमवञ्चयन् ॥ १५७ ॥
स सैदनासिरो धन्यो गण्यो धुरि मनीषिणाम् ।
यो विचार्यायतिं राज्ञि सति देशान्तरं ययौ ॥ १५८ ॥
सुतोपनयनाद्राज्ञः सुचिरं यैर्नृपायितम् ।
बहुरूपादिराष्ट्राधिपत्यनित्यसुखोज्ज्वलैः ॥ १५९ ॥
इतस्ततो भ्रमन्तस्ते केचिड्डिलीपुरं ययुः ।
केचिद्विभवलोभेन पुनर्निष्काशिता अपि ।
नारमन्त बहिर्देशे माघे मधुकरा इव ॥ १६० ॥

प्राप्ता ये परदेशजाः कणभुजो देशेत्र संपद्युता
गर्भोत्थादिविविस्मृतात्मचरिताः कुर्युः प्रजापीडनम्।
ते तत्पापभरेण नष्टविभवा निष्कासिताः स्वामिना
गच्छन्ति ह्रदकष्टमत्स्यतुलनां तज्जीवनाशाकुलाः॥ १६१॥

राजानकैष्ठक्कुरैश्च तैर्मार्गपतिभिः सह।
निबद्धयौनसंबन्धकृतैक्यो मल्लिकोभवत्॥ १६२॥

सर्वतन्त्राधिकारेण राजतन्त्रमखण्डितम्।
ताजिभट्टाय मल्लेको मुष्टिबन्धमिवाकरोत्॥ १६३॥

पुत्रीकृतोयं मद्वंश्यो मदाज्ञास्मात्स्फुरत्यलम्।
इति तस्याक्षमिष्टादौ मल्लिकः स्फूर्जितं न किम्॥ १६४॥

स्वसारं वीक्षते स्वल्पं मार्गेशोपि ज्यहांगिरः।
स्वसारं सैदनिर्मुक्तिदत्तपत्राङ्कितां व्यधात्॥ १६५॥

तन्मार्गेशाग्रजां राजानुमतेन प्रसन्नधीः।
अभ्यर्थ्य ताजिभट्टाय मल्लेकस्तामदापयत्॥ १६६॥

ज्यहांगिरोपि मार्गेशः क्षितिपालानुरोधतः।
स्वाग्रजार्पणमेतस्मै चक्षमे नयदक्षधीः॥ १६७॥

चञ्चरीका इवोद्यानं कुल्या इव महोदधिम्।
भाग्यभाजं समायान्ति कलत्राणि च संपदः॥ १६८॥

तां मार्गेशकुलोद्यानकल्पवल्लीं फलप्रदाम्।
तैः संपूर्णगुणैः पूर्णां भट्टो लक्ष्मीमिवासदत्॥ १६९॥

सैदनिष्काशनं नैव संपन्नं जैनभूपतेः।
हेलयैवास्य पौत्रेण कृतमित्यवदज्जनः॥ १७०॥

कृते निष्कण्टके देशे मल्लिकाह्मदसंततः।
प्रतिष्ठारसिको राजा तत्सभा च तदाभवत्॥ १७१॥

विवाहोत्सवसङ्क्लेशमनाख्ययात्रादिमङ्गलाम् ।
नापरामग्रहीच्चिन्तां सौराज्यसुखितो जनः ॥ १७२ ॥
पञ्चाशाद्वत्सरे राजा निर्ममे निर्ममेहितः ।
दिद्दामठे नदीप्रान्ते राजधानीं मनोहराम् ॥ १७३ ॥
धन्याहमन्या किंशून्या इत्येवाम्बुनि बिम्बिता ।
स्फुरच्चतुष्किकाहस्तैर्नृत्यतीव दिवानिशम् ॥ १७४ ॥
मद्वंश्येन कृता केनापीदृशीति दिदृक्षया ।
स्वर्णच्छत्रच्छलाद्यस्याः प्राप्तो व्योम्नो दिवाकरः ॥ १७५ ॥
यत्कारुक्लृप्तकोणस्थदारुगारुडमूर्तिभिः ।
त्रस्ताश्चरन्तो नायान्ति पक्षिणस्तन्नभोध्वना ॥ १७६ ॥
गुल्खातुनाभिधा राज्ञी माता दिद्देव देवता ।
विशालां धर्मशालां साप्यकरोन्मद्रसाख्यया ॥ १७७ ॥
यत्प्रवेशे नृपस्तुष्टो मात्रा सह समागतः ।
पक्षमेकं व्यधाद्भूरिव्ययशालिमहोत्सवम् ॥ १७८ ॥
प्रतिष्ठामर्धनिष्पन्नां निर्लोज्यानुचितां नृपः ।
नगरे पितृपुण्यार्थं खानगाहं विनिर्ममे ॥ १७९ ॥
कुलोद्धरणनागस्य तटभूमौ महीपतिः ।
वह्निदग्धं नवं चक्रे राजवासं मनोरमम् ॥ १८० ॥
विजयेशनदीप्रान्ते राजवेश्म नवीकृतम् ।
भाति भातिशयान्मध्यरत्नं हारावलेरिव ॥ १८१ ॥
छत्रं यत्र स्फुरत्पत्रं वितस्ताम्बुनि बिम्बितम् ।
प्रेक्ष्य तुष्टैः सुरैर्मुक्तमिव सौवर्णपङ्कजम् ॥ १८२ ॥
भाति सुय्यपुरे राजधानी राजविनिर्मिता ।
पुरातनीं पराकीर्णां हसतीव सुधासिता ॥ १८३ ॥

राज्ञा कृतैरनेकाक्षे सोद्याने राजवेश्मभिः ।
यद्दर्शनादनेकाक्षो नूनं स्वमभिनिन्दति ॥ १८४ ॥
प्रतिष्ठा विहिता राज्ञा नवा या निजमण्डले ॥
अन्यास्ता वर्णिता नात्र ग्रन्थगौरवतो मया ॥ १८५ ॥
दिद्दामठेह्मदायुक्तः कृतातुलगृहावलिः ।
मसूदामजिरोदारशिलाभित्तिविराजिताम् ॥ १८६ ॥
खानगाहेति विख्यातं धर्मवासं विनिर्ममे ।
येन नानादिगायाततत्तत्पथिकशालिना ॥ १८७ ॥
दिद्दामठपुरं सर्वं ययौ नेत्राभिरामताम् ।
प्रवेशे नृपमानीय षष्टिलक्षकृतव्ययम् ॥ १८८ ॥
दत्त्वा सतिपुषग्रामं सत्रं यत्रावतारितम् ।
शाहाभिधास्य भार्यापि मठं सुकृतकर्मठम् ॥ १८९ ॥
खेरीविषयमार्गान्तर्निर्ममे सप्रतिग्रहम् ।
तत्पुत्रो नौरुजायुक्तो कृत्वा धर्ममठं नवम् ॥ १९० ॥
नगरात्क्षिप्तिकां यावच्छैलसेतुं नवं व्यधात् ।
तद्दीपे सति यो हन्ति सर्वेषां पुरवासिनाम् ॥ १९१ ॥
स्तम्भनिर्मितदीर्घाश्मसेतुबन्धकुतूहलम् ।
भ्रातरावपि तौ धन्यावन्यौ रिगकनूथकौ ॥ १९२ ॥
व्यधातां क्रमराज्यान्तर्मठौ सौधमनोहरौ ।
ताजिभट्टोपि भूपालवाल्लभ्यविभवोर्जितः ॥ १९३ ॥
कुरालविषये जैनपुरीमध्ये मठं व्यधात् ।
कुद्दीनपुरीमध्ये चक्रेश्मरचनां नवाम् ॥ १९४ ॥
इन्द्रोपीक्षेत तत्सोपि भवेत्कर्मकुतूहली ।
पद्राजानको राजवस्त्रशोभाधिकारभाक् ॥ १९५ ॥

खानगाहं स निर्वर्त्य बलाढ्यमठकान्तरे ।
नवः पितृविहारान्ते निजजन्मभुवोन्तरे ॥ १९६ ॥
येन लोकार्तिहृच्चक्रे विहारः स्वगृहोज्ज्वलः ।
मठाग्रहारमस्जीदाविहारगृहपङ्क्तिभिः ॥ १९७ ॥
त्रिंशद्विंशप्रतिष्ठास्ता मण्डले येन कारिताः ।
सर्वदर्शनसंपन्नप्रतिपादितदक्षिणे ॥ १९८ ॥
प्रतिहार्यक्षणे येन कोटिरेका व्ययीकृता ।
स फिर्यडामरो जैननगरे सत्रसुन्दरम् ॥ १९९ ॥
मसूदाहजिरोदारं खानगाहं विनिर्ममे ।
हयातखातुना राजवल्लभा विभवोज्ज्वला ॥ २०० ॥
मृगवाटाभिधे स्थाने मठं दग्धं नवं व्यधात् ।
मोमारखातुना राजमहिषी स्वधनैर्नवम् ॥ २०१ ॥
राजधान्यन्तिके जैननगरे स्वमठं व्यधात् ।
जयरालाभिधा राजपुत्री राजान्वयोदिता ॥ २०२ ॥
शिकन्दरपुरप्रान्ते खानगाहं नवं व्यधात् ।
श्रीजैननगरेयस्य मसूदाहजिरादयः ॥ २०३ ॥
भान्ति प्रतिष्ठा यत्रैताः पुण्यकीर्तिमनोहराः ।
कर्ममत्यधिकारस्थो नापितः फेरठक्कुरः ॥ २०४ ॥
विजयेशनदीपारे मठं चारुतरं व्यधात् ।
सय्यभाण्डपतिश्चक्रे विहारं विजयेश्वरे ॥ २०५ ॥
यो धर्मसङ्घाद्युपक्रद्बौद्धमार्ग इवाबभौ ।
प्रासादं लक्ष्ममेराद्या भ्रातरोस्य वणिग्वराः ॥ २०६ ॥
भीमस्वामिगणेशस्य व्यधुः शैलमयं नवम् ।
तद्गणेशालयं दृष्ट्वैवोन्नतं सुधया सितम् ।
द्वेषान्म्लेछमुखं चित्रं भवत्येवासितं नतम् ॥ २०७ ॥

अन्येप्युच्चावचा वेश्मप्रतिष्ठा विविधा व्यधुः
याभिः स्वर्गोपमं भाति मण्डलं वेश्ममण्डितम् ॥ २०८ ॥
देशेऽस्मिन्विभवोभवन्कति न ते यैः संचयार्थं वयः
संनीतं न ततो मृतेरुपहृताप्येकाकिनी काकिनी ।
सोहं लब्धपदः करोमि यदि नो धर्मं प्रतिष्ठादिभी
रिक्तो याम्यमुतोचिरादिति मतिः पुण्यात्मनो जायते ॥२०९॥
कोपोद्दीपे नरेन्द्रस्य वेगादपि समुत्थिते ।
द्विषामधो गतिर्जाता न तु तद्वेश्मनां क्वचित् ॥ २१० ॥
योभूद्राजविरुद्धानां दण्डस्तद्गृहलुण्ठनम् ।
तद्राज्ये प्रभविष्णूनां तद्विकल्पोगलद्धृदः ॥ २११ ॥
किमन्यद्वेश्मनिर्माणव्यसने शाख्युपद्रवात् ।
जाता वनभुवः शून्या द्विषां वसतयो यथा ॥ २१२ ॥
श्रीतोरमाणदीन्नारान्निष्प्रचारानवेत्य च ।
द्विदीन्नारी नागमयी नवा तेन प्रवर्तिता ॥ २१३ ॥
पञ्चविंशतिको योभूत्पुराणस्ताम्रनिर्मितः ।
किंचिदूनीकृतश्चाभूद्द्रव्याप्राचुरलक्षणात् ॥ २१४ ॥
मुक्तामणिं नृपतिमौलिषु योग्यमूर्तिं
या वर्धयत्युपनतेन पयोधरेण ।
सा पावनी शुचिरुचिर्जननी सुमुख्या
संगच्छते न चिरकालमनेन साकम् ॥ २१५ ॥
(सा शुक्तिकास्य जननी जननीतचित्ता ।
साध्वीव तिष्ठति चिरं नरभुक्तिकामा ॥ )
॥ इति वा पाठः ॥

शैशवे स्ववयो दत्त्वा राजा संवर्धितो यया ।
गुल्खातुनास्य जननी साकस्मात्त्रिदिवं गता ॥ २१६ ॥
कोपौर्वविकृते राज्ञस्तरङ्गतरलात्मनः ।
सततं प्रतिवन्धाय सिन्धोर्वेलेव याभवत् ॥ २१७ ॥
तां हिन्दुकसमाचारशतपत्त्ररविप्रभाम् ।
स्मृत्वा सरुदिताक्रन्दं शुशोच सकलो जनः ॥ २१८ ॥
तया वियुक्तस्तत्कालं राजा कृष्णाम्बराम्बरः ।
दिनश्रियेव पद्मोभूद्दुःखसंकुचिताननः ॥ २१९ ॥
ग्राहयित्वांशुकं शुद्धं व्यतीते दिनसप्तके ।
सव्ययं मल्लिको राज्ञो व्यधाद्दुःखनिवारणम् ॥ २२० ॥
शाहाबदीनपुर्यन्तर्नौसेतुं विपुलं नवम् ।
तद्धनेनादिशत्कर्तुं तत्पुण्यर्द्ध्यै महीपतिः ॥ २२१ ॥
अभूत्सैदान्वये जाता वल्लभा या महीपतेः ।
हयातखातुना राज्ञी प्रेमाश्वासविलासभूः ॥ २२२ ॥
पदार्थान्धोषभूषादिपरिवारसमन्वितान् ।
अनन्यरसिको राजा तस्यै सर्वं समार्पयत् ॥ २२३ ॥
तयैकयैव राजेन्दुः स सुन्दरगुणाश्रिया ।
अविन्दत्परमानन्दं मालत्येव मधुव्रतः ॥ २२४ ॥
विभवे सति भवति भवे कस्यचिद्देवेप्सितो लाभः ।
वर्षति मेघे कृषिकृत्कोपि मणिं मौक्तिकं लभते ॥ २२५ ॥
महाराज्ञ्यां महीभर्तुरस्यां राजसुतोजनि ।
यस्य मह्मदखानाख्यामकरोन्मौसुलोचिताम् ॥ २२६ ॥
ततः पूर्वाधिकप्रीते ताजिभट्टे स भूपतिः ।
स्वसुतं रक्षणायादात्सिन्धुरिन्दुमिवेश्वरे ॥ २२७ ॥

चतुःपञ्चाशवर्षेथ वैशाखे नरनायकः ।
पुत्रजन्मोत्सवानन्दमभजद्भयसुन्दरम् ॥ २२८ ॥
विदग्धचर्चरीपालनर्तकीनटगायनान् ।
उद्दिश्य त्यागरसिकैर्न कैर्वैश्रवणायितम् ॥ २२९ ॥
पट्टकौशेयवस्त्राप्ती राज्ये श्रीजैनभूपतेः ।
सामान्तसचिवादीनामासीत्सत्कारसिद्धये ॥ २३० ॥
तद्राज्ये विभवोदारव्यये सा प्राकृतालयात् ।
उत्सवे चर्चरीपालनटाद्यैः प्रापि तैरपि ॥ २३१ ॥
स्फीतराजश्रिया प्रीतो नृपतिर्नवयौवनः ।
आनीतगीतविन्द्वर्थः संगीतरसिकोभवत् ॥ २३२ ॥
संगीतज्ञज्यहांगीरमार्गेशाद्याः सुखोचिताः ।
तारका इव चन्द्राग्रे व्यरुचन्त सभासदः ॥ २३३ ॥
कृष्टचन्द्रावलीराजरूपाभिनयनैपुणात् ।
राज्ञे वरनटा नाट्यात्तद्दर्शनकुतूहलम् ॥ ३३४ ॥
प्रलम्बकृतकाश्मश्रुदन्तभ्रूविक्रियाञ्चलैः ।
तारानुसारितद्भावनाट्यहास्यकथाक्रमैः ॥ २३५ ॥
अनेकमुख्यवाद्यैश्च प्राणिभाषानुकारकैः ।
भण्डिमापण्डितो भण्डो मूर्तो हास्यरसोभवत् ॥ २३६ ॥
मल्लाहस्सननामापि पितुरप्यधिको गुणी ।
प्रथमं दशतन्त्रीकां मोदवीणामकारयत् ॥ २३७ ॥
भाषादिगीतसामग्रीं पारसीगीतकौशलम् ।
तुम्बवीणाधरःसोहं नृपाग्रतोप्यदर्शयम् ॥ २३८ ॥
गाथागीतप्रियो राजा स्वयं संस्कृतपद्यवित् ।
नादशंसामयं श्लोकं रागालस्येदमब्रवीत् ॥ २३९ ॥

शुष्का येन समुल्लसन्ति तरवो वश्या भवेयुर्मृगा
यत्रैवावतरन्ति दैवतगणा जल्पन्त्यदृष्टाअपि ।
यो दुःखे च सुखे च मूर्खविदुषोर्बालस्य वृद्धस्य वा
प्रायः प्रीतिकरो ममास्तु सततं श्रीनादनामा रसः ॥ २४० ॥

श्रव्यकण्ठे नृपो गीत्वा रागैकालसितो बहून् ।
रागान्समोच्चगीतांश्च साश्चर्यान्नस्तदाकरोत् ॥ २४१ ॥

अथ गायनवृन्दं तत्प्रवेशाय ममाग्रतः ।
गीताङ्गाधिपतेराज्ञामदान्मे नृपनायकः ॥ २४२ ॥

आनीय स्थापिताः सर्वे नामग्राहं निवेद्य च ।
ते ते वहावदीनाद्याः सर्वाद्या वृन्दनायकाः ॥ २४३ ॥

शिक्षाकारादयः पञ्च स्वप्रपञ्चातिचञ्चलाः ।
अमुञ्चन्पञ्चमव्याजात्पञ्चेषुरससंचयम् ॥ २४४ ॥

निर्दोषकण्ठसंजातमञ्जुलध्वनिरञ्जकाः ।
अधीतगीतवद्धात्तमात्तद्रवकमद्दकाः ॥ २४५ ॥

संगीतज्ञं नृपं तं ते श्रुत्वैवं तत्समुत्सुकाः ।
गीते शब्दगुणाः पञ्चदशसंख्यां स्थितिं व्यधुः ॥ २४६ ॥

केदारगौडगान्धारदेशभङ्गालमालवाः ।
कर्णाटगायना राज्ञो रागाश्चाप्यस्फुरन्पुरः ॥ २४७ ॥

मदनोद्दीपिता रात्रौ नव्यभाव्या दशोज्ज्वलाः ।
अशोभन्तानुगा राज्ञो लासिका दीपिका अपि ॥ २४८ ॥

रत्नमालादीपमालारूपमालाङ्किताभिधाः ।
अकुर्वल्लाँसिका लास्यं हावभावमनोहरम् ॥ २४९ ॥

झम्पाकम्पाकुलाग्रप्रसरसरसताधारसर्वाङ्गहार-
प्रारब्धाशास्यलास्योत्तरतरलसद्भावभावानुभावा ।

उत्कण्ठाकारिकण्ठोद्गतसततततस्फीतगीतप्रपञ्चा
पात्रीयं रम्यगात्री लसति सतिलका कीदृशी रत्नमाला ॥२५०॥

गुणिमदतृणदात्री प्रेक्षकानन्ददात्री
नवकरणविधात्री रूपलावण्यधात्री।
कलितललितगात्री शुद्धसंगीतगात्री
गुणगणमणिपात्री रूपमालेव पात्री ॥ २५१ ॥

यस्या मुखं हिमरुचिर्ननु यद्विधात्रा
संपूर्णसर्वमवशेषतयात्र मुक्तः।
आद्यानतामुपगतोस्य रुचायमास्ते
नासाग्रमौक्तिकमिषादमृतस्य विन्दुः ॥ २५२ ॥

आसां कर्णालिकप्रोतलम्बिमुक्ताफलच्छलात्।
मुखेन्दोर्निर्गता नूनं लावण्यामृतविन्दवः ॥ २५३ ॥

इत्यादि शंसां कुर्वाणो नृपतिर्नवयौवनः।
लीलामित्रैः समं ताभ्यो मद्यपात्रमगाहत ॥ २५४ ॥

तत्तत्कलापरिचये कविवाक्प्रपञ्चे
पञ्चेषुसंचयनिभासु वराङ्गनासु।
संगीतचर्वणाविधौ वसुधानुभोगे
धन्या नृपाः प्रतिदिनं व्यसनं भजन्ते ॥ २५५ ॥

श्रुत्वा दिगन्तरात्कीर्तिं राज्ञः कर्णामृतप्रदाम्।
गीतकाव्यकलाख्यातः पवारकदनोभ्यगात् ॥ २५६ ॥

गायतः सोनुगीतानि स्वकृतानि सभान्तरे।
तुष्टो महीपतिस्तस्मै व्यधात्कनकवर्षणम् ॥ २५७ ॥

प्रबन्धगीतचतुरः कदाचित्स नृपाग्रगः।
अगायत्सर्वलीलाख्यं प्रबन्धं देशभाषया ॥ २५८ ॥

अनभिज्ञतया राज्ञः पृष्टोहं तस्य लक्षणम् ।
तूर्णं भरतशास्त्रादेः सोदाहरणमब्रवम् ॥ २५९ ॥
पदपाठस्वरैस्तैस्तु तालरागैर्मनोहरम् ।
श्रुत्वा षडङ्गं तन्मत्तो राजाभूवुदिताशयः ॥ २६० ॥
तद्गीतस्याङ्गवैकल्यं ज्ञात्वा मामब्रवीदिदम् ।
गीतदर्पभृता वादं कुर्वनेन सभान्तरे ।
तथेत्युक्ते महाराजो द्वयोर्वादमकारयत् ॥ २६१ ॥
सभायां विहिते वादे गीतग्रन्थावलोकनात् ।
श्रुत्वा प्रबन्धान्मत्तः स साश्चर्यो गद्नोभवत् ॥ २६२ ॥
अहो काश्मीरिकोपीदृक्चतुरः सर्वशास्त्रवित् ।
इत्युक्त्वालिङ्ग्य मां मे त्वं गुरुरित्यब्रवीत्स्फुटम् ॥ २६३ ॥
कौशेयकपरीधानप्रसादानन्दिताशयम् ।
अकरोन्मां नृपस्तूर्णं तद्वादजयरञ्जितः ॥ २६४ ॥
घोषाः स्वोत्पत्तितोषा गतिगुणचतुराः पीवराङ्गास्तुरङ्गाः
स्फीतं यज्ञोपवीतं कनकमणिचितं द्रव्यमन्यच्च भव्यम् ।
वस्त्रोद्योताश्च पोता निजवपुषि धृता वस्त्रयोगाः सभोगा
राज्ञा श्रीहस्सनेन प्रसभमिह मयि श्रीवरे किं न दत्तम् ॥२६५॥
नयज्ञः शंसदीनोभून्मन्त्री वालावदीनकः ।
वीरः शाहाबदीनः स कुद्बदीनो विवेचकः ॥ २६६ ॥
श्रीशिकन्दरशाहोपि यवनेन्द्रमतप्रियः ।
आलिशाहोभवद्दाता श्रीमाज्जैनमहीपतिः ॥ २६७ ॥
सर्वशास्त्रप्रियः सर्वभाषाकाव्यविचक्षणः ।
राजा हैदरशाहः स तन्त्रीवाद्यविशारदः ॥ २६८ ॥
संगीतनिपुणः सोयं हस्सनेन्द्रो नरेश्वरः ।
एकैकगुणबाहुल्या प्रसिद्धा नृपमण्डली ॥ २६९ ॥

मण्डलेस्मिञ्शनैर्दर्षेत्यवोचन्नृपतेः सदा ।
श्रुत्वा राज्ञो महागीतं रागालप्तिमनोहरम् ।
श्रीजहाङ्गिरमार्गेशमुख्याः पादौ ववन्दिरे ॥ २७० ॥

देशेस्मिन्परवञ्चनात्प्रकुरुते लोको यदा संचयं
तत्तद्धर्मविपर्ययेण च भजन्स्वाचारनिःसारताम् ।
उत्पातैर्विविधैस्तदा समुदिताः स्वं पीडयन्ति प्रजा
दुर्वात्यानलदाहदुर्हिममहाशैत्यस्वभेदामयाः ॥ २७१ ॥

कदाचित्पौरवणिजो गोवधं नगरान्तरे ।
आजन्महिन्दुकाचाराश्चक्रुर्मौसुलवल्लभाः ॥ २७२ ॥
यत्र गावो हता भुक्तैस्तन्मांसैस्तैर्दुराशयैः ।
स विहारः स नगरः शुष्कैवाग्नौ स्वमाक्षिपत् ॥ २७३ ॥
अथ नैर्ऋतदिग्वातो जातोत्पातशताचितः ।
अकस्मादुदभूद्देशे प्रत्यूहापातदुःसहः ॥ २७४ ॥
आरम्भ एव कोप्येतं श्लोकं सूनुर्विपश्चितः ।
गणरात्रं समालोच्य दुर्वातं तं महाद्भुतम् ॥ २७५ ॥
खरवर्णेन मेघेन चन्द्रवर्णेन भानुना ।
नैर्ऋतेनातिवातेन हा प्रजे क्व गमिष्यसि ॥ २७६ ॥
वत्सरे पञ्चपञ्चाशे प्रवरेशपुरान्तरे ।
गोसीनिकापणोपान्तादकस्मादुदभूच्छिखी ॥ २७७ ॥
मारी तटैकपार्श्वस्था गुलिकावाटिकावधिः ।
क्षणान्नगरभूर्दाहाद्दग्धारण्यमिवाभवत् ॥ २७८ ॥
भूर्जत्वग्वायुनोद्धूता ज्वलन्ती सजवागता ।
बृहन्मसूदाच्छत्रान्तः पपातोत्पातदूतिका ॥ २७९ ॥
प्रसारिता चतुर्दिक्षु यत्र भित्तिः सुधासिता ।
श्रीशिकन्दरभूभर्तुर्मूर्ता कीर्तिरिवाभवत् ॥ २८० ॥

व्यधाद्यद्म्स्तर्जनता प्रणीता पुनरुत्थिता ।
त्वत्संगरो वरोत्तुङ्गतरङ्गावलिभङ्गिताम् ॥ २८१ ॥
मन्त्रपाठोद्यतं यत्र यवनानां कदम्बकम् ।
गुञ्जन्मधुपगर्भाब्जसहस्रमिव राजते ॥ २८२ ॥
चतुर्दिग्द्वारनिर्गच्छच्छुक्रवारागता जनाः ।
कुर्वन्ति भूगतम्लेच्छतदर्हानिर्गमभ्रमम् ॥ २८३ ॥
यन्मध्योच्चचतुःस्तम्भदम्भाद्धिर्धिदिदृक्षया ।
चतुष्पादिव तद्धर्मः प्राप्तो भात्युज्झितस्थितिः ॥ २८४ ॥
स्वर्णच्छत्रच्छलाद्यत्र मायाकर्णनकौतुकात् ।
कर्णे दातुमिवाभ्यर्णे भजन्भाति दिवाकरः ॥ २८५ ॥
तन्महासदनं व्याप्तगगनं रचनाद्भुतम् ।
म्लेच्छदर्शनराजार्थो रक्षा दुर्गश्रियं ददत् ॥ २८६ ॥
कुर्वन्कल्पाग्निनिर्दग्धविश्वज्वालावलिभ्रमम् ।
क्षणमात्रात्तदा यातं भित्तिमात्रावशेषताम् ॥ २८७ ॥
निमित्तजा विधा यस्यां म्लेच्छाः कुर्वन्ति भक्तितः ।
प्रधामहोत्सवाद्येषु गणशो मिलिताः सदा ॥ २८८ ॥
तत्तद्ग्रामस्थानीयपश्चावासादिभिर्गृहैः ।
सताण्डवचटत्कारं तैः खाण्डववनायितम् ॥ २८९ ॥
ज्वलद्भूर्जत्वचो याता वितस्तासलिलान्तरम् ।
दग्धा जलगता नावः शेकुः शमयितुं न याः ॥ २९० ॥
सुरपत्तनघोषेषु तदुपप्लववायुना ।
सहस्रसंख्या वेश्मौघास्तद्दिने जज्वलुर्न के ॥ २९१ ॥
उत्पातवातजातोर्मिमहापद्मसरोन्तरे ।
शतसंख्या दिने तस्मिन्किराताः प्रलयं ययुः ॥ २९२ ॥

वर्णाचारविपर्यासः समासः कुजवत्सरः ।
पुरश्रीविहितोद्वासे निवासक्षयकार्यभूत् ॥ २९३ ॥

अथ वा पूर्वकर्तॄणां जाते पुण्यक्षये सति ।
नवीनकर्तृनिर्माणकीर्त्यर्थं कुरुते विधिः ॥ २९४ ॥

निर्मिता तादृशी राज्ञा सा महासदनस्थितिः ।
पुण्यश्रीरिव या स्फीता विभाति नगरान्तरे ॥ २९५ ॥

अचिरात्सा पुरी दग्धा नवीकृतगृहा बभौ ।
भूपं तरुणमीक्ष्येव विहिता तरुणी प्रिया ॥ २९६ ॥

भूपालदुर्व्यसनजाः प्रभवन्ति दोषा
नाशाय यद्यपि हि साधुनि मण्डलेस्मिन् ।
अन्योन्यमन्त्रिवरवैरसमुत्थदोषो
राज्यं समस्तमपि नाशयति क्षणेन ॥ २९७ ॥

शक्तिस्फीतं समुदयलसत्सप्तधात्वङ्गभङ्ग
धत्ते नित्यं यदपि सुभगं सर्वकार्यक्षमत्वम् ।
दोषा वातादय इव महामन्त्रिणोन्योन्यदुष्टा
यत्रैते स्युर्गलति न चिरादेहवत्तत्र राज्यम् ॥ २९८ ॥

अत्रस्थैः सर्वदा रक्ष्यः स्वभेदः प्रभविष्णुभिः ।
चार्वाकाणामिवैषां हि भयं न परलोकतः ॥ २९९ ॥

ललितादित्यदेवोक्तामिति नीतिं विलङ्घ्य ये ।
मिथो वैरं प्रकुर्वन्ति ते नश्यन्तीह मन्त्रिणः ॥ ३०० ॥

मलाईसाकदर्यावखानादीनां विरोधतः ।
स्वभेदजर्जरं राज्यं दृष्टं श्रीजैनभूपतेः ॥ ३०१ ॥

तदाप्रभृति तेनैव दृष्टे नाशेत्र मण्डले ।
मन्त्रिणो नैव कस्यापि मत्सरो विरमत्ययम् ॥ ३०२ ॥

अहो द्वेषपिशाचोयं रूढो राजसभाशये ।
केनापि मन्त्रिणा नैव जीयते सर्वनाशकः ॥ ३०३ ॥
रोगो हतप्रयोगो व्यालो वा धृतमहाविषज्वालः ।
नाग्निस्तादृग्भयकृत्प्रकृतिविरोधो यथा देशे ॥ ३०४ ॥
अत्रान्तरेह्लादायुक्तो युक्तोपि नयसंपदा ।
अधीर इव नाशाय नेयबुद्धित्वमग्रहीत् ॥ ३०५ ॥
एकदा पितरं पुत्रा विजने नौरुजादयः ।
इत्यूचुर्दूषणां ताजिभट्टीयां विभवासहाः ॥ ३०६ ॥
निग्रहानुग्रहैकाग्राः समग्रे मन्त्रिमण्डले ।
उग्रो भट्टः प्रजायासैर्देशनाशाय वर्धितः ॥ ३०७ ॥
तत्रापि दुग्धपितृता राजसूनोर्नृपास्पदे ।
अग्रे ययौ समायोगः सोयं दाहाय दुःसहः ॥ ३०८ ॥
राज्ञी राजावदच्चास्मै सेनानीरयमेव हि ।
प्रबलं बाधते ह्यस्मान्यदि नायं प्रणाश्यते ॥ ३०९ ॥
इत्याकर्ण्य सुतैरुक्तवैगुण्यादवलोक्य च ।
पुत्रीकृतोपि मल्लीकस्ताजिभट्टे व्यरज्यत ॥ ३१० ॥
राज्याङ्गानि समस्तानि योरक्षत्समया दृशा ।
प्राक्पुण्यसंक्षयात्सोपि शनैरासीत्स्खलन्मतिः ॥ ३११ ॥
स्वार्थं परित्यज्य विभोर्हितं ये
कुर्वन्ति तत्कार्यकृतावधानाः ।
विनाशकाले समुपस्थिते ते
भवन्त्यकस्माद्विपरीतचेष्टाः ॥ ३१२ ॥
प्रभविष्णुरयं राज्ञो दूरीकार्यः कया धिया ।
इति चिन्ताकुलस्तांस्तानुपायान्मल्लिकोकरोत् ।
अथैकदाब्रवीद्राज्ञः सभायां मल्लिकः क्रुधा ॥ ३१३ ॥

राज्येनात्तेन किं राजन्नाक्रान्ता बाह्यभूः परैः।
चिन्ता कस्यापि नैवास्ति यावत्सर्वं प्रणश्यति ॥ ३१४ ॥
वरं स्वयमहं यामि तदाज्ञा दीयतां विभो।
इति श्रुत्वाब्रवीत्ताजिभट्टस्तं साहसोत्सुकः ॥ ३१५ ॥
यात्रायै दीयतां राज्ञः सेनानीर्मत्परोधिकः।
तच्छ्रुत्वा सर्वसामग्रीं दत्त्वा मल्लिकचोदितः ॥ ३१६ ॥
राजा तं कटकोपेतं बाह्यदेशं व्यसर्जयत्।
भीत्या प्रीत्या च नीत्या च जग्मुस्तमनु सेवकाः ॥ ३१७ ॥
मधुपा इव गर्जन्तो यातुं मधुकरेश्वरम्।
राजप्रक्रियया रम्यं दृष्ट्वा तं व्ययशालिनम् ॥ ३१८ ॥
नृपा राजपुरीयाद्या बभूवुर्विस्मिताशयाः।
अन्येप्यज्यभदेवाद्याः समस्ता भद्रमण्डले ॥ ३१९ ॥
तत्तारखानमुत्सृज्य तुष्टास्तमुपतस्थिरे।
तदुपोद्वलिता मद्राः क्षुद्रा विद्रावितारयः ॥ ३२० ॥
देशं तत्तारखानीयं सोपद्रवमचीकरत्।
दहञ्शृङ्गारकोटादौ मसूदां खाननिर्मिताम् ॥ ३२१ ॥
सामान्यकुलजोप्येष निःसारोनुमितो जनैः।
अचिन्त्यकृतकार्यासीत्स्वामिस्नेहे प्रभावतः ॥ ३२२ ॥
पुरपत्तनघोषादीननयत्स्मृतिशेषताम्।
प्रतापस्तस्य तत्कालं तीक्ष्णांशोरिव दुःसहः ॥ ३२३ ॥
तत्तड्डिल्यादिदेशस्थजनोलूकभयं व्यधात्।
करदीकृत्य सामन्तांस्तत्तत्साहसनिष्ठुरः ॥ ३२४ ॥
स्वदेशं प्रत्यगात्तूर्णं पूर्णस्तुरगसंपदा।
स्वामिकार्यवशान्मन्त्री पुत्रं पश्यति शत्रुवत् ॥ ३२५ ॥

शत्रुमप्यातिवैराहें पुत्रवत्परिरक्षति ।
इत्यादिनीतिमुल्लङ्घ्य मल्लिको दैवमोहितः ॥ ३२६ ॥
तदुत्कर्षासहस्तस्य दर्पनाशोद्यतोभवत् ।
सबलो बाधते सर्वान्वाल्लभ्यादिति शङ्कितः ॥ ३२७ ॥
मल्लिकस्तं प्रति क्रुद्धो भूपं द्वेषमजिग्रहत् ।
अत्रान्तरे सुतो राज्ञः कनीयान्होस्सनाभिधः ॥ ३२८ ॥
पयोदानाय मल्लेकनौरुजाय समर्पितः ।
तेन श्रुतेन तद्रूपविधेयत्वविसूत्रितः ॥ ३२९ ॥
आगच्छन्कटके भट्टो ययौ मन्दप्रतापताम् ।
तस्य सेनागतस्याथ नेयबुद्धिर्नृपेश्वरः ॥ ३३० ॥
सत्कारं चोदितं तस्मै नाकरोद्विरसीकृतः ।
अथ तस्यापकारार्थे मल्लिकः स्वयमक्षमः ॥ ३३१ ॥
दध्रे गतानां सैदानां पुनरागमने मतिम् ।
तदीयास्तनया राजंस्तव पुत्रवती प्रिया ॥ ३३२ ॥
रक्ष्यः श्वसुरपक्षः स कथं नानीयते त्वया ।
इत्यादिप्रेरणाद्राज्ञो राजाराधनतत्परः ॥ ३३३ ॥
सोपाधीन्व्यसृजल्लेखान्सैदाण्ढिल्लीशमण्डले ।
तस्यैवेति प्रभवति जनो दुर्नयैर्दूषणाद्यै-
रेतद्बुद्ध्या नयति न वयः स्वं कथं गाढमूढः ।
सर्वां पृथ्वीं जयति न कथं तन्त्रमन्त्रोर्जितोसा-
वित्याशङ्क्यो भवति पुरुषो भाग्यभाग्यावदास्ते ॥ ३३४ ॥
अपकृत्य पुनः सैदान्यदानयति मल्लिकः ।
तेन स्यात्सर्वनाशोस्येत्यवदत्तीक्ष्णधीर्जनः ॥ ३३५ ॥
सैदानयनवृत्तान्तं बुद्ध्वा श्रीफिर्यडामरः ।
गृहं गत्वाब्रवीद्राज्ञा युक्तमित्यब्रवीद्वचः ॥ ३३६ ॥

ताजिभट्टो विधेयोयं भृत्यवद्वर्तते त्वयि ।
तदेतं रक्ष युक्त्यास्य विधाय मदशातनम् ॥ ३३७ ॥

मा प्रवेशय सैदांस्त्वं दुर्धरान्देशकण्टकान् ।
तुरुष्कपुष्कलाश्वासान्यत्नान्निष्काशितानपि ॥ ३३८ ॥

एकनाशार्थमिच्छा चेत्सर्वनाशस्तदागतेः ।
पोतैकहेतोश्चैत्यस्य ज्वलनं किं समर्प्यते ॥ ३३९ ॥

नूनं सपुत्रभृत्यस्य नाशो न भविता चिरात् ।
यत्सैदानयने बुद्धिर्जाता भाग्यविपर्ययात् ॥ ३४० ॥

कृतापकारान्सैदांस्तानानिनीषुर्भवान्यदि ।
विषमुष्टिं क्षिप स्थाल्यां साज्ञायां तत्स्वमृत्यवे ॥ ३४१ ॥

मद्वचो गृह्यते सत्यं ज्ञंमन्येन त्वया न तत् ।
विपत्तौ स्मरणीयं स्यान्मयि लोकान्तरं गते ॥ ३४२ ॥

श्रुत्वेति मल्लिकः प्राह किं कुर्वन्ति मयि स्थिते ।
एकदा ज्ञातसामर्थ्याच्चाटुकारा भवन्ति नः ॥ ३४३ ॥

तथेत्युक्त्वा गते तस्मिञ्ज्ञंमन्यत्वाद्दृणाहते ।
सैदानयनसंकल्पान्न मनाग्विरराम सः ॥ ३४४ ॥

ज्ञातायतित्वादुपदिष्टमिष्टै-
गृह्णाति वाक्यं न हि नष्टचेष्टः ।
कष्टे निविष्टः स हि वक्ति शोका-
द्धिड्मामतिष्टं न हितोपदेशे ॥ ३४५ ॥

ततो लेखान्समालोच्य तस्योत्कण्ठितमानसाः ।
हंसा इवाययुः सैदाः कृतपक्षपरिग्रहाः ॥ ३४६ ॥

अथ प्रथममेवेह समीयाहस्सनोग्रणीः ।
अग्र्यासनौरुजायुक्तयुक्तो भूपाग्रमाययौ ॥ ३४७ ॥

विहितान्योन्यकं शंसन्मल्लिकोस्मै प्रसन्नधीः ।
खोयाश्रमं प्रदेशं तत्स्वकीयं स समार्पयत् ॥ ३४८ ॥
यत्सैदहस्सनेनापि सिद्धादेशाधिकारिता ।
तस्य तेनैव नाशार्थं सिद्धा देशाधिकारिता ॥ ३४९ ॥
क्रमात्समागतैः सैदैराक्रान्ते मण्डले बलैः ।
आभ्यन्तराश्च बाह्याश्च काश्मीरास्तत्रसुर्जनाः ॥ ३५० ॥
सैदांस्तरङ्गितान्दृष्ट्वा तुरङ्गाद्भूपतेर्मतात् ।
नृपो जायाविधेयत्वात्तद्विधेयक्रमागतः ।
सपुत्रः सोह्मदायुक्तो बभूवानुशयाकुलः ॥ ३५१ ॥
पश्चाद्भवेद्या मनुजेषु बुद्धिः कार्ये कृते सा प्रथमं यदि स्यात् ।
मित्रार्पितश्रीः परिभूतशत्रुर्न को भवेत्संततसौख्यभागी॥३५२॥
अथ सैदाः स्वतन्त्रास्ते कलत्रहरणेच्छया ।
बन्धनं ताजिभट्टाय कर्तुमैच्छंश्छलैषिणः ॥ ३५३ ॥
एकदानिष्टमाकर्ण्य स्वात्मनः सैदचिन्तितम् ।
मल्लेकसदनं प्रायात्ताजिभट्टो भयाकुलः ॥ ३५४ ॥
सैदविस्फूर्जितं दृष्ट्वा साशङ्कः सोभवद्यदा ।
स फिर्यडामरो वृद्धस्तत्कालं प्रमयं ययौ ॥ ३५५ ॥
प्रतिक्रियादिसुकृतैरिह वा परदुर्लभम् ।
य एकः सकलश्लाघ्यामलब्ध्वान्त्यक्षणे क्रियाम् ॥ ३५६ ॥
तच्छ्रुत्वा नृपतिस्तूर्णं क्रुद्धः सैदप्रतारितः ।
रोद्धुं तद्यसृजज्जोनराजानकमुखान्भटान् ॥ ३५७ ॥
स्वगृहे स्थाप्यतां बद्धो हृतस्वो दत्तरक्षकः ।
इत्युक्तो मल्लिकस्ताजिभट्टं तेभ्यः समार्पयत् ॥ ३५८ ॥
तथैव स्थापितो बद्धः पुण्यशेषतयात्मनः ।
कालं वृत्त्या कृताप्यायः सकुटुम्बोत्यवाहयत् ॥ ३५९ ॥

भूर्यर्थव्ययपुण्यः स बाह्योपि स्वगृहान्तरे ।
सकुटुम्बः सुखं तस्थौ मराल इव मानसे ॥ ३६० ॥
विभवे दानभोगं यः करोति सुकृतेच्छया ।
एतद्भ्रष्टः समाप्नोति भूयस्तत्ताजिभट्टवत् ॥ ३६१ ॥
एवं मल्लेकाह्लदेन परोद्रेकासहिष्णुना ।
ध्वस्तप्राया व्यधीयन्त सर्वे ते प्रभविष्णवः ॥ ३६२ ॥
कृतापकारिसैदेभ्यो भागिनेयप्रणाशनात् ।
ज्यहाङ्गिरोपि मार्गेशो मल्लिके शङ्कितोभवत् ॥ ३६३ ॥
सर्वाधिकारसामग्री स्वपक्षस्य समर्पिता ।
प्रतीहारादिवीरेन्द्राः स्वार्थबुद्ध्या विनाशिताः ॥ ३६४ ॥
इत्यादिदूषणे राजा मल्लिके विरसोभवत् ।
रक्षेत्युक्त्वा स्वमात्मानं कदाचित्कृतदर्शनः ॥ ३६५ ॥
नैकत्रावस्थितिस्तिष्ठन्स्वराष्ट्रान्तः स्थितिं व्यधात् ।
अथागात्कुसुमक्रीडां कर्तुं सैदसमन्वितः ॥ ३६६ ॥
भवनोपवनं राजा शक्रश्चैत्ररथं यथा ।
विधाय लीलां पुष्पाणां नौकायातो महीपतिः ॥ ३६७ ॥
मार्गेशनौरुजायुक्तः पानलीलां व्यगाहत ।
सर्वे परस्परक्षीवास्तत्तद्वाचानुबन्धिनः ।
ते वृषणय इवान्योन्यं चक्रुर्वाक्छरताडनम् ॥ ३६८ ॥
क्षोभे प्रवृद्धे क्रुद्धोथ त्यक्तमस्तकवेष्टनः ।
अगात्कर्तुमुपालम्भं नृपो मल्लिकमन्दिरम् ॥ ३६९ ॥
प्रसादितोपि स प्राप राजधानीं क्रुधान्वितः ।
पुत्रदुर्नयजः शोको मल्लिकस्य च मानसम् ॥ ३७० ॥
अन्येद्युरहितांस्तस्य राजा विरलमानसः ।
रक्ष्यो नायुक्तपक्षो मे युक्तमित्यब्रवीद्रहः ॥ ३७१ ॥

अवश्यमेव छिद्रं तत्समासाद्य विरोधिनः
अपकाराय संनद्धा देहे दोषा इवाभवन् ॥ ३७२ ॥
राज्ये यूसुबखानं चेत्कुर्युः किं क्रियते त्वया ।
पश्यो नीत्वा तदन्यस्मै देह्येनं रक्षणाय भोः ॥ ३७३ ॥
तथेत्युक्त्वा नृपोन्येद्युर्जोनराजानके द्रुतम् ।
विन्यस्य रक्षणे युक्त्या मल्लिकात्खानमग्रहीत् ॥ ३७४ ॥
पुत्रं विन्यस्य भूपाग्रे तद्दिने स्वगृहस्थितः ।
अपकर्तास्मि शत्रूणां प्रातरित्यब्रवीत्प्रियाम् ॥ ३७५ ॥
अत्रान्तरे मार्गपतिर्नृपाहूतो बलान्वितः ।
स्वराष्ट्रात्साहसोद्युक्तो नगरे तूर्णमाययौ ॥ ३७६ ॥
प्रातः श्रुत्वाथ मल्लिकः सबलोगान्नृपान्तिकम् ।
रुषा निवृत्तो रुद्धोपि चिल्लया दक्षिणस्थया ॥ ३७७ ॥
पादाभ्यां ताडयन्वक्षो गच्छतोस्य तुरङ्गमः ।
भविष्यत्स्वामिविरहाच्छुचेवाश्रुमुखोभवत् ॥ ३७८ ॥
तत्कालोदितसूर्यार्चिःसंक्रान्तिज्वलितायुधः ।
नृपाज्ञप्तोपि मार्गेशः ससैन्योविशदङ्गनम् ॥ ३७९ ॥
अन्योन्यस्पर्धया तत्र द्वयोः प्रविशतोस्तदा ।
संनद्धयो राजधानी ययौ संभ्रमलोलताम् ॥ ३८० ॥
सशस्त्रोयं प्रविष्टः किमित्यायुक्तः स भाङ्गिलम् ।
अदापयज्ज्यंसराय मार्गेशाय नृपः क्रुधा ॥ ३८१ ॥
तावन्निर्गत्य भीतेन राज्ञा स प्रेरितस्ततः ।
पुरान्तर्ग्रन्थनां कृत्वा ससैदः पुनराययौ ॥ ३८२ ॥
निर्मुच्य बन्धनात्ताजिभट्टं राजानकान्वितः ।
राजधान्यङ्गनास्कन्दं ददौ जिष्णुर्जहाङ्गिरः ॥ ३८३ ॥

प्रेरितास्ताजिभट्टेन तद्भटाः समरोद्यताः।
पश्चिमद्वारधानीं तां राजधान्यामदाहयत् ॥ ३८४ ॥
सोऽग्निर्हस्सनराजानकावासान्तं क्षणान्तरात्।
सोच्चागारां गृहश्रेणीं दग्धारण्यमिवाकरोत् ॥ ३८५ ॥
इन्द्रवासोपमा वेश्मरचना ज्वलिता श्रुता।
दूरस्थितानामप्यन्तः संतोषमुदपादयत् ॥ ३८६ ॥
तद्धूमस्तोमसंघट्टज्वालाजालगतोष्मणा।
सर्वेन्तःस्थाः कटाहान्तर्जीवन्मत्स्योपमां दधुः ॥ ३८७ ॥
अङ्गनेऽग्निं समालोक्य ज्वलन्तं राजसद्मनि।
सभीतिर्नृपतिर्भीतो विह्वलः समपद्यत ॥ ३८८ ॥
उष्णायमानमार्गेषु स्फुरन्तोपि युयुत्सवः।
न केपि शेकुस्तान्योद्धुं तद्भाग्यैर्यन्त्रिता इव ॥ ३८९ ॥
स्वभृत्यांश्चलितान्दृष्ट्वा पुत्रोत्सेवावशेषितः।
बभूव मल्लिकस्तत्र किंकर्तव्यतयाकुलः ॥ ३९० ॥
पुत्राः कुर्वन्तु मा युद्धं राज्यं नश्यति भूपतेः।
अयं राजास्य देशस्तु रक्षितो दश वत्सरान् ॥ ३९१ ॥
तत्कथं नाश्यते युद्धादस्मिन्विषमविग्रहे।
तत्रापि ज्येष्ठः पुत्रो मे तटस्थोरिषु मध्यगः ॥ ३९२ ॥
अनिष्टं नौरुजाद्या मे लभन्तेस्माद्रणक्षणे।
वरं ममैव नाशोस्तु नाकीर्तिं वार्धके सहे ॥ ३९३ ॥
इति ध्यात्वाब्रवीत्पुत्रान्न योद्धव्यमिहासत।
इत्युक्त्वा गलितोत्साहो नृपं शरणमाययौ ॥ ३९४ ॥
मण्डपे राजधान्यां स राजा विन्यस्य रक्षिणः।
स्नेहादरक्षदायुक्तान्पूर्वसेवामनुस्मरन् ॥ ३९५ ॥

आयुक्तनत्थकाद्यास्ते ज्ञात्वा भूपं तदाश्रितम् ।
युद्धाशक्ताश्च निर्गत्य भुट्टदेशान्तरं ययुः ॥ ३९६ ॥

अथोत्तरदिशा द्वारधान्या मान्या जयोद्यताः ।
ज्यहाङ्गिराद्या गर्जन्तः प्राविशन्त नृपाङ्गनम् ॥ ३९७ ॥

रणदुन्दुभिनिःस्वानप्रतिश्रुत्यारवच्छलात् ।
अहसद्राजधानीव तुष्टा तत्साहसक्रमात् ॥ ३९८ ॥

राजदर्शनतुष्टानामुत्कृष्टानां जयार्जनात् ।
प्रापुः प्रसादं तत्कालं मनांसि च वपूंषि च ॥ ३९९ ॥

प्रातः सपुत्रं मल्लिकं तत्तत्सेवकसंयुतम् ।
क्रुद्धैस्तैश्चोदितो राजा कारागारान्तरेक्षिपत् ॥ ४०० ॥

आयाता युद्धसदनाद्भीतेवातिव्ययादिभिः ।
अकरोद्राजलक्ष्मीः सा स्वगृहे सुखसुप्तिकाम् ॥ ४०१ ॥

तेषां राजविरुद्धानां दासकायस्थपीडनात् ।
संचितं रौप्यकुप्यादि सर्वं तद्राजसादगात् ॥ ४०२ ॥

यन्मन्त्रात्सभयः स जैननृपतिः श्रीहाजिसाहोभव-
द्यन्नीत्या दशवत्सरीं गतभयः पुत्रोस्य राज्यं व्यधात् ।
यातास्ते स्मृतिशेषतां यदमता बह्रामखानादयः
सोपि व्याकुलतामगाद्रिपुभये धिग्वैभवं स्वामिनाम् ॥४०३॥

आतङ्कपङ्ककलुषाः प्रभवन्ति येर्थाः
सन्मार्गविघ्नकरणा धृतजाड्यदोषाः ।
तत्तद्दरिद्रजनपीडनहेतुभूता-
स्तिष्ठन्ति ते न सुचिरं हिमपूरतुल्याः ॥ ४०४ ॥

तद्भृत्यैः फेरभट्टाद्यैरित्यादिजनपीडया ।
यदानीय धनं दत्तं तत्सर्वं राजसादगात् ॥ ४०५ ॥

बहिर्देशात्समानीतांस्तुरङ्गांस्तान्मनोहरान्।
स्वांशुकाच्छादितांश्चापि निक्षेपमिव दत्तवान्॥ ४०६॥

भूपालवन्महेच्छत्वात्स्वजन्मदिवसादिषु।
यद्दत्तं यच्च भुक्तं स्वं तदेवास्याभवद्धनम्॥ ४०७॥

हे मर्त्या नृपविभवाप्तभूरिवित्ता-
श्चित्तात्तौ कुरुत यथार्थदानभोगौ।
संसारे जलधितरङ्गभङ्गुरेस्मि-
न्सामग्री न पुनरियं सदैव लभ्या॥ ४०८॥

राज्ञः प्रियोस्मि विभवप्रथितप्रभावो
हे सेवकास्त्यजत मानमिमं स्वनिष्ठम्।
गन्धर्वनिर्मितपुरे च कुसुम्भरागे
वेश्यारसे नरपतौ च कुतः स्थिराज्ञा॥ ४०९॥

प्राप्ता पूर्णा सपदि पदवी शत्रुवर्गो जितो यः
कोशोशेषो मम सदनगो भृत्यवर्गः ससर्गः।
इत्थं यावत्कलयति नरो वैभवोत्सिक्तचित्त-
स्तावत्सर्वं क्षपयति विधिः स्वप्नवत्तद्विरुद्धः॥ ४१०॥

एकदा जुगभट्टस्तं बन्धने प्रष्टुमभ्यगात्।
अन्यत्किमस्ति ते स्वर्णं तूर्णं राज्ये समर्प्यताम्॥ ४११॥

क्रुद्धस्तमब्रवीद्द्रव्यकोटिसंख्यं हृतं मम।
एतावतापि नो तृप्तिः प्रभोर्लुब्धस्य विद्यते॥ ४१२॥

किं ब्रूमो राज्यरक्षार्थं स्वपक्षो नाशितोखिलः।
शक्तेनापि न युद्धाय सोढुं तत्तुमुलेन्तरे॥ ४१३॥

कान्दिशीकाः समानीय सैदाः संवर्धिता मया।
द्रोग्धारस्तेपि मे जाताः कृतघ्नेस्मिन्महीपतौ॥ ४१४॥

सर्वं मद्योजितं राज्यमन्धं तावत्करोत्वसौ ।
पुनश्चेद्भुज्यतां राज्यं मन्नाशान्मुदितस्तु सः ॥ ४१५ ॥
दशवत्सरपर्यन्ते राज्यतन्त्रनियन्त्रणा ।
मदीयासीद्भवेदग्रे यदीदृश्यपि तद्विभुः ॥ ४१६ ॥
तुष्यत्वस्मत्प्रणाशेन मयि लोकान्तरं गते ।
इत्याद्युक्त्वा नृपाग्रे स स्वविज्ञप्तिं व्यसर्जयत् ॥ ४१७ ॥
धिङ्मां येन गृहीतं न वचनं दीर्घदर्शिनः ।
श्रीफिर्यडामरेशस्य निनिन्दात्मानमन्वहम् ॥ ४१८ ॥
यद्यहं सुविशुद्धोस्मि तन्मद्द्रोहकरा अमी ।
मार्गेशताजिभट्टश्च लभन्त्वल्पदिनैः फलम् ॥ ४१९ ॥
इत्यादि दुःखदग्धः स बन्धनस्थो यदब्रवीत् ।
अचिरात्तत्फलं दृष्ट्वा साश्चर्यो भविता जनः ॥ ४२० ॥
इत्थं निर्द्रोहवृत्तेस्मिन्सपुत्रे मल्लिकाह्मदे ।
नाशितेन्ये व्यजृम्भन्त खलप्राया नृपास्पदे ॥ ४२१ ॥
पाजभट्टादयो लुब्धाः सैदानामधिकारिणः ।
प्रमेयान्पीडयामासुर्दुष्टा देहमिवामयाः ॥ ४२२ ॥
आनन्दपुष्पदीन्नागखण्डप्रात्याादिनामभिः ।
सैदाधिकारिणश्चक्रुः प्रजायासैर्धनार्जनम् ॥ ४२३ ॥
श्रीजहाङ्गिरमार्गेशनोसराजानकादयः ।
मधाविव द्रुमाश्चित्रपत्रास्ते शिश्रियुः श्रियः ॥ ४२४ ॥
मल्लीकपदवीं मल्लां श्रीमीयाहस्सनोभजत् ।
नाग्रामग्रामराष्ट्रादि तदीयं तद्वदग्रहीत् ॥ ४२५ ॥
सभृत्यपुत्रवर्गेभ्यः प्रमेयान्विभजन्नवान् ।
स मीयामह्मदायार्धधनराष्ट्रं समार्पयत् ॥ ४२६ ॥

स्वायत्तीकृतभूपास्ते सैदा जयविशृङ्खलाः ।
दूतान्विसृज्य चतुरमानिन्युः सैदनासिरम् ॥ ४२७ ॥
प्राप्ते पञ्चालदेशाग्रं तस्मिञ्शूरपुराध्वना ।
ज्वरस्तद्धृदयं पूर्वं पश्चात्स पुरमाविशत् ॥ ४२८ ॥
पौत्रीजामातृसंबन्धिबान्धवाः सर्वमन्त्रिणः ।
अपुनःसङ्गमायेव सर्वेषां दर्शनं दधौ ॥ ४२९ ॥
तदर्थमिव संप्राप्तो मृतकल्पो दिनद्वयम् ।
अतिवाह्य ज्वराक्रान्तः स्वगृहे पञ्चतां ययौ ॥ ४३० ॥
मल्लिको बन्धनस्थः सन्त्रस्तः पुत्रप्रवासनात् ।
तत्तच्छोकामयग्रस्तः सोप्यस्वस्थो व्यपद्यत ॥ ४३१ ॥
बद्धस्यापि मृतिं तस्य श्रुत्वा मन्त्रिशिरोमणेः ।
देशे सरुदिताक्रन्दं शुशोच सकलो जनः ॥ ४३२ ॥

सत्कार्यभाजां महतां वियोगा-
द्भवन्ति नीचाः पदवीषु योग्याः ।
प्रकाशकेस्मिन्द्युमणौ प्रयाते
भवन्ति दीपाः शरणं प्रजानाम् ॥ ४३३ ॥

दुहितृभाग्यसौभाग्यसंप्राप्तविभवोर्जिताः ।
सैदाः काश्मीरिकान्सर्वान्न तृणायाप्यजीगणन् ॥ ४३४ ॥
याभूत्सैदमुखादाशा निर्यान्ती स्वार्थलिप्सया ।
राज्ञस्तदर्थनिष्ठस्य प्रतिश्रुतेव साभवत् ॥ ४३५ ॥
सैदेषु द्वैधनिष्ठेषु क्षान्तिशीले महीपतौ ।
प्रबलासु च नारीषु कोप्यजृम्भत विप्लवः ॥ ४३६ ॥
उत्कोचग्रहणं धर्मः प्रजापीडा च कौशलम् ।
स्त्रीषु च व्यसनं सौख्यममन्यन्ताधिकारिणः ॥ ४३७ ॥

प्रातिबन्धिकनिर्वृत्त्या स्वाच्छन्द्यप्राप्तिदर्पितः ।
स मीयाहस्सनः सर्वतन्त्रेभ्यो यन्त्रणां व्यधात् ॥ ४३८ ॥
प्रवर्धमानो राज्ञः स शनैराक्रान्तमण्डलः ।
ग्रहाधिपत्यं सर्वेषां राहुश्छायामिवाकरोत् ॥ ४३९ ॥
अथ सूक्ष्मबृहद्भुट्टदेशान्सैदा जिगीषया ।
श्रीजहाङ्गिरनासेरौ यात्रायै द्वौ व्यसर्जयन् ॥ ४४० ॥
उभावेकत्र गच्छावो यद्यावां कर्म सेत्स्यति ।
इति मार्गपतेर्वाक्यं सैदौ नैवान्वतिष्ठताम् ॥ ४४१ ॥
तयोर्देशं विजित्यैकः सयशाः प्राविशत्पुरम् ।
अन्यो विशङ्कितो बद्धो युक्त्यात्मानमरक्षत ॥ ४४२ ॥
निपत्य पश्चाद्भुट्टैर्यत्सेनायाः कदनं कृतम् ।
कालापेक्षानुरोधेन न मनाग्वर्णनं कृतम् ॥ ४४३ ॥
बाहदुरागादयस्तस्य सेवका वृद्धभूभुजः ।
केचिज्ज्युल्चाणभुट्टाजिवह्नौ शलभतां गताः ॥ ४४४ ॥
पूर्वापकारस्मरणात्सैदास्ते रन्ध्रलब्धिताः ।
नोस्सराजानकं रुद्धदर्शनं तं न्यवारयन् ॥ ४४५ ॥
तेभ्यः स्वानिष्टमाशङ्क्य निजरक्षणदक्षधीः ।
युक्त्या तद्दर्शनो राज्ञो राष्ट्रं मार्गपतिर्ययौ ॥ ४४६ ॥
ततः सैदेषु नष्टेषु प्रजानाशनकारिषु ।
आशङ्क्यानिष्टमात्मीयं युक्त्या राजाग्रमाययौ ॥ ४४७ ॥
एकदा रहसि क्ष्मापमब्रवीत्स जहाङ्गिरः ।
राजन्सैदा यदानीता अमी निष्कासिता अपि ॥ ४४८ ॥
सोयं निष्कण्टके देशो स्वस्वानर्थः स्वयं कृतः ।
यथैव राज्ययोग्यस्त्वं पौत्रः श्रीजैनभूपतेः ॥ ४४९ ॥

दौहित्रोपि तथैवास्य प्राप्तो मीयामहम्मदः ।
सैदास्ते सर्वदा शङ्क्यास्तुरुष्काश्वस्तमानसाः ॥ ४५० ॥
गृध्रा इवामिषे राज्ये ये लुब्धाः सन्ति संततम् ।
न युक्तैकप्रियासक्तिर्बहुभावस्य ते विभो ॥ ४५१ ॥
एकवल्लीरतो भृङ्गः सततं केन शस्यते ।
यदि जायाविधेयत्वं न स्यात्तव महीपते ॥ ४५२ ॥
सर्वं सिध्यति कार्यं तत्स्त्रीजितो मा भव प्रभो ।
मया त्वद्राज्यरक्षार्थं स्वरक्षार्थं च गम्यते ॥ ४५३ ॥
बहिर्देशो ह्यतः स्वात्मा रक्षणीयो यथा तथा ।
इति श्रुत्वा तथेत्युक्त्वा राजा रात्रौ प्रियान्तिके ॥ ४५४ ॥
तदुक्तमब्रवीत्सर्वं स्नेहमोहवशीकृतः ।
तेन मार्गपतेः क्रुद्धा भोगिनीव भयावहा ॥ ४५५ ॥
अनिष्टं चिन्तयन्त्यासीत्पितृपक्षमतादृता ।
पुरुषानवधीर्य यत्र नारी
प्रभवत्येव जितप्रिया स्वतन्त्रा ।
कुपितेव तदीक्षणाद्विशिष्टा
न चिरं तिष्ठति तत्र राज्यलक्ष्मीः ॥ ४५६ ॥
अमुञ्चद्वल्लभापार्श्वे तत्पक्षानुग्रहग्रहः ।
मल्लिकाह्लदवद्राज्यं तदायत्तं ततोकरोत् ॥ ४५७ ॥
सैदेभ्योनिष्टमाशङ्क्य त्रस्तो राज्ञ्या विरुद्धया ।
कार्कोटद्रङ्गमार्गेण मार्गेशः सबलो ययौ ॥ ४५८ ॥
सर्वां कुटुम्बसामग्रीं भाङ्गिलान्तरतो नयन् ।
गच्छन्दुर्गममार्गेण न स धैर्याद्व्ययुज्यत ॥ ४५९ ॥
तद्राज्यासिन्धुर्विपुलः समृद्ध्या
व्यलक्षि यः संभृतवाहिनीकः ।

परस्परामात्यविरोधवात्या-
विक्षोभितोभूत्स विकीर्णरत्नः ॥ ४६० ॥

साम्ना दैन्यमुदारदानविधिना वित्तप्रकर्षक्रिया-
भेदात्पैशुनकर्म मर्मदलनं युद्धेन नाशो विशाम् ।
इत्यालोच्य विरोधिषु प्रतिदिनेवर्धत्सुशक्के प्रभौ
देशत्यागमुपायमेकमुचितं कोप्युत्तमो गाहते ॥ ४६१ ॥

अयुक्तपक्षनाशेन पश्चात्तापाहतो नृपः ।
मार्गपत्यादिनाशेन क्षते क्षारमिवान्वभूत् ॥ ४६२ ॥

मार्गेशाद्यैर्विना राजा सर्वसैदान्वितोपि सन् ।
स्वात्मानं गणयामास यूथभ्रष्टमिव द्विपम् ॥ ४६३ ॥

मार्गपत्यन्वये जाताः प्रतीहारान्वये च ये ।
ठक्कुरान्वयजाः कोशाध्यक्षजा अपरे च ये ॥ ४६४ ॥

स्वस्वपक्षोर्जिताः पूर्वे येभवन्विजयोर्जिताः ।
मष्टमन्त्रविरोधेन शतैकीयोवशिष्यते ॥ ४६५ ॥

तस्मिन्याते बहिर्वर्षतुषारं प्रसभं नभः ।
भाग्याधिकोयं सर्वेभ्यो विशां चिच्छेद संशयम् ॥ ४६६ ॥

हिमानीपातभारेण येवसन्नत्र मण्डले ।
ययुर्निश्छायतां वृक्षा भग्नशाखा जना इव ॥ ४६७ ॥

प्राक्चेत्पतेद्धिमं तावन्म्रियेरन्त्रुडिताः क्षणात् ।
पिष्टराद्यन्तगर्तोटाः प्रविष्टा इव तद्भयाः ॥ ४६८ ॥

तेनैकेन विना सर्वहृदयाह्लाददायिना ।
नाशोभत सभा राज्ञश्चन्द्रेणेव कुमुद्वती ॥ ४६९ ॥

तटस्थो भृत्यकार्येषु सैदभार्याविधेयधीः ।
विसूत्रव्यवहारत्वं निन्द्यत्वं चागमन्नृपः ॥ ४७० ॥

स्वराज्यरक्षणाचारलक्षणाक्षमशासनः।
निर्द्वन्द्वाक्ष्यं सदैवासीत्प्रियेक्षणकृतक्षणः॥ ४७१॥
निग्रहानुग्रहव्यग्राः सूत्कोचग्रहतत्पराः।
अन्तरङ्गाः स्त्रियोभूवन्न मन्त्री न च सेवकः॥ ४७२॥
भोगलोभोज्झितौचित्या अमी विन्दन्ति सांप्रतम्।
तुरुष्कपुष्कलाश्वासाः स्वार्थमर्थं न च प्रभोः॥ ४७३॥
अनायका विनश्यन्ति नश्यन्ति शिशुनायकाः।
स्त्रीनायका विनश्यन्ति नश्यन्ति बहुनायकाः॥ ४७४॥
स्त्रीविधेयं समालोच्य राज्यं तस्य महीपतेः।
इति श्लोकं पठँल्लोकः सशोकः समदृश्यत॥ ४७५॥
ध्यायतो मार्गपत्यार्दीस्तत्प्रत्यानयनक्षमः।
शयनीयविमुक्ताङ्गस्तप्यते स्म दिवानिशम्॥ ४७६॥
अत्रान्तरे स मार्गेशो लोहरान्तरसंश्रयः।
स्वामिचिन्ताकुलो लेखशिक्षामित्थं व्यसर्जयत्॥ ४७७॥
राजन्पुंरत्न कोशस्ते योभूत्सर्वार्थसाधकः।
उत्पाद्योत्सारितः सैर्दैर्यद्दारिद्र्यं सुदुःसहम्॥ ४७८॥
निसर्गगुरवो नान्यसङ्गमिच्छन्ति चञ्चलाः।
अमी परस्पराभिन्नाः पारदस्य कणा इव॥ ४७९॥
हरिचन्दनवद्राजन्सर्वसौख्यप्रदो भवान्।
किंतु फूत्कारकारिण्या भोगिन्या वेष्टितो ह्यसि॥ ४८०॥
यस्मिन्स्फूर्जद्विषज्वाला व्यालाः सन्ति परासहाः।
निधानमिव तद्राज्यं त्याज्यं कस्य न सन्मतेः॥ ४८१॥
प्रदीप्तापि न या स्पृश्या दृश्यापि भयकारिणी।
श्मशानाग्निशिखेवासौ लक्ष्मीः सा केन सेव्यते॥ ४८२॥

स मीयाहस्सनस्तत्तद्दुर्ग्रहग्रस्तवासनः ।
आलैरुक्तोपि सन्मार्गे न तिष्ठतीव रावणः ॥ ४८३ ॥
मीराख्या ताडकेवात्र सूत्कोचामिषभक्षिणी ।
पौलस्त्यस्येव ते सर्वनाशार्थं निकटे स्थिता ॥ ४८४ ॥
तिष्ठन्त्वभ्यन्तरे सैदा यदीष्टा भवदन्तिके ।
तुरुष्ककरगं देशमिहस्थः साधयाम्यहम् ॥ ४८५ ॥
राजद्रोही न कोप्यस्मत्कुलेभूद्भक्तिवर्जितः ।
त्वदेकशरणः सोहं स्कन्दस्थो द्वाःस्थवद्वसे ॥ ४८६ ॥
वयमेव सदाचारा विचारविशारदाः ।
उन्मार्गे यदि गच्छामः कोप्यस्मासु न विश्वसेत् ॥ ४८७ ॥
कल्पान्तमपि जीवित्वा कृत्वापि धनसंचयम् ।
हत्वाप्यरीन्न कोप्यत्र भवे भवति सुस्थिरः ।
नष्टेन्यस्मिन्भवांस्त्राता त्वयि नष्टे परोस्ति कः ॥ ४८८ ॥
इति लेखं नृपस्याग्रे बुद्ध्वा मार्गपतेर्द्रुतम् ।
स मीयाहस्सनः क्रोधाच्छ्वसन्नहिरिवाब्रवीत् ॥ ४८९ ॥
सोयं स्थानच्युतस्तत्र स्वजीवनविवर्जितः ।
नूनमस्मत्प्रतापेन शुष्यतीवाब्जषण्डवत् ॥ ४९० ॥
ग्रीष्मोष्मणा विशुष्कस्य पङ्कमात्रावशेषिणः ।
भृत्यास्तस्य न तिष्ठन्ति तडागस्येव पक्षिणः ॥ ४९१ ॥
किं करोतु स्थितस्तत्र तत्रत्यैर्विहितादरः ।
मदीयदासमात्रोपि तं जेतुं क्षमते युधि ॥ ४९२ ॥
अथ वाहं स्वयं यामि तं निष्काशयितुं ततः ।
स तुरुष्कैः समं तत्र ग्रथनं कुरुतेन्यथा ॥ ४९३ ॥
अथोचे सैदहसनः पूर्वमैत्रीमनुस्मरन् ।
किं नस्तेन हृतं राष्ट्रं दीयतामानयाम्यहम् ॥ ४९४ ॥

अयुक्तोपप्लवे पूर्वं कृतदिव्याः परस्परम् ।
अनिष्टं चिन्तयामश्चेत्तत्कथं सहते विधिः ॥ ४९५ ॥
तच्छ्रुत्वा नृपतेरग्रे तद्वैरैकाग्रमानसः ।
तूर्णं दौलतयानं स्वं नौशाहाराधिप व्यधात् ॥ ४९६ ॥
वाह्यस्थः साधयत्येष कार्यं सद्भूतकागृणीः ।
द्रव्यकोटिं ददामोस्मै सैन्यसंग्रहसिद्धये ॥ ४९७ ॥
इत्युक्त्वा प्रतिमुक्तं तमेधराजानकं पथः ।
द्रुतं निवर्तयामास दत्तद्रव्यमपि स्वयम् ॥ ४९८॥
श्रुत्वा परशुरामाद्या मद्राः कश्मीरदेशतः ।
सानिष्टशङ्कया गन्तुं साज्ञं तेभ्यो यथोचिरे ॥ ४९९ ॥
ऊचुस्तान्प्रति मुञ्चामो युष्मान्पाथेयसंयुताः ।
कियद्दिनानि तिष्ठध्वं तद्यूयं दत्तवेतनाः ॥ ५०० ॥
तेषु स्ववसतिं यात्सु सैदास्तेन्योन्यमब्रुवन् ।
निष्कास्याः सर्वथैतेन तुरुष्कैकविरोधिनः ॥ ५०१ ॥
अत्रान्तरे नरेन्द्रस्य तत्तद्भृत्यादिचिन्तनात् ।
जाताधिबाधितं वक्त्रं पौषे पद्ममिवाभवत् ॥ ५०२ ॥
मृगयारसिकाः सैदा निन्युस्तं तादृशं नृपम् ।
माघे विषयराष्ट्रादिगतान्हन्तुं मृगव्रजान् ॥ ५०३ ॥
यत्र यत्रावसद्रात्रौ ससैदः कटकोत्कटः ।
पीड्यमानजनाक्रन्दमुखरास्ताद्दिशोभवन् ॥ ५०४ ॥

पङ्क्तीः प्रसार्य परितोद्रिषु तद्विभागं
यत्रोपवेशमकरोत्कटको नृपस्य ।
तत्रोदतिष्ठदतिनिष्ठुरवाग्जनानां
द्राक्षालताच्छिदि शुचा रुदितस्वनौघः ॥ ५०५ ॥

गिरयोत्युन्नतास्तत्र सुखदाः सान्त्वनिर्भराः ।
आक्रान्ताः कटकैर्हिंस्रैर्दुर्जनैरिव साधवः ॥ ५०६ ॥
प्रालेयपूरमग्नाङ्गाः कुरङ्गा गिरिशृङ्गतः ।
श्रुत्वा कोलाहलं त्रस्ताः सकुटुम्बाः समाययुः ॥ ५०७ ॥
कृष्टजिह्वान्स्फुरद्रक्तसिक्तास्याञ्श्वगणावृतान् ।
तांस्तत्राग्रागतान्दृष्ट्वा सैदास्ते तुतुषुर्भृशम् ॥ ५०८ ॥
हरास्मान्पीवरानेतान्पोतान्मा हर दुर्बलान् ।
इतीव वक्तुं भूपाग्रे प्रापुस्ते सार्भका मृगाः ॥ ५०९ ॥
सिद्धाध्युषितशृङ्गस्थत्रस्तैणवधदर्शनात् ।
क्रुद्धाः स्युर्देवता राजन्मा कृथा मृगयामिमाम् ॥ ५१० ॥
इत्याद्युक्तोपि बहुशस्तत्रत्यैः सकलैर्जनैः ।
शृङ्गारीवाङ्गनासङ्गान्न व्यरंसीन्मृगग्रहात् ॥ ५११ ॥
आस्थानमृगगोत्रेयं नान्यथा क्रियते त्वया ।
मुनिर्वैश्रवणाद्रिस्थो नृपमेत्याब्रवीदिति ॥ ५१२ ॥
साक्रन्दमाहता हत्वा मृगीस्ता रुधिरोक्षिताः ।
तद्गर्भनिर्भरां भूमिं सैदाश्चक्रुर्दृशोज्झिताः ॥ ५१३ ॥
अतृप्तस्तद्वधात्कृत्वा निर्मृगांस्तान्गिरीश्वरान् ।
सायं श्रान्तः सघोषौघान्वसतीरादिशन्नृपः ॥ ५१४ ॥
भव्या स्नुषास्य तनया तरुणी च जाया
कादम्बरं प्रसरके पशवश्च मीनाः ।
तिष्ठाम्यमुष्य सदनेहमिहैव रात्रौ
ध्यात्वेति कोपि न्यविशद्यमकिंकराभः ॥ ५१५ ॥
धानुष्कपुष्कलबला बलिनस्तुरुष्काः
षट्कर्मधर्मनिरताग्र्यगृहोपविष्टाः ।

तद्भाण्डपक्वहतकुक्कुटमांसभक्ष्या
यक्षा इवात्र विदधुर्मधुपानलीलाम् ॥ ५१६ ॥
पशुतण्डुलमद्यादि हृत्वा वास्तव्यलोकतः।
लुब्धास्तत्सेवकाः केपि स्वगृहे भरणं व्यधुः ॥ ५१७ ॥
मान्यदागमनं भूयाद्युष्माकं जनपीडया।
इत्याद्यार्त्ताशिषः शृण्वन्न शक्तो विव्यथे नृपः ॥ ५१८ ॥
मृगयाव्यसनं राज्ञो धिक्फलं भुज्यतेनघैः।
मृगापदेशाल्लोकानामेव सा क्रियते स्फुटम् ॥ ५१९ ॥
पशुवच्छतशो बद्धा मृगौघो यत्र मार्यते।
मृगया सा विनोदाय यदि शौनिककर्म किम् ॥ ५२० ॥
श्रमस्त्वयं चले लक्ष्ये स्पृहणीयोस्ति सादिनाम्।
कोयं बद्धे मृगे श्लाघ्यः शराभ्यासो धनुष्मताम् ॥ ५२१ ॥
क्षत्रियैर्मृगया कार्या निरवद्यतृणाशनात्।
नैकान्तव्यसनं युक्तं ह्याति सर्वत्र गर्हितम् ॥ ५२२ ॥
महापद्मसरस्तीरगिरिगांश्च मृगव्रजान्।
आगतो नृपतिस्तद्वन्निःशेषानकरोद्वधात् ॥ ५२३ ॥
इत्याद्यनुचितं किंचिन्मृगयादूषणं कृतम्।
विलोक्य यद्भवेद्भीतिर्भाविनां मृगयाजुषाम् ॥ ५२४ ॥
आखेटिकां नृपः कृत्वा राजधानीं समागतः।
अस्वास्थ्यमवहद्देहे ग्रहणीगदसंभवम् ॥ ५२५ ॥
केप्यूचुर्मृगयादोषात्कुपिता देवतास्ततः।
अतीसारगदारम्भस्तत्रैवास्य विलोकितः ५२६ ॥
केपि प्रच्छन्नराज्येच्छाः सैदाः स्वातन्त्र्यकाङ्क्षिणः।
व्यधुः किमपि भूपाले तुरुष्कादृतमानसाः ॥ ५२७ ॥

केऽपि मन्त्रिवियोगोत्थचिन्तासंतापितात्मजम् ।
रुजमाहुर्न तद्व्याधेर्निश्चयः कस्यचिदभूत् ॥ ५२८ ॥
भूपस्तादृगवस्थः स नववर्षादिवासरे ।
ययौ सर्जप्रदेशं तद्भ्यर्थया शकुनीच्छया ॥ ५२९ ॥
तद्दिने गच्छतस्तस्य राज्ञो नौकान्तरस्थितेः ।
जैनवाटविहाराग्रात्सर्पस्तुत्रोट पद्धतिम् ॥ ५३० ॥
तद्दुर्निमित्तभीशान्त्यै हत्वा तं सायकैर्नृपः ।
अहरद्धृदयाशङ्कां न शरीराद्रुजं पुनः ॥ ५३१ ॥
किमर्थं निर्गतो वासि चिरं त्वं सुकृतं कुरु ।
इतीवाग्रागतो वायुः सवेगं तं न्यरुध्यत ॥ ५३२ ॥
अस्मिन्गते प्रजापीडा भविष्यत्यत्र मण्डले ।
अकम्पत शुचेवोद्यत्तरङ्गतरलं सरः ॥ ५३३ ॥
तत्र सर्जोत्सवे भुक्त्वा सैदमन्त्रिसभावृतः ।
अपुनर्दर्शनायेव सर्वेषां दर्शनं ददौ ॥ ५३४ ॥
नौकारूढस्ततस्तूर्णं सभृत्यः स दिनावधि ।
उत्कण्ठाखण्डनायैव श्येनैः पक्षिवधं व्यधात् ॥ ५३५ ॥
अद्यैवेमं विनोदं नः करोति न पुनः प्रभुः ।
इत्येव श्येनाः पक्ष्यालीं गृहीत्वोपायनं व्यधुः ॥ ५३६ ॥
प्रत्यावृत्तस्ततो राजा सैदांस्तान्प्रतिमुच्य च ।
नाहं स्वस्थोस्मि तल्पस्थो देवीं ज्ञातरुजं व्यधात् ॥ ५३७ ॥
तत्पथ्यपरिचारिण्या स्वयं देव्या वृतो नृपः ।
दिवसेन्दुरिव क्षीणरुचिं विच्छायतामगात् ॥ ५३८ ॥
कपाटविकटं वक्षः श्यामगौरं तदाननम् ।
कट्यूरुजानुपादाश्च पीनाः पद्मदलोपमाः ॥ ५३९ ॥

सुन्दरं नयनद्वन्द्वं ललाटं भ्रूमनोहरम्।
तद्रुजा नृपतेः सर्वं विवर्णं समपद्यत॥ ५४०॥
एकदा सोवदद्राजा तं मीयाहस्सनं रहः।
नाहं जीवामि राज्यार्हाः न सुताः शिशवो मम॥ ५४१॥
बह्री बह्रामखानीयो न पाति मम बालकान्।
वरमादमखानीयं युक्त्यानीयाभिषिच्यताम्॥ ५४२॥
अथ वेयं भवत्कन्या यद्वक्ष्यति करोतु तत्।
श्रुत्वेति भव धीरस्ते स्वास्थ्यं स्यादिति सोब्रवीत्।
केवलं सैदहसनो रुरोद भृशदुःखितः॥ ५४३॥
अथ राज्ञ्यवदत्पित्रे रहो मीरामुखादिदम्।
संदेहितासू राजायं राज्ये किं क्रियतेधुना॥ ५४४॥
वरं बन्हामखानीयो युवायमभिषिच्यताम्।
यौवराज्ये च ज्येष्ठोयं दौहित्रः स्थाप्यतामिति॥ ५४५॥
द्वित्रा द्विष्टाश्च बध्यन्तां सर्वे स्युरविनश्वराः।
श्रुत्वेति मीयाहसनः सक्रोधस्तामभर्त्सयत्॥ ५४६॥
तच्छ्रेयःप्राप्तिसंकल्पकल्पितद्रव्यसंचयान्।
मौसुलेभ्यो ददुः सैदा द्विजभक्तिविवर्जिताः॥ ५४७॥
प्रभुं द्रष्टुं न यच्छन्ति गच्छन्त्यभ्यन्तरं स्त्रियः।
मन्त्रपाठं निषेधन्ति तत्तद्गारुडिकोचितम्॥ ५४८॥
चिकित्सां वैद्यकोक्तां तामन्यथा रचयन्ति च।
तत्रापि गुलिकां भोक्तुं रचयन्ति स्वसाधिताम्॥ ५४९॥
किमप्यनिष्टं कर्मेति कृतमित्यादिवादिनः।
वर्चो विवर्णं पश्यन्तोप्यन्तरङ्गा महीपतेः॥ ५५०॥
वैद्यो गारुडिकश्चाहं दृष्टकर्मेति कत्थयन्।
तथाभूद्रूप्यभट्टः स स्त्रीवैद्यककृतार्थनः॥ ५५१॥

मुमूर्षुः सेवकैः पृष्टः का शङ्कि चेक्षसे विभो ।
सण्डो निवार्यतामग्रादित्यूचे तान्महीपतिः ॥ ५५२ ॥
कृतान्तमहिषो दृष्टो दिवमद्यैव यात्ययम् ।
इत्युक्त्वा शुशुचुः सर्वे साक्रन्दं साश्रुलोचनाः ॥ ५५३ ॥
संरुद्धवसनः साश्रु घूर्णयन्दृष्टिमण्डले ।
तस्यामेव रजन्यां स मुमूर्षुरभवन्नृपः ॥ ५५४ ॥
वर्षे षष्टितमे कृष्णनवम्यां मासि माधवे ।
पञ्चाहं द्वादशाब्दांश्च राज्यं कृत्वा दिवं ययौ ॥ ५५५ ॥
आक्रन्दमुखरा रात्रिः सर्वा सा जनताप्यभूत् ।
प्रातर्याने समारोप्य च्छत्रचामरसंयुतम् ॥ ५५६ ॥
सैदाः ससेवकाः सर्वे निन्युः पितृशवाजिरम् ।
श्रीजैनभूपप्रमये दुःखिता नाभवत्प्रजा ।
तादृशी यादृशी तस्य मरणे शरणोज्झिता ॥ ५५७ ॥
तद्ब्रहाश्मनि वस्त्राढ्ये तस्य मस्तकवेष्टनम् ।
तद्बन्धरचनं टुप्पिकोज्ज्वलं मन्त्रिणो व्यधुः ॥ ५५८ ॥
तदालोक्य जनः सर्वो दर्शनोत्कण्ठिताशयः ।
स्मारंस्मारं नृपं मेने निषण्णमिव मध्यगम् ॥ ५५९ ॥
प्रातःप्रातः समागत्य सैदाः सप्तदिनावधि ।
स्ववेदाध्ययनं चक्रुर्मिश्रितं रुदितैः स्वनैः ॥ ५६० ॥
विहितरतयो दृष्टा येन्यैर्महाविभवोज्ज्वला-
स्तरुणवयसो बालालीलाविलासमदालसाः ।
कतिपयदिनैस्तेमी रिक्ता व्रजन्ति शुचान्विता
विरसमनसो राज्याद्वेश्यागृहादिव कामुकाः ॥ ५६१ ॥
देशो मेयं रचितरचना राजधानी ममेयं
कोशो मेयं युवतिरपि मे मे सुता मे च भृत्याः ।

इत्येवान्तः कलयति नृपो यावदेत्यन्तकस्तं
त्यक्त्वा सर्वं व्रजति सुशिराः पुण्यपापैकभागी ॥ ५६२ ॥
सप्ताङ्गसुभगं राज्यं ममेदमिति योऽब्रवीत्।
तदीयो नाभवत्तस्य स्वदेहान्ते पृथक्स्थितेः ॥ ५६३ ॥
इत्थं शवाजिरे लोकः शुशोच नृपसंततिम्।
अश्मैकरचनामात्रावशिष्टां तत्र संस्थिताम् ॥ ५६४ ॥
राज्यदानाय राज्ञी सा म्लेच्छसंपर्ककर्कशम्।
बह्रामखानजं पुत्रं दुःखोदर्कमतर्कयत् ॥ ५६५ ॥
इति हस्सनशाहिस्वर्यानम्।
इति जैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां
हस्सनशाहिराज्यवृत्तान्तवर्णनं नाम तृतीयस्तरङ्गः।
तृतीयेहनि सैदास्ते मिथः संमन्त्र्य सत्वराः।
व्यधुर्मह्मद्खानाय राज्यदानाय निश्चयम् ॥ १ ॥
प्रतीक्षाक्षममालोक्य कालं सैदास्त्वराकुलाः।
राज्याभिषेकदानेच्छामकुर्वन्नृपसूनवे ॥ २ ॥
अथ राज्ये व्यधीयन्त तत्सुतं सप्तवार्षिकम्।
कृत्वा मह्मद्शाहाख्यं गोनन्दमिव सुन्दरम् ॥ ३ ॥
तस्य सिंहासनस्यान्ते स्थापिता वस्तुसंततिः।
त्यक्त्वा भोजनसामग्रीं पूर्वं शार्ङ्गपतत्करः ॥ ४ ॥
एतद्राज्ये सदा युद्धं भविता मण्डलान्तरे।
दृष्ट्वा शकुनविज्ञाः केप्यूचुस्तत्रान्तिकस्थिताः ॥ ५ ॥
रौप्यसिंहासने छत्री विबभौ बालभूपतिः।
दत्तानन्दः पयःपूरैर्बालेन्दुरिव सुन्दरः ॥ ६ ॥
सैदाः शुभ्रांशुकन्यस्तकुङ्कुमालोहितात्विषः।
भाविद्रोहकृतोद्गच्छद्रक्तसिक्ता इवाबभुः ॥ ७ ॥

भ्राता हुस्सनखानोस्य कनीयान्रुचिराकृतिः ।
बभौ बालनृपस्याग्रे शुक्रस्येव बृहस्पतिः ॥ ८ ॥
शोकहर्षान्वितो लोकस्तद्दिने पितृपुत्रयोः ।
दधौ तमःप्रकाशाढ्यां लोकालोकाचलश्रियम् ॥ ९॥
दौहित्राभ्युदये सैदाश्चेरुरानन्दसुन्दराः ।
सुगन्धिमकरन्दाढ्ये मधौ मधुकरा इव ॥ १० ॥
वाद्यमानोत्सवातोद्यप्रोद्यत्प्रतिरवच्छलात् ।
अकुर्वन्निव वृद्ध्यर्थं राज्ञस्तस्याशिषो दिशः ॥ ११ ॥
राजधान्यङ्गने सैदाः परिधानप्रसादनैः ।
अतोषयन्नुत्सवान्तः सर्वं नृपपरिच्छदम् ॥ १२ ॥
एकस्मिन्कीर्तिशेषेन्या दिग्द्वयाद्धस्सनद्वयी ।
तादृशे ददृशे पौरैः स्फूर्जत्सादिशतावृता ॥ १३ ॥
राज्यसंपत्ससप्ताङ्गा तद्गृहे समलक्ष्यत ।
तत्कन्योद्वेजितेवाप्ता वक्तुं रिपुपराभवम् ॥ १४ ॥
राज्ञः सेवकसामन्ताः प्राप्नुवन्तस्तदन्तिकम् ।
प्रवेशं लेभिरे नान्तर्लुठन्तः कुक्कुरा इव ॥ १५ ॥
देश्यसंस्कृतशास्त्रज्ञविद्वत्कृतविडम्बनाः ।
गृहे स्त्रीषु बहिः श्येनलीलासु व्यसनं दधुः ॥ १६ ॥
विगुणव्यवहारेषु क्रूराचारेषु दर्पिषु ।
दुःसहान्तकदूतेन लोभेन क्षोभितेषु च ॥
दौःशील्यानभिगम्येषु प्रसरन्मत्सरेषु च ।
विरागं तेषु सैदेषु सप्रजाः सेवका ययुः ॥ १७ ॥
हितानामपि सैदानां केचिद्भूपालसेवकाः ।
नाभ्यनन्दन्परिचयं काकानामिव कोकिलाः ॥ १८ ॥

द्विजस्थितिः सुखं यासीत्सती सरसि निश्चला।
तेषां श्येनैश्च भृत्यैश्च भ्रामिता चपलाशया॥ १९॥
स्फीतगीतोल्लसन्नादा येभवन्वृन्दगायनाः।
शोकमूका इवाभ्यर्णे माघे भृङ्गा इवाभवन्॥ २१॥
अथ प्रथममेवैते गृहीत्वा नवभूपतिम्।
शकुनापेक्षिणो नावा वितस्तातटमभ्यगुः॥ २२॥
स्वपक्ष्यावर्जकास्तत्र पृष्टभोज्यान्नसंपदः।
स्वातन्त्र्यप्राप्तिदर्पान्धाः काश्मीरानादरं व्यधुः॥ २३॥
अपुनर्गमनायेव विधाय शकुनिक्षयम्।
एकदा स्वीयसंयुक्ता व्यधुः किमपि मन्त्रणम्॥ २४॥
तेषां तत्केवलतया श्रुत्वा षाड्गुण्यमन्त्रणम्।
काश्मीरिकाश्च मद्राश्च शङ्किता नगरेभवन्॥ २५॥
ततः परशुरामाद्यैस्तद्विष्टैः सह तद्दिने।
मिलिताः पञ्चशस्तीक्ष्णाः सैदा द्रोहमचिन्तयन्॥ २६॥
जिघांसतामथैतेषां वैजन्यावसरेक्षिणाम्।
न भेदमगमन्मन्त्रो गुप्तस्तद्दुष्कृतैरिव॥ २७॥
एकदा तत्सुताभीष्टा मीराख्या मीरहस्सनम्।
मूर्तेव दुर्दशा गेहमागत्येत्यब्रवीद्रहः॥ २८॥
राज्ञः क्वापि क्रिया साध्या तूर्णमागम्यतां प्रभो।
इत्युक्त्वानिष्टमप्येनं सा निनाय गृहान्तरात्॥ २९॥
द्रोहस्ते सूर्यवारे स्यान्न गन्तव्यो नृपालयः।
पित्रेत्युक्तोपि स स्वप्ने ययौ दैवविमोहितः॥ ३०॥
तावत्स सैदहसनोप्याययौ स्वगृहाद्द्रुतम्।
पादच्छेदोस्ति ते द्रोहान्मा पलायनमारुह॥ ३१॥

इत्येव पादकटकच्छिन्नोऽश्वादपतद्भुवि ।
प्रतोल्यां सैदसाध्वश्वखुरोत्कीर्णरजोमिषात् ॥ ३२ ॥
नैते पुनर्विशन्तीति शुचेवोच्छ्वासमक्षिपन् ।
तत्तारखानलेखेन त्वदनर्थादिहेतवे ॥ ३३ ॥
प्राप्तेनाद्य मिथो मन्त्रं विधाय कृतनिश्चयाः ।
आक्रान्तमण्डलाः सैदा युष्मच्छेषविशङ्किताः ॥ ३४ ॥
प्रातर्बध्नन्ति वस्तस्मादुपायः कोपि चिन्त्यताम् ।
मिथ्येति बोधिता मद्रा जोनराजानकादिभिः ॥ ३५ ॥
हन्मस्तान्वयमेवादौ समंत्र्येति समाययुः ।
सर्वानमृतवास्यन्तः समेतानवगम्य तान् ॥ ३६ ॥
अन्तः परशुरामाद्या विविशुः शस्त्रधारिणः ।
रक्ष्यो द्वारस्त्वया तैरित्युक्तो द्वारेशताजकः ॥ ३७ ॥
मन्त्रे प्रवृत्तिरित्युक्त्वा सैदभृत्यान्न्यवारयत् ।
कुर्वन्ति भोजने लुण्ठ त्वद्भृत्या इति तद्गिरा ॥ ३८ ॥
सैदाः स्वशस्त्रान्स्वान्भृत्यान्स्वसमीपान्न्यवारयन् ।
जोनराजानकस्तावत्पथान्येनागमद्द्रुतम् ॥ ३९ ॥
गृहीत्वा राजभृत्यौघाञ्जिघांसुर्वाटिकान्तरात् ।
ताजदौवारिकोप्यश्वमारुह्याप्तो नृपाग्रगम् ॥ ४० ॥
बभ्रामाभ्यन्तरेन्यत्र तन्मतेन जिघांसया ।
वाटिकान्तश्चतुष्खण्डमण्डपोपरि संस्थिताः ।
सैदा मद्रान्समालोक्य साशङ्का इव तस्थिरे ॥ ४१ ॥
किं न गच्छत देशं स्वं प्रतिमुक्ताः किमागताः ।
इत्यागतांस्तान्दृष्ट्वैव सेर्ष्यं सिंहद्विजोऽभ्यधात् ॥ ४२ ॥
मार्गमुक्त्यक्षरो नाप्तस्त्वत्तो यामः कथं वयम् ।
अद्य वः प्रतिमोक्ष्यामः सत्यार्थमिति तेऽभ्यधुः ॥ ४३ ॥

वैजन्यमीक्ष्य पार्थेययाच्चादम्भादुपागतः।
परशुः सिंहभट्टं तं न्यवधीत्प्रथमं रुषा॥ ४४॥
चतुष्मण्डपिकाप्रान्ते प्रक्षरत्क्षतजोक्षितः।
सिंहोपि वित्रुटच्छालः शृगाल इव सोपतत्॥ ४५॥
किं द्रोहो द्रोह इत्युक्त्वा यावद्भीताः समुत्थिताः।
तावत्खड्गप्रहारैस्ताञ्जघ्नुर्मद्राः समेत्य ते॥ ४६॥
निर्यातः प्रस्फुरन्मेदा द्वाराग्रे सैदहस्सनः।
हतो मुष्ट्यायुधस्तत्तत्प्रहारशतविह्वलः॥ ४७॥
तं दृष्ट्वा मीयहसनं सभयं विद्रुतं द्रुतम्।
प्राकारारूढमवधीत्कोपि छिन्नपदद्वयम्॥ ४८॥
गदयामीनकासीममल्लुलाद्यास्तदन्तिके।
त्रिंशन्मात्रा हतास्तत्र पुत्रमित्रसमन्विताः॥ ४९॥
वदन्तो हालहालेति रक्तसिक्ताक्तपाणयः।
चेरुस्ते तद्वधोद्युक्ताः कृतान्तस्यैव किंकराः॥ ५०॥
गृहेषु गोवधात्तेषां पापभीर्नाभवद्यथा।
तथा तत्र घ्नतां सैदान्मद्राणां नाभवद्घृणा॥ ५१॥
मृगयान्ते कुरङ्गादींश्छिन्नाङ्गान्व्यदधुर्यथा।
तथा सैदाः कृता मद्रैः क्षुद्रैस्तद्वाटिकान्तरे॥ ५२॥
द्विषद्धृतांशुका नग्ना महार्हशयनोचिताः।
अनाथा इव लोकस्य प्रययुः प्रेक्षणीयताम्॥ ५३॥
केचिद्दैवतखानाद्या निष्कृष्टच्छुरिकास्ततः।
तूर्णं प्राकारमुलङ्घ्य गृहीत्वाश्वान्पलायिताः॥ ५४॥
तद्दृष्ट्वा तुमुले जाते बहिस्तदनुजीविनाम्।
कस्यापि निश्चयो नाभूदन्तरे के हता इति॥ ५५॥

भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु ।
चकर्ष शस्त्रं तन्मध्यात्कोपि नैवाङ्गनान्तरे ॥ ५६ ॥
मल्लुजादात्मजाहूतस्तावन्मीयामहम्मदः ।
गृहादेत्य द्रुतं प्रादादास्कन्दं राजमन्दिरे ॥ ५७ ॥
प्रतोलीपालकः सोयं द्रोहीत्यग्रागतं द्रुतम् ।
राजमार्गान्तरे क्रुद्धो नूरोल्लाहमघातयत् ॥ ५८ ॥
बद्धाररिपुटां दृष्ट्वा राजधानीं नवीकृताम् ।
ज्ञात्वान्तःस्थान्रिपून्प्राग्वत्क्षोभेनाग्निमदापयत् ॥ ५९ ॥
न शक्तोपद्रवं द्रष्टुं स्वर्गं मद्रक्षको गतः ।
शुचेवेति द्वारधान्या जुहुवे ज्वलने वपुः ॥ ६० ॥
सौधप्राप्तलसद्धूमस्तोमव्याजान्नृपश्रियः ।
क्व मां खला नयन्तीति निःश्वासौघा इवास्फुरन् ॥ ६१ ॥
अत्रान्तरेग्निमालोक्य द्रोग्धारो धारितायुधाः ।
राजधान्यङ्गनं प्रापुर्निर्गता वाटिकान्तरात् ॥ ६२ ॥
जोनराजानको गच्छन्रुद्धः केनापि पत्तिना ।
वीरः खड्गप्रहारेण द्वित्रांस्तत्राङ्गनेवधीत् ॥ ६३ ॥
समारुह्याथ राजाश्वान्सर्वे मद्रसमन्विताः ।
मुक्तामूलकमागान्ते प्राप्ताः प्रोचुः क्षणं मिथः ॥ ६४ ॥
वरमत्रैव तिष्ठामः सैदैर्युद्धं विदध्महे ।
स्वल्पावशिष्टैः शत्रूणां न शेषः परिरक्ष्यते ॥ ६५ ॥
जल्लालठक्कुरः श्रुत्वा तानूचे नयकोविदः ।
न युद्धसमयोस्तीह गत्वानेन पथा द्रुतम् ॥ ६६ ॥
वितस्तापारमासाद्य तिष्ठामः सपरिच्छदाः ।
तत्रोपायान्विधास्यामो येन नश्यन्त्यमी स्वयम् ॥ ६७ ॥

अभिनन्द्येति तद्वाक्यं सर्वे साहसशालिनः।
ज़ुहिलामठमार्गेण वितस्तापारमासदन्॥ ६८॥
अत्रान्तरेन्तरं प्राप्तः क्रुद्धो मीयामहम्मदः।
अवधीद्भ्रातरौ ताजपाजकौ द्वारपालकौ॥ ६९॥
राजधान्यङ्गनात्कृष्टौ श्वपचैर्गुल्फदामभिः।
अमेध्यमध्यमग्नाङ्गौ ययतुस्तौ श्वभोज्यताम्॥ ७०॥
आजन्म कृपणौ ग्राम्यपीडोत्कोचार्जितश्रियौ।
प्राणदानक्षणे तस्मिन्गतौ सर्वस्वदातृताम्॥ ७१॥
संचितं ग्राम्यपीडाभिर्लुब्धैर्यत्परवञ्चनैः।
तेषां सद्रूप्यकुप्यादि सर्वं तद्राजसादगात्॥ ७२॥
कृपणस्य गृहं विशन्ति येर्था
न बहिः कष्टुमतो जनाः क्षमन्ते।
बिलमध्यगता इव द्विजह्वा
यदि निर्यान्त्यसुभिः सहैव सर्वे॥ ७३॥
भिक्षोः प्रसृतिमात्रं यैर्न दत्तं तद्गृहान्तरात्।
शतं तण्डुलखारीणां भिक्ष्वाद्यैरेव तद्धृतम्॥ ७४॥
गोधूमपिष्टं पूपैकपर्याप्तं नाप्तमर्थिभिः।
यत्तल्लुण्ठिततच्चूर्णैर्हिमपातायितं पथि॥ ७५॥
अत्रान्तरे गृहाद्दाप्तोप्यालिखानो भटोद्भटः।
प्राग्वाटिकाप्रतोलीं तामदहत्तज्जिहीर्षया॥ ७६॥
पद्राजानकाद्याश्च तावद्धामखानजम्।
उन्मुच्य बन्धनात्तूर्णमपमार्गेण निर्ययुः॥ ७७॥
अग्रे दृष्ट्वारिसैन्यं च पश्चादपि हुताशनम्।
क्षमो यातुं न च स्थातुं मृगशाव इवाभवत्॥ ७८॥

कृष्टोरिष्टाय सोयं नो विरुद्धैरिति तं विदन् ।
अलिखानः समाश्वास्य सिंहो मृगमिवावधीत् ॥ ७९ ॥

महाराज्ञ्यैव कृष्टोयं पाजभट्टमतस्थया ।
राज्यार्थमिति सैदास्तं चुक्रुशुः केचनावदन् ॥ ८० ॥

उपायो बन्धनात्क्रष्टुं चिन्तितस्तस्य योपरैः ।
अपायः प्रत्युतास्याभूद्दैवं केन विलङ्घ्यते ॥ ८१ ॥

तस्य मीरादयो भृत्याः पापास्तेन प्रचोदिताः ।
प्रहारविवशं चक्रुः शशकं शबरा इव ॥ ८२ ॥

राजपुत्रवधोत्पातविवशं पृष्ठपातिनम् ।
अवधीत्पाजभट्टं तं स्वपक्षमिव राक्षसः ॥ ८३ ॥

भुक्तं किमपि नो राज्यान्निर्हेतुः किमयं हतः ।
शुचेवारोदि तद्दृष्ट्वा वृक्षैः पिकरवच्छलात् ॥ ८४ ॥

मा मा वधीरिमं खानं सुचिराद्बन्धनोद्गतम् ।
रुरुदुस्तच्छुचेवेत्थं मरुता कम्पिता लताः ॥ ८५ ॥

केमी तुरुष्का दुष्कार्यकराः पुष्कलपातकाः ।
इत्येव तरवः कम्पमापुर्वायुविघट्टिताः ॥ ८६ ॥

चतुर्विंशतिवर्षोयं मात्रा प्राप्तश्चिराच्छवः ।
त्र्यहं रुद्धान्तिके स्नेहात्कृतोन्त्यक्रियया ततः ॥ ८७

यवान्नभक्षिणी तस्य जननी विधवा सती ।
सुल्हाणदेवी साजीवमवसत्तच्छवाजिरे ॥ ८८ ॥

राजसैदद्विजानेतान्हतान्वीक्षाम्यहं कथम् ।
इतीव तत्क्रुधा रक्तः सूर्यो लोकान्तरं ययौ ॥ ८९ ॥

परितो राजधान्यास्तान्दृष्ट्वा नग्नान्महत्तरान् ।
न शेकुः केपि वस्त्रैकखण्डं दातुं त्रपाहृते ॥ ९० ॥

सरस्तीरगता भेका अविच्छिन्नरवच्छलात् ।
साक्रन्दाः सर्वरात्रं ते तच्छुचेवाभवंस्तदा ॥ ९१ ॥

ये राजवेश्म विविशुः सुभगाः सुवेशा-
स्त्वङ्गत्तुरङ्गखुरधूलिकृतान्धकाराः ।
ते छिन्नवोढशिबिका धृतजीर्णवस्त्रा
निष्काशिता नृपगृहात्स्रुतरक्तधाराः ॥ ९२ ॥

इत्थं षष्टितमे वर्षे भाव्युपद्रवकारणम् ।
वैशाखस्य चतुर्दश्यां सैदानां विप्लवोभवत् ॥ ९३ ॥

नूनं हसननाम्नां सत्कृत्यानां तत्र वत्सरे ।
अन्तकः संनिविष्टोभूद्येनैते प्रलयं गताः ॥ ९४ ॥

सामान्यवेश्मनि वरं जनिरस्तु पुंसां
मा मास्तु राजनिलये बहुदुःखकर्त्री ।
ते शेरते तु सममेत्य पटैकमध्ये
नो माति राजयुगलं विपुले सुदेशे ॥ ९५ ॥

अथालिखानमीयाद्याः क्रुद्धाः पश्चादवालगन् ।
नदीपारगताञ्श्रुत्वा द्रोहिणस्तान्विरोधिनः ॥ ९६ ॥

नौसेतुबन्धानुच्छिद्य मार्द्रैः काश्मीरिकैः समम् ।
जल्लालठक्कुराद्यास्ते मतं चक्रुर्जिगीषया ॥ ९७ ॥

विंशप्रस्थान्तरे सैदाः प्राप्तसंनाहवाहनाः ।
तत्तत्पटकुटीषण्डमण्डिताः शिबिरं व्यधुः ॥ ९८ ॥

पुरमात्रावशिष्टास्ते सैदा द्वैधान्निवर्तिनः ।
वाजिवर्मासिभूयिष्ठां राज्यलक्ष्मीं विभेजिरे ॥ ९९ ॥

येषां वराटिकैकापि नाभूत्करगता क्वचित् ।
स्वर्णरूपकहस्ताङ्काश्चेरुस्ते वेशभूषिताः ॥ १०० ॥

तेषूत्तुङ्गतुरङ्गेषु सर्वतो वसुवर्षिषु ।
अकारि शस्त्रग्रहणं शिल्पिशाकटिकैरपि ॥ १०१॥

मन्दुरासुन्दरा येऽश्वा राज्ञोभूवन्महागुणाः ।
तानारुह्याधमाश्चेरुस्तद्भृत्या नित्यदुर्लभान् ॥ १०२ ॥

ततो हस्सनराजानकाद्यैरन्यैश्च संयुताः ।
षाड्गुण्यं विदधुः सैदाः काश्मीरिकजिगीषवः ॥ १०३ ॥

ते मीयामत्तनाराचमुख्यानां यन्त्रणोज्झिताः ।
स्वसेवकानां विदधुरधिकारसमर्पणम् ॥ १०४ ॥

अत्रान्तरे पारगताष्ठक्कुराद्या महाधियः ।
सैन्यानां संग्रहं चक्रुस्ते जालद्रगरान्तरे ॥ १०५ ॥

श्रुत्वेति साहसोदात्तं नगरे मद्रनिर्मितम् ।
आययुः सर्वराष्ट्रेभ्यो लोकास्ते शस्त्रधारिणः ॥ १०६ ॥

प्रवृत्ते च पुरक्षोभे पुरे ग्रामे च पत्तने ।
अत्युल्बणजनः सर्वो धावति स्म धृतायुधः ॥ १०७ ॥

शमालावाङ्गिनीयाद्याः क्रमराज्यगताश्च ये ।
स्थामार्थं क्षिप्तिकातीरे शिबिरं समकल्पयन् ॥ १०८ ॥

दरद्भिश्चक्रवाकाद्यैर्दरद्भिः सुभटैः समम् ।
वैडूर्यभट्टः स्थामस्थो युद्धसंनद्धतां दधौ ॥ १०९ ॥

नीलाश्वलोकं संगृह्य पम्मराजानकादयः ।
दुग्धाश्रमान्तिके सिन्धोः पारं स्थामार्थमासदन् ॥ ११० ॥

सर्वतो धान्यसंभारानानीयानीय नाविकैः ।
प्रवासवेतनं कोशाभावात्काश्मीरिका व्यधुः ॥ १११ ॥

क्वचिल्लुण्ठं क्वचिद्दाहं परदेश इवात्र ते ।
पारावारगताश्चक्रुर्नदीं तीर्त्वा पुरद्वये ॥ ११२ ॥

धनुर्यन्त्रशरैर्मुक्तैः प्रतितीरं पुरद्वये।
पञ्च सप्त मृता युद्धे प्रत्यहं कटकद्वये॥ ११३॥
खशाश्चोपान्तसामन्ताः क्षीणप्रेष्या गृहोज्झिताः।
नामावशेषाः खानाश्च शूरा दारिद्र्यपीडिताः॥ ११४॥
चौराः कृतप्रमोषाश्च चिरबन्धनयन्त्रिताः।
तत्तद्राजविरुद्धाश्च पिशुनाश्च श्ववृत्तयः॥ ११५॥
हृताधिकारास्तत्कार्यन्यायप्रत्यायनक्षमाः।
एते चान्ये च तुतुषुर्देशेऽस्मिंस्तदुपद्रवे॥ ११६॥
नौसेतुबन्धान्नावश्च सर्वा मडवराज्यतः।
आनीय वामतीरस्था विदधुः स्वोपयोगिनीः॥ ११७॥
देवाभिधः शाकुनिको नाविकाधिपतां भजन्।
प्रतीर्य नौकायुद्धेन विदधे सुभटक्षयम्॥ ११८॥
सैदा डल्लसरस्तीरस्थिताञ्शाकुनिकान्नवान्।
सपोतान्व्यसृजन्योद्धुं तत्तन्नन्दपुरस्थितान्॥ ११९॥
मीयावफाकनामापि पुररक्षाधिकारभाक्।
विचार्य चौरांस्तत्काले द्वित्राञ्शूले न्यरोपयत्॥ १२०॥
आसमुद्रमठाज्जैननगरान्तं सडिण्डिमम्।
तस्मिन्स्फुरति पौराणां न भीश्चौरकृताभवत्॥ १२१॥
छिन्नेषु सेतुबन्धेषु तत्तन्नौपुरकादिषु।
पूर्दुर्गरचनेवाभूद्दुर्गमा तद्विरोधिनाम्॥ १२२॥
आस्कन्दं स्कन्दभवनादाशङ्क्योपनृपाङ्गनम्।
पञ्चहस्तामितां सैदाः परिखां समकल्पयन्॥ १२३॥
द्वारधानीसमीपेऽपि रुद्रराजानकान्तिके।
तादृशीं परिखामन्यां चक्रुर्वैरिभयच्छिदे॥ १२४॥

विरुद्धवेश्मलुठनं कुर्वन्तो हृततद्धनाः ।
सैदभृत्या भयं चक्रुः प्रजानां गोवधादिना ॥ १२५ ॥

विरुद्धमुक्तलुण्ठितगृहदारुसमाश्रितः ।
दिद्दामठे रुद्रवनवासेन्धनकृतोभवत् ॥ १२६ ॥

अनभिज्ञतयाल्पानां तद्विरुद्धगृहश्रियः ।
व्ययीचक्रुर्वृथा सैदा गावो हत्वा शुनामिव ॥ १२७ ॥

निष्कृष्टशस्त्राः संनाहममुञ्चन्तो दिने दिने ।
राजधान्यङ्गने साश्वास्तद्भृत्याः प्राविशन्मदात् ॥ १२८ ॥

मल्लामीनग्रहांश्चन्दकायस्थसदनानि च ।
राजानको हस्सनः स ददाह स्वगृहं क्रुधा ॥ १२९ ॥

काकतालीयकन्यायः सैदकाश्मीरसैन्ययोः ।
परस्परभयभ्रश्यद्धैर्ययोरभवत्तदा ॥ १३० ॥

पारावारगता वीरास्तीर्त्वा साहसिनो द्रुतम् ।
हत्वा तांस्ताञ्छिरश्छित्त्वा तीरे दण्डे न्यरोपयन् ॥ १३१ ॥

लोलाश्वारोहिणि हते तीर्त्वा सैदभटद्वये ।
लुण्ठिं पिर्वजखानाद्याश्चक्रुः पद्मपुरान्तरे ॥ १३२ ॥

जोनराजानकाद्यास्तच्छ्रुत्वा तीर्णा भटोद्भटाः ।
ओवाणादिषु तद्रोषादुत्पिञ्जं चक्रुरञ्जसा ॥ १३३ ॥

तेन सैदा अपि ग्रामे जन्मभूमौ गृहावलेः ।
जोनराजानकस्यैव क्रोधादग्निमदापयन् ॥ १३४ ॥

तच्छ्रुत्वा स तदीयस्य वडर्वाविषयान्तरे ।
ताजिभट्टस्य सदने तद्वदग्निमदापयत् ॥ १३५ ॥

गृहान्पदातिमात्रः स दग्ध्वा लहरमध्यगः ।
दुग्धाश्रमादिस्थामस्थान्पलायनपरान्व्यधात् ॥ १३६ ॥

अथ लोहरकोटस्थं श्रीमार्गेशजहाङ्गिरम्।
जल्लालठक्कुराद्यास्ते लेखमित्थं व्यसर्जयन्॥ १३७॥
यत्प्रमादभिया देशात्सकुटुम्बो गतो भवान्।
स मद्रैर्विहितोस्माभिर्युक्त्या तद्ध्वस्साहसः॥ १३८॥
मीयामहम्मदाद्यैस्तत्पुत्रैरस्मज्जिगीषुभिः।
वैतस्तो दक्षिणो वामो भागोस्माभिः समाश्रितः॥ १३९॥
जिगीषवो वयं सर्वे क्रान्तकश्मीरमण्डलाः।
पुरमात्रावशिष्टास्ते सैदास्तिष्ठन्ति वेष्टिताः॥ १४०॥
तद्विलम्बधियं त्यक्त्वा तूर्णमागम्यतां यतः।
प्राप्ते त्वयि जयोस्माकं तव स्युः कीर्तिसंपदः॥ १४१॥
राजभक्ताश्च शक्ताश्च यूयमेवात्र मण्डले।
तदनागमनात्कीर्तिं मा कार्षीः स्वां कलङ्किताम्॥ १४२॥
बद्धे रणादालिशाहे पूर्वं मल्लेकजःस्नथात्।
राज्यरक्षां व्यधादत्र यथा मार्गेशमह्मदः॥ १४३॥
तद्वत्प्राणं त्वया रक्ष्यं तूर्णमागत्य सांप्रतम्।
अन्यथास्य शिशो राज्ये स्थापयन्ति न सैदजाः॥ १४४॥
इति लेखं विचार्याशु स्वदेशोत्कण्ठिताशयः।
तूर्णं पर्णोत्समार्गेण स मार्गपतिराययौ॥ १४५॥
प्राप्ते तस्मिन्दिनैर्द्वित्रैः कुद्बदीनपुरान्तरम्।
चकम्पुः शिबिरे सैदाः प्रदीपा इव वायुना॥ १४६॥
अथ संमन्त्र्य सैदास्ते भयात्संधातुमिच्छवः।
इत्थं शिखशहावादीँल्लेखहस्तान्व्यसर्जयन्॥ १४७॥
प्रधानपुरुषाः सन्तः कृतसैदवधाः कथम्।
भवन्तो बत कुर्वन्ति कार्यं लोकविगर्हितम्॥ १४८॥

दैवाद्यदि मृतो भूपस्तत्सुतस्तत्पदे कृतः
कस्य किं वो हृतं येन सर्वे छेदार्थमुद्यताः ॥ १४९ ॥
न सर्वे द्रोहिणः सन्ति यूयं काश्मीरिका जनाः ।
वैदेशिकैर्हता यैस्ते द्वित्रांस्तान्नः प्रयच्छत ॥ १५० ॥
अथ वा परदेशात्तान्निष्कास्य सपरिच्छदान् ।
यूयमेवात्र देशे स्थ मुख्या मन्त्रिषु पूर्ववत् ॥ १५१ ॥
या यस्य पदवी पूर्वमासीत्सा तस्य तिष्ठतु ।
संभूय सर्वे भुञ्जाना नास्माकं विग्रहे ग्रहः ॥ १५२ ॥
मरणं नियतं जन्तोर्यथैव विधिकल्पितम् ।
तथैवावश्यभावीति के निवर्तयितुं क्षमाः ॥ १५३ ॥
इति लेखार्थमालोच्य मार्गेशाद्या महत्तमाः ।
यवनाक्षरसंबद्धमिति लेखं व्यसर्जयन् ॥ १५४ ॥
रक्षारत्नं नृपस्ताद्दग्रक्षितो न दुराशया ।
किमर्थं स हतो राजपुत्रो बहामखानजः ॥ १५५ ॥
नूरुलाहादिवधतः कस्याश्वासो भवत्विह ।
तत्राप्यस्य शिशो राज्ञः सर्वः कोशो विलुण्ठितः ॥ १५६ ॥
लौही सा घटिकैवैका द्वारि तिष्ठति भूपतेः ।
सैदैः शिष्टाहमेवेति ब्रुवतीव ध्वनिच्छलात् ॥ १५७ ॥
गच्छन्त्वनिष्टा मद्रास्ते बहिर्युतया निवारिताः ।
संतोषवृत्त्या तिष्ठन्तु यूयं पैतामहे पदे ॥ १५८ ॥
इत्यादि श्रुत्वा सैदैः स समाहूतोप्यनागतः ।
तदग्रं व्यसृजद्दूतं स च प्राप्तोब्रवीदिदम् ॥ १५९ ॥
स्थापयन्तु धनं कोशे यद्धृतं बालभूपतेः ।
शस्त्रं त्यजन्तु मन्त्रादौ तिष्ठन्तु भयवर्जिताः ॥ १६० ॥

अत्रत्या एव कुर्वन्तु राज्यकार्याणि पूर्ववत्।
किंचिन्नश्यति नो देशे दोषाः शान्ति व्रजन्ति च ॥ १६१ ॥
यद्गतं गतमेवात्र मृता जीवन्ति नो पुनः।
अन्योन्यशुद्धिर्वैरस्य जातान्योन्यकृताद्वधात् ॥ १६२ ॥
इत्यादि युक्तमुक्तं तद्वाक्यं श्रुत्वा मदोद्धताः।
सैदास्तदुक्तिजनितक्रोधदग्धा इवाभवन् ॥ १६३ ॥
नृपः कोशश्च शस्त्रं च युद्धदक्षास्तथा भटाः।
सर्वमित्यस्मदायत्तं किं कुर्वन्ति विरोधिनः ॥ १६४ ॥
इति हैबतखानोक्ता युद्धसंनद्धबुद्धयः।
अभूवंस्ते कृतोद्योगाः कौरवाः पाण्डवेष्विव ॥ १६५ ॥
अथैकदा सैफडारजोनराजानकादयः।
पुरे नौसेतुमुत्तीर्य सैदयुद्धार्थमाययुः ॥ १६६ ॥
उपायैः सर्वदा जेयाः समयो न रणस्य वः।
इति मार्गपतेर्वाक्यं नागृह्वंस्ते रणोद्यताः ॥ १६७ ॥
दावूदनामा मार्गेशपुत्रो धामाकरो द्रुतम्।
प्रतीहारादिभिर्युक्तो नगरान्तरमासदत् ॥ १६८ ॥
समुद्रामठमार्गेण प्रविष्टा पृतनाथ सा।
प्रापल्लोष्टविहारं तं कर्तुं सैदभटक्षयम् ॥ १६९ ॥
रणं संत्यज्य डोम्बाद्या येऽन्ये लुब्धा महाभटाः।
सर्वस्वहरणव्यग्रा बभूवुर्नगरान्तरे ॥ १७० ॥
डोम्बाद्याः सुभटाश्चान्ये घ्नन्तोन्योन्यमुदायुधाः।
प्रसिद्धपौरवेश्मभ्यो भाण्डागाराद्यलुण्ठयन् ॥ १७१ ॥
भूमौ निखन्य यन्न्यस्तं पौरैर्गुप्तं गृहे धनम्।
क्षिप्त्वा प्रतिपदं शङ्कूनीतं तत्तैरिवार्पितम् ॥ १७२ ॥

मद्राहते भटे दृष्ट्वा सैदा दिग्पतितं शिरः ।
नाद्यास्माकं जयोस्तीति तूर्णं जग्मुर्यथागतम् ॥ १७३ ॥
अथ सैदचमूः श्रुत्वा तान्प्रविष्टान्पुरान्तरे ।
अग्रे जगाम युद्धाय सायकायुधवर्षिणी ॥ १७४ ॥
अग्रागतं पद्मभटं हत्वा स्वशिबिरान्तरे ।
तद्रक्ततिलकं चक्रुः सैदाः स्वायुधसिद्धये ॥ १७५ ॥
आलिखानः स तत्रस्थस्त्रस्तः श्रुत्वागतां चमूम् ।
लुद्रभट्टविहारेऽग्नि मार्गरोधार्थमार्पयत् ॥ १७६ ॥
ज्वालाजटाकुले मार्गे प्राप्तो दावूदमार्गपः ।
सहुसनप्रतीहारः स वीरो रणमग्रहीत् ॥ १७७ ॥
सेतुसंकटमार्गेण पतितः परिखान्तरम् ।
स मार्गपतिदावूदो युध्यन्प्राणैर्व्ययुज्यत ॥ १७८ ॥
तत्राह्लादप्रतीहारमुख्या वीरा रणाङ्गने ।
ययुः शौर्यं दर्शयन्तो दिव्यस्त्रीसुखभागिताम् ॥ १७९ ॥
रूपं तस्य मृतस्यापि स्मृत्वा पौराङ्गनाः पुरे ।
वदन्ति नैव पश्यामस्तादृशं सुभगं क्वचित् ॥ १८० ॥
सुरूपो मानुषो योग्यो नायं तन्नीयते दिवम् ।
इतीव देवताभिः किं मृतस्तत्र न्यधीयत ॥ १८१ ॥
तावद्धैवतखानाद्यैः पश्चादन्यपथागतैः ।
विदधे खानगाहाग्रे तत्तत्सुभटसंक्षयः ॥ १८२ ॥
भूताविष्टैरिव प्राप्तविजयैरुद्यतायुधैः ।
रणप्रेक्षागताः पौरास्तद्दिने केपि तैर्हताः ॥ १८३ ॥
किमन्यत्परदेशीया दूता विप्रगृहे स्थिताः ।
एते मद्रा इति प्रोक्ता लोभाद्भिन्ना निपातिताः ॥ १८४ ॥

विमुच्य बन्धनस्थान्स्वान्युध्यन्सैदभटैः सह।
स सैफडामरः पौरान्सैदांश्चोत्फलकान्व्यधात् ॥ १८५ ॥
अस्मद्वैरिहितः सोयमिति सैदभटा रुषा।
जघ्नुर्गृहस्थितं वैद्यपण्डितं यवनेश्वरम् ॥ १८६ ॥
अत्यन्तानुचितं सैदाश्चक्रुर्यत्तस्य मस्तकम्।
छित्वा चन्दनलिप्ताङ्गं न्यधू राजपथान्तरे ॥ १८७ ॥
प्रविष्टा राक्षसाः केपि तद्दिने तत्पुरान्तरे।
अविचार्य क्षयं चक्रुः सर्वेषां यत्कृपोज्झिताः ॥ १८८ ॥
तस्य चन्दनलिप्ताङ्गं मस्तकं वीक्ष्य नागराः।
न के निन्दां व्यधुः सैददुष्कर्माधर्मनिश्चयात् ॥ १८९ ॥
आ मल्लिककुरालोष्टविहारान्तं पुरान्तरे।
शवा इन्धनगण्डाल्य इवासन्निहिताः पथि ॥ १९० ॥
आसन्येषु वपूंषि तूलशयनन्यस्तोपधानोद्धत-
स्पर्शोत्कर्षसुखावमर्पविलसच्छृङ्गारसाराण्यलम्।
नग्नास्ते भुवि काककुक्कुरवृकैः संभक्षिता लक्षिता
मेदोमांसवसावमत्क्रिमिलसन्निष्पन्ददुर्गन्धिनः ॥ १९१ ॥
जयेन तावन्मात्रेण तुष्टाः सैदाः परस्परम्।
विशप्रस्थान्तरे चक्रुर्वाधैस्ते विजयोत्सवम् ॥ १९२ ॥
हतावशिष्टान्नष्टांस्तांस्तद्दिने चलितान्बहून्।
पश्चाच्चेदगलिष्यन्त सर्वसंहरणं भवेत् ॥ १९३ ॥
किं तु प्राग्लुठिता देवा ज्वलिताः केपि देशगाः।
तां बुद्धिं विजयायैषामदास्यन्कुपिताः कथम् ॥ १९४ ॥
अहंपूर्विकया याततरद्भटभरासहः।
नौसेतुबन्धस्तुत्रोट तावच्छ्रीनगरान्तरे ॥ १९५ ॥

संनाहभरमग्नाङ्गाः सेतुभङ्गात्परिच्युताः ।
शतसंख्या दिने तस्मिन्वितस्तायां विपेदिरे ॥ १९६ ॥
नूनं सा शारदा देवी वितस्तारूपधारिणी ।
तदधर्मक्रुधा ग्रासं विदधे कटकद्वये ॥ १९७ ॥
प्रेक्षागता हताः पौरा इति निन्दानिवृत्तये ।
तत्क्षणोत्कृत्तशिरसां सैदै राशिः कृतोग्रतः ॥ १९८ ॥
तत्तत्कोल्यर्पितमुखैस्तैर्वितस्तातटान्तरात् ।
काष्ठमेकं न्यधुः सैदा भीत्यै दीपधरोपमम् ॥ १९९ ॥
वितस्तायां शवाः केचित्सलिलोच्छूनविग्रहाः ।
विसस्रुर्विस्रगन्धाढ्या महापद्मसरोन्तरे ॥ २०० ॥
अत्रान्तरे समानीयावशिष्टान्परितो भटान् ।
काश्मीरिकाः पुनश्चक्रुः पूर्ववत्सैन्यसंग्रहम् ॥ २०१ ॥
श्रीजहाङ्गिरजल्लालसैफडामरकादयः ।
मुख्यान्सैदान्पुनर्जेतुं रणोपायं व्यचिन्तयन् ॥ २०२ ॥
स सैफडामरः प्राप्तसिद्धादेशपदस्ततः ।
उच्चावचेषु व्यभजद्विषयान्सप्तविंशतिम् ॥ २०३ ॥
काष्ठागता लसत्पक्षास्तीक्ष्णाश्च सफलीकृताः ।
यन्त्रेषवश्च योधाश्चाघट्टंस्तेषु दिने दिने ॥ २०४ ॥
क्षुभ्यद्वैतस्ततीरद्वयजयघटनारब्धयन्त्रेषुयुध्य-
त्क्रुध्यद्वीरेक्षणाप्तप्रचुरपुरजनस्वान्तसंक्रान्तशौर्यम् ।
धावत्संनाहिताश्वोत्कटसुभटघटाघातजाताग्निवर्षं
चक्रुः क्रोधात्पुनस्ते प्रवरपुरवरे युद्धमत्युद्धतं तत् ॥ २०५ ॥
यामदुन्दुभिवाद्यानां ध्वनिः सर्वैस्तदा श्रुतः ।
पूर्वं राजगृहे पश्चात्सैदकाश्मीरसैन्ययोः ॥ २०६ ॥

अवतीर्णा जलार्थं याः पाराआरपुराङ्गनाः।
यन्त्रेषुभिर्विदीर्णाङ्गा बह्वयस्तत्र विपेदिरे॥ २०७॥
स नासीद्दिवसो यत्र छिन्ना वीराः पतत्रिभिः।
छिन्ना मुमूर्षवस्तीरान्न नीताः स्वगृहान्प्रति॥ २०८॥
वह्निदानस्फुरद्योधसंहाराद्यैरुपद्रवैः।
एकमेकं दिनं तत्रानेहस्याभूद्भयावहम्॥ २०९॥
अश्लीलालापिनोन्योन्यं रहस्योद्घाटनोद्यताः।
तटद्वये भटाः क्रूरा अवाच्यमपि तेब्रुवन्॥ २१०॥
राजसैदद्विजद्रोहरोहत्पापादिवादिनः।
मिथो गालीं वदन्तस्ते किं नावाच्यं बभाषिरे॥ २११॥
प्राप्ता दोलतसोहाद्याः कष्टवाटादिदेशतः।
शिष्टाः सल्हणहंसाश्च शाहिभङ्गनृपात्मजाः॥ २१२॥
पञ्चगव्हरजाः केचित्सिन्ध्वपत्यन्वयोदिताः।
खशा म्लेच्छास्तथान्येपि रुरुधुः सर्वतो दिशः॥ २१३॥
काश्मीरिकाः स्वभेदेन बलप्राप्त्या तथापरे।
ययुस्त्रासविसूत्रत्वमज्ञातान्योन्यनिश्चयाः॥ २१४॥
अत्रान्तरे नभस्युल्का सायं दीप्तोदभूत्स्फुटम्।
उदीच्या दक्षिणां याता प्रज्वलद्द्रुमस्तका॥ २१५॥
दृष्ट्वा तामद्भुतां सर्वे सैन्ययोरुभयोरपि।
संग्रामाशङ्कितानिष्टा बभूवुर्भयविह्वलाः॥ २१६॥
अत्रान्तरे सैदलेखैः प्रेरितो देशलिप्सया।
तत्तारखानो व्यसृजत्तौरुष्कं पुष्कलं बलम्॥ २१७॥
प्राप्ताः शस्त्रगलस्थानं तुरुष्कास्ते सुदुष्कराः।
हता बोडनराजाद्यैः प्रालेयैः शलभा इव॥ २१८॥

कालीधारापदेशेन काली भगवती क्षुधा ।
व्यधात्तद्भक्षणं नूनं सतीदेशहितेच्छया ॥ २१९ ॥
आदमखानजस्तस्मै विसृज्य इति चोदितः ।
निवर्त्य तं तुरुष्कः स स्वान्तिके समरक्षत ॥ २२० ॥
तदीयाश्वपदार्थौघप्राप्त्या तद्देशवासिभिः ।
अनन्यसुलभां प्राप्य श्रियं वैश्रवणायितम् ॥ २२१ ॥
अथ काश्मीरिकाः श्रुत्वा तद्वधं वाद्यवादनम् ।
चक्रुर्येनाभवन्सैदा विच्छायवदनाः श्रुतेः ॥ २२२ ॥
गतावशिष्टा दुर्निष्ठदुष्टतत्कटकान्तरात् ।
सहस्रद्वितयी तत्र शवानां निहिताभवत् ॥ २२३ ॥
विशुद्धपार्ष्णिसंत्यक्तभयाः प्राप्तबलोद्धताः ।
काश्मीरिका मतं चक्रू रणार्थे हृष्टमानसाः ॥ २२४ ॥
मध्ये ससैन्यास्तिष्ठन्तु मार्गेशाद्याः पुरान्तरे ।
राजानकाद्या मद्राश्च स्थामस्था यान्तु दिग्द्वयम् ॥ २२५ ॥
एकतश्चोज्झिताः सर्वे नश्यन्त्यल्पबलाः पुनः ।
इत्येकमतिकिष्टास्ते संमन्त्र्य कृतनिश्चयाः ॥ २२६ ॥
स्थामार्थमादिशँल्लोकं स्वप्रदेशादुपर्यधः ।
नावा सिन्धुं प्रतीर्याथ जोनराजानको द्रुतम् ॥ २२७ ॥
स्थामस्थान्पञ्चषान्हत्वा पलायनपरान्व्यधात् ।
वस्त्रवाजितनुत्रादि हृत्वा सैदबलान्तरात् ॥ २२८ ॥
काश्मीरिका व्यभाव्यन्त प्रयाताः प्रतिवासरम् ।
धिगन्यत्स्फुटमेवाहि येवसन्सैदसंनिधौ ॥ २२९ ॥
निर्लज्जास्ते व्यलक्ष्यन्त काश्मीरिकबलान्तरे ।
यतो याति ततश्चैति लोको विगतयन्त्रणः ॥ २३० ॥

बाले राजनि मन्दाज्ञे कोप्यजृम्भत विप्लवः ।
गृहेषु लुण्ठ्यमानेषु विटैर्विहितपेटकैः ॥ २३१ ॥
निरुद्धमार्गसंचारो देशोभूद्भयविह्वलः ।
मासद्वये व्यतीतेपि पारावाररणोद्यमैः ॥ २३२ ॥
जिगीषां नात्यजंस्तत्र सैदाः काश्मीरिका अपि ।
पूर्वमङ्कुरितः सैदवधे पल्लवितः क्रमात् ॥ २३३ ॥
परस्परं वैरतरुस्तदागाच्छतशाखताम् ।
दक्षिणे राजकोशादि वामे सेनाद्यवेक्ष्य च ॥ २३४ ॥
बलद्वयेपि विजयः संदिग्धः प्रत्यभाद्दिशाम् ।
पुंसां निरुद्धे संचारे नावा नद्यास्तटद्वये ॥२३५ ॥
स्त्रिय एव तदाकुर्वन्पारावारगतागतम् ।
पारादेत्य विटैर्लुब्धैर्मुषिते पथिकव्रजे ॥ २३६ ॥
अधिष्ठानादिदेशेषु मार्गः प्रचलितोभवत् ।
पारावारगतान्कांश्चिदन्योन्यच्छलनोद्यतान् ॥ २३७ ॥
निरुध्य प्रत्यहं छित्रान्क्रोधाच्छूले न्यरोपयन् ।
अवोचन्नेकदा सैदा भटान्काश्मीरमन्त्रिणः ॥ २३८ ॥
आयान्तु यदि शक्तिर्वो युध्यन्तु पुनरप्यलम् ।
सीमा वा दीयतां तावत्प्रतीक्षामो रणं प्रति ॥ २३९ ॥
नित्यं जनवधे लोका उद्विग्नाः शरवर्षणैः ।
भजतां विभवं सोत्र विधिर्यस्मै प्रयच्छति ॥ २४० ॥
निशम्येति पुरप्रान्ते सीमार्थं वामपार्श्वगैः ।
चिच्छिदुः संधितां रज्जुं तूर्णं सैदभटास्तटात् ॥ २४१ ॥
तितीर्षून्वैरिणो ज्ञात्वा सैदाः काष्ठीलतस्ततः ।
न्यधुर्हस्सनराजानकादीन्स्थामार्थमाकुलाः ॥ २४२ ॥

छिन्नेषु सेतुबन्धेषु सैदैर्नौपुरकादिषु ।
नगरीं दुर्गमां दुर्गतुल्यां चक्रुर्द्विषद्भयात् ॥ २४३ ॥
अथ काश्मीरिकाः प्रोचुः सैदांस्तीरान्तिकस्थितान् ।
नौसेतुबन्धरज्जुर्यद्वत्तश्छिन्नो भयेन नः ॥ २४४ ॥
पुरमात्रावशिष्टत्वादुत्तिष्ठध्वं कियच्चिरम् ।
पर्याप्तं भुज्यते धान्यं किं कुरुध्वं पुनः परे ॥ २४५ ॥
श्रुत्वेति सैदास्तांस्तारमूचुरित्थं स्वसेवकैः ।
अन्नाभावाद्बुभुक्षार्त्या न चलामो भयादितः ॥ २४६ ॥
का जुगुप्सा तुरुष्केषु सर्वमांसभुजो वयम् ।
यावत्पुंपशुगोमांसपर्याप्तिस्तावदास्यते ॥ २४७ ॥
पुरश्चेद्गम्यतेस्मान्कः शक्तो रोद्धुं त्वदन्तरात् ।
श्रुत्वेत्युत्पुलकास्तीरे जल्लालमल्लिकादयः ॥ २४८ ॥
एकत्र मिलिताः सर्वे चक्रुः संमन्त्र्य निश्चयम् ।
सैन्यं स्थामविभागेन विभज्य पथिभिस्त्रिभिः ॥ २४९ ॥
उत्तीर्य यामः शीर्यन्ति सैदाः कटकभेदतः ।
अन्यथैकत्र संनद्धा दुर्जेयाः सैदपक्षगाः ॥ २५० ॥
एकतश्चेज्जिताः सर्वाञ्जेष्यामोल्पबलानमून् ।
अस्माकं प्रबलं सर्वं न विलम्बोधुनोचितः ॥ २५१ ॥
श्रुत्वेति मद्रसंयुक्ता जोनराजानकादयः ।
मृत्युर्वा नो जयो वेति युद्धसंनद्धतां दधुः ॥ २५२ ॥
अथैकं मतमाश्रित्य स्थामस्थाः सैन्यनायकाः ।
पुराणतक्षकस्थानात्तीर्त्वा पर्वतमासदन् ॥ २५३ ॥
प्रौलभट्टादयो हस्तवालिकाख्यप्रदेशतः ।
नौभिस्तीर्णा धृतोत्साहाः सोत्सेकान्स्वभटान्व्यधुः ॥२५४ ॥

दृष्ट्वा धैर्यं द्विजस्यापि रणाग्रे सरतः क्षणात्।
गक्कादयो भटाः सर्वे शशंसुर्वीरमानिनः॥ ५५५॥

अन्योन्यप्रहृतिर्माभूदिति काश्मीरिका भटाः।
पत्रशाखा न्यधुर्मूर्ध्नि हर्तुं निजपरभ्रमम्॥ २५६॥

सैफडारादिवीरेषु शक्तयः करगा बभुः।
निर्गतास्तान्रिपून्हन्तुं मूर्तिमत्य इवान्तरात्॥ २५७॥

तानुत्तीर्णान्समाकर्ण्य सैदाश्चकितमानसाः।
आशिषं व्यसृजंस्तूर्णं प्राग्जयोद्धतमानसम्॥ १५८॥

संप्राप्तोभिवनायुक्तमठं तीराध्वना व्रजन्।
गिरिशृङ्गगतैर्दृष्टस्तैः शिलाभिरवार्यत॥ २५९॥

तच्छिलावर्षणत्रस्तस्तुरङ्गात्पतितः क्षितौ।
पदातिः स चलन्कृच्छान्निस्तीर्णो रणसंकटात्॥ २६०॥

तदीयं तुरगं बद्धखड्गं संनाहभूषितम्।
काश्मीरिकाः करगतं मूर्तं जयमिवासदन्॥ २६१॥

तं पराभूतमालोक्य तद्युद्धार्थं भटान्वितान्।
सैदाः पिरुजखानादीन्रात्रावेव व्यसर्जयन्॥ २६२॥

दुग्धाश्रमागता मीयाभाकेराद्याश्च तत्क्षणात्।
वर्षौघा इव गर्जन्तः प्रापुः पूपामठान्तिकम्॥ २६३॥

तावन्मद्रप्रतीहारडामराद्या महाभटाः।
संनद्धाः सुमनोवाटप्रदेशान्तं समासदन्॥ २६४॥

सैदखानादयः सैदहुसनादिसमन्विताः।
सैदानां सुभटाश्चान्ये प्रापुस्तत्रैव ते प्रगे॥ २६५॥

करवालाः स्फुरज्ज्वाला बभुः श्यामलकान्तयः।
भूपीडनादिव व्यालाः पातालविवरोद्गताः॥ २६६॥

अथोदतिष्ठत्तुमुलः समरः सैन्ययोर्द्वयोः ।
सखङ्गफलकक्षुद्रमद्रव्यूहसुदुःसहः ॥ २६७ ॥

भो वीराः समरेऽत्र युध्यत मुदा मा यात पश्चादमी
जेतारो यदि तद्धरन्ति सकलं सैदाः क्रुधा निर्घृणाः ।
प्राप्तश्चेद्विजयः सुखं स्वविभवात्स्वर्गेऽपि तच्चेन्मृता
युद्धादाविति मद्रपः सपरशुः काश्मीरिकानब्रवीत् ॥ २६८ ॥

पूर्वं पेरोजखानोऽग्रे निर्ययौ रणगर्वितः ।
तं पेरोजप्रतीहारो रामो राममिवाभ्यगात् ॥ २६९ ॥

अनभिज्ञतया युद्धे स्फुरन्तं वीक्ष्य तं द्रुतम् ।
स्वभटान्प्रैरयन्मद्रास्तत्तुरङ्गखुरच्छिदे ॥ २७० ॥

खड्गकृत्तखुराश्वोद्यत्प्लुतिनष्टरणक्रियम् ।
गक्काख्याः प्राहरन्सर्वे शक्त्या शक्तिसमन्वितम् ॥ २७१ ॥

तद्भृत्याः शाहिभङ्गीया भ्रमरा इव सारवाः ।
ददंशुः कटकं क्रुद्धाः स्फुरन्तः खड्गकण्टकैः ॥ २७२ ॥

पतितं संमुखं दृष्ट्वा तं काश्मीरा रणाङ्गने ।
जयोऽद्य वर्ततेऽस्माकमित्युक्त्वोत्साहमादधुः ॥ २७३ ॥

व्याहन्यमानाः काश्मीरैर्भटैर्मद्रसमन्वितैः ।
भृत्यास्ते शाहिभङ्गीयाः कृत्यं सत्वोचितं दधुः ॥ २७४ ॥

एहि तिष्ठात्र युध्यस्व क्व गच्छस्यधुना मम ।
इत्यन्योन्यं भटास्तत्रातर्जयन्रणगर्जितैः ॥ २७५ ॥

काश्मीरपृष्ठगः सूर्यः खड्गान्तः प्रतिबिम्बितः ।
जयोऽद्य युष्मास्वित्येव वक्तुं व्योम्नोऽवतीर्णवान् ॥ २७६ ॥

अहंपूर्विकया सर्वे ते वीरभ्रमरास्तदा ।
रणोद्याने स्फुटं चेरुर्यशःकुसुमलम्पटाः ॥ २७७ ॥

तद्रणाङ्गनरङ्गान्तः संगतास्ते भटा नटाः।
त्वङ्गदङ्गविभङ्गाढ्या नाट्यभङ्गिमदर्शयन्॥ २७८॥
जहाङ्गिराद्यास्तद्भृत्याः प्रविष्टाः संमुखे रणे।
विधाय युद्धं संनद्धा वीरवृत्त्या विचक्रिरे॥ २७९॥
ववर्ष शरधाराभिः स सैन्यकटकाम्बुदः।
स्फुरच्छस्त्रतडिज्ज्योतिर्युक्तो गम्भीरगर्जितः॥ २८०॥
सैदेषु भास्करस्तत्र संमुखस्थविभाकरः।
शौर्यशोभाकरः प्रापदग्रे भाः करवालभृत्॥ २८१॥
त्वङ्गत्तुङ्गतुरङ्गस्थो रणरङ्गान्तरे स्फुरन्।
सोङ्गहारसमासङ्गो नाट्यभङ्गिमदर्शयत्॥ २८२॥
प्रहारविक्षतं सर्वे मिलित्वापि रणान्तरे।
शेकुः संनाहिताश्वस्थं चिरात्पातयितुं क्षितौ॥ २८३॥
द्वित्रान्हत्वा भटान्वीरो वीक्षितः श्लाघ्यविक्रमः।
अभजद्वीरशय्यां स रक्तस्पन्दोत्तरच्छदाम्॥ २८४॥
येषां प्राणपरित्यागे निर्णयं बध्नतामपि।
रणयोग्येक्षणोपेक्षा नास्ति किं तैः पशूपमैः॥ २८५॥
सैदहुसनमुख्या ये काश्मीराः सैदपक्षगाः।
भाकरादीन्हतान्दृष्ट्वा रणं त्यक्त्वा पलायिताः॥ २८६॥
ततः काश्मीरसेनान्या वात्ययेव तटद्रुमाः।
भग्नास्तन्नीडनिःसृता भृत्याः शावा इवाहताः॥ २८७॥
न खड्गी न हयारोहो न चापी न च शक्तिमान्।
व्यावृत्य प्रेक्षितुं कश्चिन्नाशकद्विद्रुताद्बलात्॥ २८८॥
हठलुण्ठितविध्वस्ताः समस्तास्ते विरोधिनः।
वृक्षारूढानपि घ्नन्तः प्रापुस्ते नगरान्तरम्॥ २८९॥

आसमुद्रामठात्पूर्वाधिष्ठानान्तं निरम्बराः ।
मार्गेष्विन्धनगण्डौघा इवासन्निहिताः शवाः ॥ २९० ॥

केचित्कुल्यान्तरे मग्ना भग्नाः केपि रणान्तरे ।
केचित्प्रमुषिता नग्ना भयोद्विग्ना दिशोचलन् ॥ २९१ ॥

तद्वीरावयवैः कृत्तैः पूरिता विपुलैर्मही ।
तद्ग्रासार्थे प्रवृत्तस्य मृत्योरिव महानसः ॥ २९२ ॥

ये सुन्दरा विपुलभोगपुरंदराभा-
श्चेरुर्नरेशविभवप्रथितप्रपञ्चाः ।
नग्नान्विलोक्य भुवि तान्धृतदुष्टगन्धा-
न्कस्यापि शाम्यति न देहभवोभिमानः ॥ २९३ ॥

वरं मरणमेवास्तु रणे स्वर्गसुखप्रदम् ।
न सहेद्यतनस्वामिवृत्तियाच्ञाकदर्थनाः ॥ २९४ ॥

इत्युक्त्वा प्राविशन्युद्धे धीराश्वस्थोप्यकातरः ।
हबीबमीरः शस्त्रेण स श्लाघ्यमरणोभवत् ॥ २९५ ॥

अन्यान्प्रचलितान्दृष्ट्वापीक्षिताग्रासवैरिणः ।
पलायनेच्छा नैवाभूद्युयुत्सोर्यस्य मानसे ॥ २९६ ॥

छिन्नाङ्गुलिकरोप्यश्वमारुह्य स्वसुतान्वितः ।
अकरोत्क्षणमात्रं यः शस्त्रप्रचारणं रणे ॥ २९७ ॥

स्थामस्थितः पुरस्यान्ते स राजानकहस्सनः ।
हतः सेरङ्गमीराद्यैर्मारीकुल्यातटान्तगः ॥ २९८ ॥

प्रच्छिन्नाङ्गुलिहस्तेन सममस्य शिरो भटैः ।
नीत्वा न्यदर्शि हर्षार्थं मार्गेशादिसभान्तरे ॥ २९९ ॥

किमाकारनिकारेण कुर्वन्त्वस्यान्त्यसत्क्रियाम् ।
इत्युक्त्वास्मै स मार्गेशः शवमुक्तिमकारयत् ॥ ३०० ॥

योभूच्चिरं नृपगृहेखिलमन्त्रिवर्यो
धुर्यः पदेषु विभवोचितदानमानः ।
शोच्यां दशामितरवत्स गतः किलान्ते
धिग्वासनां भविषु शाम्यति या न भोगैः ॥ ३०१ ॥
स चेत्प्राप्तखलीकारस्तिष्ठेत्स सदने शमी ।
सर्वो मन्त्रिगणस्तस्य भवेच्चाटुपरो न किम् ॥ ३०२ ॥
पुनर्विभवलोभेन सैदपक्षं समाश्रयन् ।
आगामिकम्पनेशाधिकारतां प्रार्थयन्निजाम् ॥ ३०३ ॥
अज्ञातदैववृत्तान्तो ययौ लोकेषु हास्यताम् ।
अथ वा नाशकाले स्याद्बुद्धिः कुपथगामिनी ॥ ३०४ ॥
कुर्वन्ति ये परशरीरनिकारभाजौ
दर्पान्धलोचनयुगाः स्वविचारबाह्याः ।
ते प्राप्नुवन्ति वधमाशु तथा यथामी
लोका वदन्ति नरकोचित एष मर्त्यः ॥ ३०५ ॥
धिग्धिग्ग्रैवतखानं तं वीरंमन्योपि यो रणात् ।
निर्गत्य सभयः प्राप्तः फाखुवाविषयान्तरम् ॥ ३०६ ॥
त्यक्तोत्तुङ्गतुरङ्गः स निःशस्त्रिर्भृतकोज्झितः ।
तत्र प्राकृतवेशेन जुगोप स्वं भयाकुलः ॥ ३०७ ॥
क्रुद्धैर्दावूदमार्गेशवधान्मार्गपतेर्भटैः ।
स चौर इव वाट्यन्तर्हतोप्यात्तशिरोभवत् ॥ ३०८ ॥
छित्त्वोत्तमाङ्गं तस्याशु निन्युर्मन्युनिवृत्तये ।
मृतमार्गेशपुत्रस्य शवारात्रिकतां भटाः ॥ ३०९ ॥
स चेत्पलायितः सैदशिबिरं प्राप्नुयान्निशि ।
तद्वत्तज्जीवरक्षा स्यात्सुबुद्धिः पापिनां कुतः ॥ ३१० ॥

तद्भृत्यैर्लुण्ठितो देशो गोवधो यत्पुरे कृतः ।
जाने भृत्यापराधेन प्राप्तान्ते तादृशी दशा ॥ ३११ ।

दौहित्रोऽपि महीभर्तुर्जातो वीरकुलादपि ।
तत्पापेनाभवत्तस्य चित्तं वीररसोज्झितम् ॥ ३१२ ॥

विप्रा राजसुताः सैदाः काश्मीरा अपरेऽपि ये ।
सहस्रसंख्याः समरे तद्दिने प्रलयं ययुः ॥ ३१३ ॥

निहतानीकसुभटसमूहान्तरलक्षितान् ।
भूमिदाहाय निष्कर्ष्टुं नाभूत्कस्यापि पौरुषम् ॥ ३१४ ॥

ये सर्वचङ्गाः पीनाङ्गा भोगैर्मण्डलवर्धिताः ।
याता घर्मोत्थदुर्गन्धास्ते श्ववायसभोज्यताम् ॥ ३१५ ॥

रक्ताक्तकर्तरीशक्तिमुद्गरद्रुघनादिभिः ।
शाल्मलिद्रुमवत्पुष्पैर्बभुर्युद्धगता भटाः ॥ ३१६ ॥

स्मृत्वा रुद्रविहाराग्निदाहं सैदकृतं क्रुधा ।
अलाभपुरदाहाय मार्गपोऽग्निमदापयत् ॥ ३१७ ॥

ज्वालाजालकरालोऽसावग्निर्वेश्मोत्थदारुणः ।
अलाभदीननगरं दग्धारण्यमिवाकरोत् ॥ ३१८ ॥

श्रीमत्सैदहमादानखानगाहोदितानलः ।
राजप्रजापचारोत्थतत्क्रोधाग्निरिवाद्युतत् ॥ ३१९ ॥

हतेषु भास्कराद्येषु पलाय्यान्येषु यात्स्वपि ।
विदधुर्नगरे लुण्ठि तद्भृत्याः श्वपचादयः ॥ ३२० ॥

आसञ्जन्मदरिद्रा ये ते महाढ्यत्वमाययुः ।
सदैवाढ्या दरिद्रत्वमुत्पिञ्जोपप्लवे तदा ॥ ३२१ ॥

केचिच्छवान्विचिन्वन्तो यत्र कुत्रापि तिष्ठतः ।
प्रीतिं प्राप्तैस्तदीयार्थैर्ययुः कापालिका इव ॥ ३२२ ॥

विरुद्धसंचयापूर्णगृहलुण्ठिविधायिनाम् ।
अभूत्परस्परं युद्धं समांसास्थि शुनामिव ॥ ३२३ ॥
आदावेकेन यन्नीतं तस्मादन्येन तद्धृतम् ।
तस्मादप्यपरेणेत्थं मात्स्यो न्याय इवोत्थितः ॥ ३२४ ॥
द्विधा जयप्रवाहो यस्तद्वाहिन्योरभूत्पुरा ।
एकपार्श्वागमात्सोत्र शाख्युन्मूलनमातनोत् ॥ ३२५ ॥
आढ्यान्द्विजवणिक्प्रायान्पौरान्नित्यसुखोर्जितान् ।
मुष्णन्तस्तद्भटाश्चक्रुर्दरिद्रान्दुःखभागिनः ॥ ३२६ ॥
दारुणोष्मचयात्तत्तद्वस्तुनाशार्दितान्यपि ।
पौराणां समदह्यन्त सदनानि मनांसि च ॥ ३२७ ॥
नगरान्तः कुलीनानां पुण्याः कन्याश्च योषितः ।
विटाः केप्यधमाश्चक्रुर्हठसंभोगदूषिताः ॥ ३२८ ॥
व्यधायि यत्र निर्माणं कल्पान्तस्थिरताशया ।
कोटिकोटिधनं दत्त्वा दग्धं तद्भस्मसादगात् ॥ ३२९ ॥
आसदन्केपि केप्युच्चैरनदन्केप्यलुण्ठयन् ।
दस्यवो दक्षिणे पारे क्षीबा इव जयोद्धताः ॥ ३३० ॥
न शीधुचषकोप्यास्त येषामुत्सवतर्पणे ।
सहस्रसंख्याः कुम्भानामम्भोवन्नगराद्धृताः ॥ ३३१ ॥
केचिद्बन्धुवियोगार्ताः केचित्संचयवञ्चिताः ।
विरुद्धत्वकृताक्षेपा जितरुद्धभुवः परे ॥ ३३२ ॥
बहवो दुःखिताश्चैरुः शतैकीयोभवत्सुखी ।
तत्तद्रणविपन्नैश्च क्षतैः प्रेतैः स्ववेश्मनि ॥ ३३३ ॥
उच्चावचैर्जनैः सार्धं सहस्रद्वितयी मृता ।
इत्थं षष्ठितमे वर्षे श्रावणप्रतिपद्दिने ।
एकान्तविजयात्तेषां तत्तल्लोकक्षयोभवत् ॥ ३३४ ॥

पूर्वमङ्कुरितः सैदवधात्पल्लवितः क्रमात् ।
परस्परं वैरतरुस्तद्दिने फलितोभवत् ॥ ३३५ ॥

पौराणां वीरवर्गः प्रतिदिनमहरत्संचयं वञ्चयित्वा
दुःस्थावस्थः समस्तः कृषिफलहृतिभागास्त वास्तव्यलोकः।
उच्छेदः शाटवाटावनिसफलतरुष्विन्धनार्थं दुरन्तः
सैदद्वैधात्समुत्थः प्रवरमुखपुरोपप्लवोभूत्समन्तात् ॥ ३३६ ॥

अत्रान्तरे वधं श्रुत्वा सैदाः काश्मीरिकोज्झिताः ।
आलिखानमुखास्तस्थुर्दासमात्रावशेषिणः ॥ ३३७ ॥

द्वित्रान्निहत्य नगरे निवृत्तः सेत्वभावतः ।
मीयामहम्मदः प्रापत्तावत्स्वशिबिरान्तरम् ॥ ३३८ ॥

भाकरादीन्हताञ्श्रुत्वा सैदा भीता अपि व्यधुः ।
द्वित्रान्निहत्य नगरे पुनर्युद्धाय निश्चयम् ॥ ३३९ ॥

पश्चात्प्रतीर्य मार्गेशो हन्यान्नस्तद्रणोस्त्विह ।
इत्युक्त्वा ताजभट्टस्तान्निन्ये त्रासाविसूत्रताम् ॥ ३४० ॥

अस्मिन्नवसरे पारादागतो युक्तिपूर्वकम् ।
सैदानादाय रावत्रः स्वालयं तान्व्यसर्जयत् ॥ ३४१ ॥

कृत्वा बालनृपेन्दुं तं सैदाभ्रपटलोज्झितम् ।
पौरानानन्दयामासुर्मन्त्रिणो मरुतो यथा ॥ ३४२ ॥

दुर्योधनैकशरणाः कृतशल्ययोगा
ये धर्मजातिविरसाः कलिदत्तकर्णाः ।
अन्यायवृत्तिधृतराष्ट्रकृतावसादा-
स्ते कौरवा इव रणे न जयं लभन्ते ॥ ३४३ ॥

राजधानीं समानीय नवां पद्मपुरान्तरात् ।
खानगाहं नवीचक्रुर्दग्धं श्रीनगरान्तरे ॥ ३४४ ॥

बाबसैदहमादानखानगाहो नदीतटे ।
पूर्णस्तत्पुण्यसंभारस्तदाकार इवोत्थितः ॥ ३४५ ॥
सर्वस्वमपहृत्याथ सैदास्ते सकुटुम्बकाः ।
मण्डलादालिखानाद्या निरवास्यन्त मन्त्रिभिः ॥ ३४६ ॥
एकमत्येष्वमात्येषु काश्मीरेष्वविशङ्किताः ।
ययुः परशुरामाद्याः स्वदेशं प्राप्तसत्क्रियाः ॥ ३४७ ॥
शिशौ दत्त्वा राज्यं वयमिह भजामः सुखमिति
व्यधुः स्वार्थे शिष्टा गलितमतयः सैदपतयः ।
हतेष्वेवं तेषु प्रसभमभजन्मन्त्रिपदवीं
परे तत्तज्जुष्टां विधिरिह बलीयान्न पुरुषः ॥ ३४८ ॥
मीयाहस्सनसामग्रीं नाग्रामादिप्रमेयजाम् ।
जल्लालठक्कुरोगृह्णात्तत्पुत्रो लहरादिकम् ॥ ३४९ ॥
गृहीत्वा बाङ्गिलं राष्ट्रं स्वकं मार्गेशमागतः ।
मखूयादिप्रमेयांश्चाभजच्छ्रीमाअहाङ्गिरः ॥ ३५० ॥
साक्षाश्रमादिराष्ट्रेषु स्वाम्यभूत्सैफडामरः ।
अन्यां च ग्रामसामग्रीं सोदरेषु यथोचिताम् ॥ ३५१ ॥
परिहासपुराधीशो जोनराजानकोभवत् ।
सैन्याधिकारनिर्दैन्यस्वातन्त्र्योज्झितयन्त्रणः ॥ ३५२ ॥
इब्राहिमश्च मार्गेशो द्वारपालाधिकारभाक् ।
चक्रे सैदादिभृत्यानां रक्षामक्षामपौरुषः ॥ ३५३ ॥
राज्ञोधिकारसामग्रीं भूमेर्द्रव्यावलीमिव ।
महाभूता इवामात्याः संभूय व्यदधुर्नवाम् ॥ ३५४ ॥
एको मार्गपतेः पक्षष्ठक्कुरो डामरोपमः ।
राजानकीयो दीप्तास्ते सर्वेग्नय इवाद्युतन् ॥ ३५५ ॥

आत्मेव निष्क्रियः साक्षिमात्रं बालनृपोभवत् ।
सर्वं प्रकृतिनिष्पन्नं राज्यतन्त्रमभूत्तदा ॥ ३५६ ॥

विभजन्तो भुवं सर्वां यथेच्छं स्वेषु केवलम् ।
अलेखयन्नृपं पत्रे स्वाङ्गीकाराक्षरत्रयीम् ॥ ३५७ ॥

कष्टप्रदाः प्रजानिष्ठा दुष्टभृत्यविचेष्टिताः ।
यथेष्टं समचेष्टन्त हृष्टास्तेरिष्टचेष्टया ॥ ३५८ ॥

स्वपक्षरक्षणे दक्षाः परपक्षेष्टखण्डनाः ।
तार्किका इव ते तस्थुर्वितण्डा वादशिक्षिताः ॥ ३५९

मण्डलं तापयन्ति स्म सर्वे तीक्ष्णकरा न के ।
कल्पान्तकाले भुवनं द्वादशार्का इवोदिताः ॥ ३६० ॥

श्वाक्रन्दितोल्कादाहैश्च भूरिभूकम्पसंपदा ।
वेपमानो जनो जज्ञे प्रत्यावृत्तमुपद्रवम् ॥ ३६१ ॥

शिशौ नृपे व्यधुः पीडां विशां चैतन्नियोगिनः ।
आमया इव देहानां वार्धके शक्तिवर्जिते ॥ ३६२ ॥

नृपतेर्यदि मत्सरात्सहाया
रचयन्ति प्रबला मिथो विरोधम् ।
कुपिता इव धातवः शरीरं
क्षपयन्ति प्रसभं मर्हार्द्धि राज्यम् ॥ ३६३ ॥

ये सर्वकण्टकास्तीक्ष्णाः परेषां छिद्रकारिणः ।
करभाणामिवैतेषां ते तेप्यासन्नातिप्रियाः ॥ ३६४ ॥

पैशुनोपायनाद्भेदं नयद्भिः प्रतिवासरम् ।
चाक्रिकैः कृतसंचारैर्वैरं प्रौढिमनीयत ॥ ३६५ ॥

उक्तं यन्नैव केनापि स्वबुध्या परिकल्पितम् ।
तेषां तद्भृत्यपैशुन्यं हृद्यं काव्यमिवाभवत् ॥ ३६६ ॥

इत्थं मन्त्रिहृदादर्शवैशद्यान्योन्यबिम्बिताः ।
तद्भृत्यपैशुनश्वासैर्मालिन्यमभजन्त ते ॥ ३६७ ॥
अथ मार्गपतेरुच्चपदवीं प्राक्क्रमागताम् ।
नासहन्तापरे रम्यां चक्रवाका इवैन्दवीम् ॥ ३६८ ॥
इहास्माभिर्हृताः सैदा यद्भीत्या विद्रुतोप्ययम् ।
नृपस्यास्य सभाज्येष्ठः स्थापितः कुरुते मदम् ॥ ३६९ ॥
इत्यादि शृण्वंस्तद्भृत्यवर्गान्मार्गपतिस्ततः ।
तादस्थ्यं राजकार्येषु विरक्तः सोभजद्रुषा ॥ ३७० ॥
बह्रामखाननयनोत्पाटनेन निजं वपुः ।
विशामनाशिषां पात्रं जोनराजानकोनयत् ॥ ३७१ ॥
शस्त्राधिपत्यानौचित्यनिग्रहानुग्रहक्रमैः ।
ग्रहाणामिव तेषां स क्रूरो राहुरिवाभवत् ॥ ३७२ ॥
छुन्दानकादिदेशस्थग्राम्याणामनियन्त्रणः ।
लोत्रभूम्यपहारेण तद्देशेशोपि सोभवत् ॥ ३७३ ॥
सैदद्वैधान्तरे लुब्धैः सर्वत्र मुषिताः प्रजाः ।
तत्पदार्थैर्गृहे पूर्णां कोष्ठागारावलीं व्यधात् ॥ ३७४ ॥
यत्कष्टेनार्जितं लोकैर्बलात्काराद्धृतं धृतम् ।
स्वं ब्रह्मदेयमिति यत्परस्वं वेत्ति लुब्धधीः ॥ ३७५ ॥
संगृह्य वाहिनीः सर्वास्तदीया हृतजीवनैः ।
और्वाग्निरिव तृप्तोसौ न बभूव कदाचन ॥ ३७६ ॥
द्वेषान्निरर्थकाक्षेपे ग्रामे वा नगरान्तरे ।
नाशकद्रक्षितुं कश्चिद्बलिना तेन पीडितम् ॥ ३७७ ॥
यदि धर्मधिया कश्चित्प्रवृत्तो दीनरक्षणे ।
स तद्गुरुत्तरै राजसदस्याप खलीकृतिम् ॥ ३७८ ॥

स्वप्रमेयेषु वास्तव्याल्लुँब्धान्निरपराधिनः ।
अन्येपि पीडयामासू रोगा इव नियोगिनः ॥ ३७९ ॥

राजा शिशुर्गतवया बहवः सहाया
यत्रातिमत्सरभृताश्च मिथः स्वतन्त्राः ।
राज्याङ्गभङ्गमसमं नृपतेर्दिशन्त-
स्तत्राचिरात्समुदयन्ति न के ह्यनर्थाः ॥ ३८० ॥

अत्रान्तरे बाह्यदेशे यात्रार्थं यौ विसर्जितौ ।
पद्राजानकष्ठक्कुराह्मदश्चापतुः पुरम् ॥ ३८१ ॥

तद्दर्शनापदेशेन श्रुत्वा किमपि मन्त्रिणाम् ।
नगरे नागमद्दूतैर्मार्गेशः शङ्कितो भृशम् ॥ ३८२ ॥

ससैफडामरेणाशु गत्वा स चकितो गृहे ।
वैदेशिकभटाव्हानात्साशङ्कः सोनयन्निशाम् ॥ ३८३ ॥

शङ्क्येषु सदनातेषु प्राप्तस्तन्मतमास्थितः ।
अह्मदष्ठक्कुरो जोनराजानकमथावधीत् ॥ ३८४ ॥

शस्त्रव्रणमुखोद्गच्छद्रक्तसंसिक्तमण्डपम् ।
तद्गृहे तं शवं दृष्ट्वा न को रोमाञ्चितोभवत् ॥ ३८५ ॥

दत्तकन्यमयं जन्यमवधीद्गृहमागतम् ।
दिव्यं कृत्वापि साश्वस्तं धिग्भोगाभ्यासवासनाम् ॥ ३८६ ॥

मिथोसहिष्णवो भेदान्मन्त्रिणः प्रभविष्णवः ।
विनश्यन्त्यचिरेणैवं द्रोहेणेत्यपि केचन ॥ ३८७ ॥

केप्यूचुः स यथा सैदानवधीन्मद्रपैः सह ।
वर्षेणैकेन तत्पापात्तद्वद्व्यापादितोरिभिः ॥ ३८८ ॥

भृत्या वृथैव रक्ष्यन्ते पोषिता ये सहस्रशः ।
नैकोपि तेभ्यस्तस्यान्ते प्राणत्राणक्षमोभवत् ॥ ३८९ ॥

अर्जितं यद्यथैवाशु तत्तथैव हृतं परैः ।
न तिष्ठन्ति चिरं गेहेष्वन्यायोपार्जिताः श्रियः ॥ ३९० ॥
पापं पुण्यं बलं दार्क्ष्यं परं स्वं दूषणं स्तुतिम् ।
नो वेत्ति राजपुरुषः कदाचिद्विधुरे विधौ ॥ ३९१ ॥
वैदेशिकभटैः किं नस्त्याज्या सैन्याधिकारिता ।
इत्युक्तोपि स पुत्रेण नाग्रहीद्भाग्यवर्जितः ॥ ३९२ ॥
विपरीता मतिः पुत्रे विश्वासः परसेवके ।
जायते गतभाग्यानां विनाशे प्रत्युपस्थिते ॥ ३९३ ॥
वैदेशिकभटान्मेने यत्सजातीनिवान्वहम् ।
अत्रत्याञ्छस्त्रिणो वीरान्मेने भीरून्परानिव ॥ ३९४ ॥
ससैफडामरो वीरवरस्तच्छौर्यशङ्कितः ।
भीतः समार्पिपच्छस्त्रं वीरवृत्तेर्न निश्चयः ॥ ३९५ ॥
जल्लालठक्कुरस्तावद्राजधान्यङ्गने स्थितः ।
बद्धोन्तः स्वैर्द्वारपालैर्गतिः क विधुरे विधौ ॥ ३९६ ॥
भास्वानपि प्रतिदिनं मृदुतीक्ष्णयभिन्न-
स्तां तां बिभर्ति गगनान्तरगोप्यवस्थाम् ।
नित्याकुलस्य मनुजस्य बलप्रभावे
को निश्चयो भवति तत्र विचित्रवृत्तौ ॥ ३९७ ॥
मसूदडामराद्यास्ते छिन्ननौसेतुबन्धनाः ।
प्राग्वत्तेजालद्रगर्डे विदधुः सैन्यसंग्रहम् ॥ ३९८ ॥
शृङ्गारसीहनिकटं ययुः शूरपुराध्वना ।
ठक्कुराः सालियाद्यास्तेप्यसक्ताः स्वयमागताः ॥ ३९९ ॥
कारागारान्तरं प्रापुः कस्य स्युः संपदः स्थिराः ।
जीराकनामा तद्भृत्यः साहसी नगरान्तरात् ।
ठक्कुराह्लादतुरगान्हृत्वा राजपुरीं ययौ ॥ ४०० ॥

इत्थं तत्सैद्वधतो जोनराजवधोधिकः ।
पाददाहादिवासह्यो गलरोगो व्यथावहः ॥ ४०१ ॥

यावन्नरस्त्यजति कार्यकृदेकचिन्तां
चिन्तान्तरं सृजति तावदमुष्य धाता ।
याते कशिम्नि शशिनः किल पूर्णिमाप्तौ
संजायते द्युतिहरो ग्रहणप्रचारः ॥ ४०२ ॥

निष्प्रतिद्वन्द्वि नैश्चिन्त्यं मार्गेशो यावदाप सः ।
तावच्छुश्राव संप्राप्तं पुत्रमादमखानजम् ॥ ४०३ ॥

स यथाभ्यन्तरं प्राप्तो यथा राज्यं ग्रहीतवान् ।
बाल्यात्प्रभृति वृत्तान्तं तत्खानस्य ब्रवीम्यहम् ॥ ४०४ ॥

पितुः श्रीजैननृपतेः प्रमये निर्गतो बहिः ।
आदमखानो वित्राणः प्रपेदे मद्रमण्डलम् ॥ ४०५ ॥

भावीश्वरांशतैश्वर्यप्राप्तिसूचकपर्वणि ।
शिवरात्र्यन्तरे तस्य तत्रस्थस्य सुतोजनि ॥ ४०६ ॥

जनकेस्य दिवं याते तुरुष्कसमरान्तरे ।
मातामहगृहे चन्द्रो ववृधेम्बुनिधाविव ॥ ४०७ ॥

काले तात्तारखानेन रक्षितः स गतः स्वयम् ।
जालंधरमहीपीठे निनाय कतिचित्समाः ॥ ४०८ ॥

जहांगिरोस्य मार्गेशः सैदभीत्या गतो बहिः ।
सोपधिं व्यसृजल्लेखं धर्तुं पैतामहं पदम् ॥ ४०९ ॥

तत्तारखानप्रमये ततः खानमिमं पुनः ।
सुतो हस्सनखानोस्य कंचित्कालमपालयत् ॥ ४१० ।

तुरुष्कान्वञ्चयित्वाथ विहितोत्साहसाहसः ।
खानोमितपरीवारः प्रापद्ग्रहणमण्डलम् ॥ ४११ ॥

इतः काश्मीरिका दूता मार्गेशेन विसर्जिताः ।
शृङ्गारसीहेनानीतास्तावद्राजपुरीं प्रति ॥ ४१२ ॥
ततो राजपुरीनाथो मार्गेशद्वेषनिष्ठितः ।
फताहखानमानिन्ये स्वान्तिकं स्वाश्रयेच्छया ॥ ४१३ ॥
जोनराजानकवधात्कश्मीरेभ्यो विनिर्गतैः ।
डामरैरेधराजानठक्कुरदौलुतादिभिः ॥ ४१४ ॥
तत्रस्थैः शिश्रिये खानस्तरुर्मधुकरैरिव ।
प्रथां निन्ये यथा पूर्वं वुप्येदेवात्मजोभवत् ॥ ४१५ ॥
यौनसंबन्धबद्धोपि मार्गरक्षाधिकारभाक् ।
मसूदनायकः सोपि खानपक्षं समाश्रयत् ॥ ४१६ ॥
दीनो ग्राम्यजनो दुष्टबहुनायकतार्दितः ।
तदागमनवार्तां तां क्षते क्षारमिवाविदत् ॥ ४१७ ॥
सापराधर्णिकान्यायप्रेष्यविरुद्धसेवकाः ।
चौरा विटा दरिद्राश्च तुतुषुः खानवार्तया ॥ ४१८ ॥
ग्रामे वा नगरे वापि त्यक्त्वा गृहकुटुम्बकम् ।
बद्धाशो राजविभवे न कः प्राप तदन्तिकम् ॥ ४१९ ॥
तांस्तान्देशाद्विनिर्यातान्खानो गृह्णन्समृद्धिमान् ।
ऐच्छल्लुब्धप्रतिष्ठः स राज्ञः प्रत्यभियोगिताम् ॥ ४२० ॥
पौत्रः श्रीजैननृपतेर्योग्योयमिति सर्वतः ।
त्यक्त्वान्यान्सर्वराष्ट्रेभ्यस्तमेवाशिश्रियज्जनः ॥ ४२१ ॥
तद्वार्ताश्रवणात्तुष्टाश्चौराद्याश्छन्नमास्थिताः ।
तत्कालमुत्प्लवन्ति स्म मत्स्या इव तडागगाः ॥ ४२२ ॥
न मम महती सेनैकोरिर्जितोस्त्यपरो महा-
न्क्षितिरतिबले रुद्धा भिन्नाः परैश्चरसेवकाः ।

स वरतुरगोस्वस्थः कोशे न चाधिकृतो हित-
स्तरुमिव घुणास्तास्ताश्चिन्तास्तुदन्ति विभुं न किम्॥४२३॥
तुष्टो जहाङ्गिरस्तावत्तत्प्राप्त्या प्रेषितोपधिः।
तावत्तन्मतगं ज्ञात्वा सचिन्तः समपद्यत ॥ ४२४ ॥
अहितोन्मूलनोद्भूतदेशैकविभवाप्तितः।
सुखेच्छुः प्रत्युत प्राप दुःखमुद्भूतविप्लवः ॥ ४२५ ॥
प्रवर्धमानया नित्यं खानागमनवार्तया।
वेपमानोभवल्लोको वात्ययेव वनावलिः ॥ ४२६ ॥
चाक्रिकाश्चतुराः खानमन्त्रिणोथ जिगीषवः।
इत्थं लेखाङ्कितं दूतं व्यसृजन्मार्गपं प्रति ॥ ४२७ ॥
भो भो मार्गपते गर्वसर्वखर्वितविक्रमः।
काश्मीरान्तः सुपर्वेव भवांश्चर्वितसद्यशाः ॥ ४२८ ॥
सोयं खानस्त्वयानीतो लेखैस्तौरुष्कदेशतः।
उपेक्ष्यते कुलस्वामी कथं मार्गपतेधुना ॥ ४२९ ॥
स्वयं कृतं कथं कार्यं पश्चात्तापाय जायते।
शिशौ राज्यं परिस्थाप्य भुज्यते मण्डलं परैः ॥ ४३० ॥
व्यवहारोचितः शुद्धः सोयं किं तिष्ठते वहिः।
अथ वा पितृभागं चेत्प्रयच्छस्यस्य मण्डलात् ॥ ४३१ ॥
बहिरेवास्त्वयं राजाप्ययमस्त्वन्तरे स्थितः।
अथ किं बहुनोक्तेन मान्यो यदि न तेस्त्ययम् ॥ ४३२ ॥
रणोभयबलवधात्पापं ते परिणंस्यति।
श्रुत्वेति लेखं मार्गेशः खानदूतोपदर्शितम् ॥ ४३३ ॥
प्रत्युत्तरमयं पत्रं तस्मै दत्त्वाब्रवीदिति।
भो भो मण्डलगोप्तारो भोक्तारो नृपसंपदाम् ॥ ४३४ ॥

सर्वथा हितकर्तारः पुराणोक्तं विचार्यताम्।
कश्मीरा पार्वती तत्र राजा ज्ञेयः शिवांशजः॥ ४३५॥
नावज्ञेयः स दुष्टोपि विदुषा भूतिमिच्छता।
देशेस्मिंस्तपसा राज्यं प्राप्यते न पराक्रमैः॥ ४३६॥
अन्यथादमखानाद्यैः किं नाप्तं स्वक्रमोचितम्।
अन्यथाप्येतन्न चिरादनौचित्यचितं फलम्॥ ४३७॥
क्रमेण येनायातोसौ तं त्यक्त्वा त्वद्बलार्थिनः।
सति राज्येस्य विघ्नाय प्रवेशो दीयते कथम्॥ ४३८॥
न मयायं धृतो राज्ये बालोप्यन्याभिषेचितः।
कः शक्नोत्यधुना हन्तुं मयि संनिहिते स्थिते॥ ४३९॥
खानोयं सर्वथा पूज्यो यद्यस्मन्मतमिच्छति।
अग्रेसरारुणः सूर्यः पूज्यते ह्युदयोन्मुखः॥ ४४०॥
श्रियः कृतघ्नभावाप्ता न सुखाय चिरं नृणाम्।
भोगा रोगाय देहानामपथ्याशनसंभृताः॥ ४४१॥
किं वान्यत्सैदहस्तस्थो यद्वद्राजा विमोचितः।
तद्वत्तद्धस्तगः सोयं प्राप्यते तद्विधेर्मतम्॥ ४४२॥
इति लेखं विसृज्यैतत्पक्षपातात्क्रुधान्वितः।
रथ्याधिकारं जग्राह मसूदस्य जहाङ्गिरः॥ ४४३॥
बह्रामनायकादीनां दत्त्वा तन्मार्गरक्षणम्।
शृङ्गारराजानकादीन्स्थामार्थं व्यसृजद्द्रुतम्॥ ४४४॥
अथ खानं पुरस्कृत्य नायकोसुखदायकः।
क्रुद्धः पथोपहरणात्प्रापच्छूरपुरान्तरम्॥ ४४५॥
तद्भृत्याः खशडोम्बाद्यास्तद्विसृष्टाः पदे पदे।
देशे मडवराज्यान्तश्चक्रुरुत्पिञ्जमञ्जसा॥ ४४६॥

एकतो नृपतेः सेना काष्टाखानस्य चान्यतः ।
दंष्ट्राद्वयी यमस्येव लक्षिता सर्वभक्षिका ॥ ४४७ ॥
प्राक्सैदविप्लवात्खानविप्लवः सोधिकोभवत् ।
पाददाहादिवासह्यो गलरोगो व्यथावहः ॥ ४४८ ॥
तस्कराक्रान्तपथिको बलवन्निहताबलः ।
अराजक इवानीशो देशः कष्टां दशामगात् ॥ ४४९ ॥
जग्मुर्दक्षिणपारादीन्प्रमेयांस्तद्दिगाश्रिताः ।
गृहीत्वा गोधनं सर्वं त्यक्त्वा स्ववसतीर्भयात् ॥ ४५० ॥
खेरीं चार्धवनं राष्ट्रं भ्रष्टमग्निशिखेव सा ।
अतापयन्महोष्माढ्या प्रविष्टा कटकद्वयी ॥ ४५१ ॥
राजसैन्यं समालोच्य प्रसुप्तं चारचक्षुषा ।
एकदा जीरकाद्यास्ते स्वास्कन्दं शिबिरे ददुः ॥ ४५२ ॥
प्रजागरचरन्यासशस्त्राभ्यासविवर्जिताः ।
सर्वे पशूपमास्त्रासाद्विदध्रुः शिबिरान्तरात् ॥ ४५३ ॥
सेनापतेर्निजाः केपि युद्धादौ भेदिताः परैः ।
चक्रुस्तत्कटकं हत्वा द्रोहं वैरिसमाश्रयात् ॥ ४५४ ॥
राज्यं नश्यति हृष्यति प्रतिदिनं बाह्या खशाली न का
लोकः क्लिश्यति लुण्ठदाहकरणैश्चौरः स्वकं पश्यति ।
सेना भ्रश्यति धीरवीरसहिताप्यन्विष्यति स्वं रिपुः
काश्मीरप्रभविष्णुषु प्रभवति द्वेषात्स्वभेदो यदा ॥ ४५५ ॥
द्रोग्धृंस्तानवलोक्यैव स्रस्तां ज्ञात्वा स्ववाहिनीम् ।
सेनानीश्चकितः सैन्यात्पलायनपरोभवत् ॥ ४५६ ॥
हतेथ विद्रुते तस्मिन्पश्चादेत्य महाभटैः ।
सर्वस्वाप्त्या जहर्षाथ खानस्तत्प्रथमं जयात् ॥ ४५७ ॥

तुरुष्कदेशाद्यद्रुद्ध्वा खानः प्राप्तो निरर्गलः ।
स भागसीहस्तत्पक्षात्केनापि प्रचलन्हतः ॥ ४५८ ॥
अथ मल्लिशिलास्थाने तुष्टः खानो जयोन्मदः ।
स्वसैन्यसंग्रहं कुर्वञ्जिगीषुः शिबिरं व्यधात् ॥ ४५९ ॥
विकरालान्भटान्क्षिप्त्वा करालविषयावनौ ।
मुमुषुर्निष्करालम्भान्वास्तव्यान्तस्य शस्त्रिणः ॥ ४६० ॥
अत्रान्तरे मार्गपतिर्गृहीत्वा बालभूपतिम् ।
तज्जयाय बलोद्युक्तो निर्ययौ नगरान्तरात् ॥ ४६१ ॥
प्राक्सैदकद्नाभ्यस्तन्यस्तवस्तुविलुण्ठनाः ।
पुराद्गृहरमां भीताः पौरा ग्रामेषु न्यक्षिपन् ॥ ४६२ ॥
निष्कृष्टवस्तुभावा सा मुषितेव वराङ्गना ।
अभवद्राजरहिता नगरी न गरीयसी ॥ ४६३ ॥
वैदेशिकटकाटोपकोपोत्कररटद्भटः ।
गुप्तिकोड्डारभूवाटे पाटवाच्छिबिरं व्यधात् ॥ ४६४ ॥
संस्थाप्य तत्र भूपालं त्रिधा कृत्वा स्ववाहिनीम् ।
कल्याणपुरगं श्रुत्वा खानं योद्धुं विनिर्ययौ ॥ ४६५ ॥
द्राभग्रामान्तसीमान्ते समासन्नोधिकार्तधीः ।
तस्थौ खानान्तिकं प्राप्य स खानमरुगान्तरे ॥ ४६६ ॥
क्रमराज्यस्फुरत्प्राज्यचक्रवाटादिदुःसहम् ।
वैडूर्यभट्टः पाश्चात्त्यां जग्राह गिरिपद्धतीम् ॥ ४६७ ॥
सपेरोजप्रतीहारगक्कराजसुतादयः ।
चतुरङ्गोपमां लीलां क्षणं चक्रुः पुरो गताः ॥ ४६८ ॥
अथैकतः स्वकाश्मीरवैदेशिकबलान्विताः ।
मसूदनायकसुता योद्धुं व्यूहात्समाययुः ॥ ४६९ ॥

फलकासिस्फुरत्पक्षा नदन्तोऽन्तिकमागताः ।
चेरुः पङ्क्त्या भटास्तत्र हंसा इव नभोन्तरे ॥ ४७० ॥
यावत्प्रवृत्तो योद्धुं तांस्तावद्वीक्ष्याग्रमागतान् ।
अह्लादठक्कुरव्यूहो निरीहः समपद्यत ॥ ४७१ ॥
चेलाह्लिकाभुजः केपि गर्जन्तो जलदा इव ।
स्फुरच्छस्त्रतडिज्ज्वालाः सोत्फाला निर्ययुर्मृधे ॥ ४७२ ॥
विषमा पङ्कसंकीर्णा जाड्यदुर्मार्गदूषिता ।
तेषामापततां साध्या वासनेव निजाजिभूः ॥ ४७३ ॥
वैदेशिकभटान्दृष्ट्वा नटत्खेटकपीटकान् ।
चटका इव जग्मुस्ते विदूरं पाटवोज्झिताः ॥ ४७४ ॥
न संस्तम्भयितुं सेनामशकत्तां पलायिनीम् ।
अह्लादठक्कुरोद्दीर्णां सेतुभङ्गां नदीमिव ॥ ४७५ ॥
अहमहमिकायातजातघातव्रणार्दिताः ।
प्राणत्यागेन ते केपि चक्रुर्वेतननिष्कृतिम् ॥ ४७६ ॥
स्रवच्छोणितसिक्ताङ्गाः शालिक्षेत्रगताः शवाः ।
यागोपहारपशुतां ययुः कार्षिकभूमिषु ॥ ४७७ ॥
सेना खानस्य वात्येव सा नैर्ऋतदिगागता ।
तत्तल्लोकक्षयं चक्रे वेगभग्नभटद्रुमा ॥ ४७८ ॥
केपि काश्मीरिकास्तत्र वैदेशिकभटानले ।
शस्त्रज्वालावलीदीप्ते जुहुवुः श्रीफलं वपुः ॥ ४७९ ॥
किं नामोद्दीरणैस्तेषां दृष्ट्वा व्यूहं समागतम् ।
तिर्यग्भिरिव पातुं स्वं भीत्या यैर्यैः पलायितम् ॥ ४८० ॥
प्रमेयभाजो मुख्या ये दृष्टा राजसभान्तरे ।
अदृष्टपूर्वं संत्रासं तेप्यशस्त्रिवदाययुः ॥ ४८१ ॥

वीरवृत्त्या त्यजन्प्राणान्केवलं श्लाघ्यतामगात् ।
तस्य त्रिचतुरास्त्यक्तप्राणा अनुचरा रणे ।
दिवं यियासोर्भोगार्थं बभूवुस्ते पुरःसराः ॥ ४८२ ॥
हतावशिष्टान्विद्राव्य ते खानस्य महाभटाः ।
निवृत्ता मार्गपत्यग्रे स्वीयभ्रान्त्या समाययुः ॥ ४८३ ॥
मसूद्खानः क्वेत्येवं वदन्तो विजयोद्यताः ।
वीरा हस्सनमीराद्या ज्ञाता मार्गपतेर्भटैः ॥ ४८४ ॥
पञ्चशस्तस्य संबधिभृत्यास्ते नौरुजादयः ।
सपौरभट्टाश्चान्ये च हता मार्गपतेः पुरः ॥ ४८५ ॥
विमुखोभूत्कियत्कालं यः स सांमुख्यमाययौ ।
वालभूभृत्प्रभावेण कश्मीरकटके विधिः ॥ ४८६ ॥
मार्गेशस्याथ वा स्तुत्यं धैर्यं तस्यात्र संयुगे ।
संनद्धः सबलस्तस्थौ जयस्तम्भ इवाचलः ॥ ४८७ ॥
पदैकमात्रं पश्चाच्चेदगमिष्यच्च तत्स्थलात् ।
काश्मीरकटकस्यास्य नावशिष्येत किंचन ॥ ४८८ ॥
भिन्नप्रकृतिसंधानकौशलं श्रीजहाङ्गिरे ।
भिषजीव तदा दृष्टं भैषज्यं सांनिपातके ॥ ४८९ ॥
प्रागल्भ्यमप्रतिहतं प्रतिभानमोज-
स्तत्तत्प्रयोगचतुरत्वमसंभ्रमश्च ।
एतानि यस्य समयेप्यतिसंकटे स्यु-
स्तुष्टेव तं प्रति समेति रणे जयश्रीः ॥ ४९० ॥
खानोस्मत्करमाप्तोत्र मिथ्योद्घोष्यात्र संयुगे ।
रणात्प्रचलितान्दूरं युक्त्या सर्वानुपानयत् ॥ ४९१ ॥
मार्गेशमधुसांनिध्ये तद्रणोपवनान्तरे ।
ते वीरभ्रमराश्चेरुः स्फुरत्पक्षरवोद्धताः ॥ ४९२ ॥

अथ खानस्य शिबिरे गङ्गाद्या जयदुर्मदाः ।
नीतावशिष्टां सामग्रीं हत्वा भूरीनलुण्ठयन् ॥ ४९३ ॥
इबराहिममार्गेशः सभृत्यः समराग्रगः ।
मसूदनायकमुखान्विमुखांस्तर्जनैर्व्यधात् ॥ ४९४ ॥
अन्ये शृङ्गारसीहाद्या दृष्ट्वा तत्सैन्यमद्भुतम् ।
भेडावनपथात्तूर्णं विद्रुताः स्वां भुवं ययुः ॥ ४९५ ॥
सर्वं राजपुरीसैन्यं सदैन्यं वेष्टितं भटैः ।
दत्त्वाभयं ररक्षाजौ गङ्गो गणपतिर्यथा ॥ ४९६ ॥
त्यक्त्वा संनाहसामग्रीं केप्येते विद्रुता द्रुतम् ।
मुषिताः सखशैर्डोम्बैः पृष्ठभग्नाः प्रशान्तयः ॥ ४९७ ॥
वृक्षानपि वने जक्षुररयोनु लगन्त्यमी ।
वैदेशिकैर्हृतं यत्तत्ग्रामेषु जनपीडया ॥ ४९८ ॥
काश्मीरिकेभ्यो मुषिता निक्षेपमिव ते ददुः ।
शीतज्वरार्दिताः केचित्केचिच्छ्रान्ता बुभुक्षया ।
वैदेशिकाश्च काश्मीराः शतसंख्याः क्षयं ययुः ॥ ४९९ ॥
संरूढं कमपि निपातयत्यकाण्डे
पातार्हं नयति च कंचन प्ररूढिम् ।
संकल्पाविषयविचित्रकाकताली-
वार्यौघस्तरुमिव पूरुषं विधाता ॥ ५०० ॥
यादृक्सुवासनः खानस्तादृशस्तस्य चेङ्गटाः ।
भवेयुः किं न जायेत किं तु धर्मानुगो जयः ॥ ५०१ ॥
इत्थं फतहखानेस्मिन्प्राप्ते कश्मीरमण्डलम् ।
एकषष्टितमे वर्षे पुरुद्वच्छ्रावणान्तरे ॥ ५०२ ॥
कटकद्वयसंयोगे कल्याणपुरसंनिधौ ।
अत्रत्यानां च बाह्यानां तत्तल्लोकक्षयोभवत् ॥ ५०३ ॥

मैत्रर्क्षेशनिसंयोगं मीलापं शनिजीवयोः ।
भौमाब्दं तत्क्षये हेतुं देशे दैवविदो विदुः ॥ ५०४ ॥
श्रीजैननृपते राज्ये षड्दर्शनरताः प्रजाः ।
हृष्टाः स्वधर्मनिरता निरातङ्का निरीतयः ॥ ५०५ ॥
तस्मिन्स्वर्गं गते राज्ञि नष्टाचारेत्र मण्डले ।
प्रजापचाराल्लोकानां क्षयोभूदिति मे मतम् ॥ ५०६ ॥
तथा हि वणिजः केचित्स्वाचारं हिन्दुकोचितम् ।
त्यक्त्वा पुरान्तरे चक्रुर्हत्वा गोमांसभक्षणम् ॥ ५०७ ॥
येनैव पितरो याता येन याताः पितामहाः ।
तद्दर्शनेत्र तत्पुत्रास्त्रपन्ते मौसुलप्रियाः ॥ ५०८ ॥
प्रत्यब्दं तिथिकार्याणि पुराणोक्तानि कानिचित् ।
विस्मृतानि दुराचारात्कथं न स्युर्दुरापदः ॥ ५०९ ॥
मण्डलेस्मिन्दुराचारचातुर्वर्ण्यविराजिते ।
प्रसङ्गपतिताचारविपर्यासादितीरितम् ॥ ५१० ॥
राजाक्रान्तः परैर्मिथ्या वार्तयेति विसूत्रितः ।
मार्गेशस्ताजभट्टादीन्धृत्वा स्वशिबिरं ययौ ॥ ५११ ॥
पश्चाच्चेदलगिष्यत्स नष्टांस्तान्वलवर्जितान् ।
न किंचिदवशिष्येत खानस्य चलतः पथि ॥ ५१२ ॥
मार्गानभिज्ञो मार्गेशः सर्वेप्युभयवेतनाः ।
दायादुःस्थितिं लोके काङ्क्षन्तः स्वार्थलिप्सया ॥ ५१३ ॥
प्रैरयंस्तद्रणाद्गन्तुं मार्गेशं चाप्यदीदरन् ।
सनृपं सैन्यमुत्थाप्य ततो जिष्णुर्जेहाङ्गिरः ।
जमालामरुगास्थानं ययौ स विजयोर्जितः ॥ ५१४ ॥
किमेते मिलिताः खानमिति तेन विसर्जिताः ।
ददाह ताजभट्टः स ग्रामान्माङ्गल्यनादगान् ॥ ५१५ ॥

तत्तद्दग्धगृहोज्ज्वालधूमजालाकुलं नभः ।
घनकालोद्भवाद्दीप्ततडिदभ्रोपमां दधौ ॥ ५१६ ॥
कृतं यद्बाह्यदेशेषु काश्मीरैर्दिग्जयक्षणे ।
दाहलुण्ठ्यादिकं तद्वद्दृष्टमत्रैव मण्डले ॥ ५१७ ॥
अकिंचनाञ्जनान्नग्नान्विज्ञस्यै समुपागतान् ।
अद्यैव जातान्दृष्ट्वा तान्न कोऽप्याच्छादनं ददौ ॥ ५१८ ॥
तत्रत्यास्तद्धृतं कुप्यं रूप्यं धेनूः पशूनपि ।
दृष्ट्वोच्छ्वासाकुलाश्चक्रुराक्रन्दमुखरा दिशः ॥ ५१९ ॥
सर्वस्वहरणं यद्वत्कृतमस्मास्वहेतुकम् ।
युष्मास्वपि तथा भूयादचिरेण विरोधिभिः ॥ ५२० ॥
तत्पापफलमेतेषु त्रिषु तन्मरणक्षणम् ।
फताहशाहराज्याप्तौ दृष्टं लोकैर्विगर्हितम् ॥ ५२१ ॥
उत्पिञ्जोत्पादनाद्देशे शृण्वन्नित्यादि दूषणम् ।
प्रजापापादसंधित्सुर्मार्गेशः स न्यवर्तत ॥ ५२२ ॥
स नृपो नगरं प्राप्तो विधाय विजयोत्सवम् ।
उच्चावचान्खानपक्षगतान्सर्वानदण्डयत् ॥ ५२३ ॥
एकं खानाग्रगं ज्ञात्वा शिष्टं तस्य कुटुम्बकम् ।
अबाधत न को देहे दुष्टरोग इवोल्बणः ॥ ५२४ ॥
कदाचित्सुप्रीतो जनयति सुखं सार्वजनिकं
कदाचिद्वक्रेच्छः सृजति जनतामीतिचकिताम् ।
फलं नीचं चोच्चं भविषु परिवृत्त्या विदधतो
ग्रहस्येवाकाशे गतिरिह विचित्रा बत विधेः ॥ ५२५ ॥
कंचित्कालं दरत्रस्तः खानत्राणविवर्जितः ।
यायावकिंचित्करतामवग्रह इवाम्बुदः ॥ ५२६ ॥

अत्रान्तरे स्थितः खानः सभैरवगलान्तरे ।
अचिन्तयत्पुनर्देशप्रवेशं नायकोर्जितः ॥ ५२७ ॥
मासद्वयमतिक्रम्य कश्मीराभिमुखस्ततः ।
आययौ स पुनः खानः सत्राण उद्भटैर्भटैः ॥ ५२८ ॥
तस्मिञ्छूरपुरं प्राप्ते स नृपोथ जहाङ्गिरः ।
निर्ययौ नगरात्तूर्णं संपूर्णः सैन्यसंपदा ॥ ५२९ ॥
प्राग्वत्स गुप्तिकास्थाने निषण्णः शिबिरान्तरात् ।
गक्कराजसुतं रात्रौ सोशृणोद्विद्रुतं द्रुतम् ॥ ५३० ॥
आरोहणक्षणे तस्य तुरङ्गस्त्रासमग्रहीत् ।
क्षणं स शकुनज्ञोपि नातिष्ठन्निष्ठुरः क्रुधा ॥ ५३१ ॥
गृहीतभूरिवित्तोपि यत्रैष द्रोहितामगात् ।
कोन्यस्तिष्ठति तत्रेति त्रस्तः प्रत्यागतोभवत् ॥ ५३२ ॥
सुलग्ने निर्गतो भूयो मार्गेशः शिबिरान्तरात् ।
उपायांश्चिन्तयांचक्रे खानस्य बलभेदनम् ॥ ५३३ ॥
अत्रान्तरे शूरपुराज्जीरकाद्या महाभटाः ।
प्रविश्य नगरे रात्रौ बन्धनस्थानमोचयन् ॥ ५३४ ॥
ते सर्वे बन्धनान्मृत्युद्वारादिव विनिर्गताः ।
सैफडामरमुख्यास्ते संप्रापुर्विजयेश्वरम् ॥ ५३५ ॥
स सैफडामरः पूर्वं बन्धने स्वप्नमैक्षत ।
केनाप्यन्यपदद्वन्द्वं छिन्नं शस्त्रेण तन्निशि ॥ ५३६ ॥
वीरस्य बन्धनं ह्यस्य स्फूर्जत्पक्षस्य रक्षणम् ।
सोष्मणः पतितं मेने वह्नेर्वस्त्रावगूहनम् ॥ ५३७ ॥
तथापि रक्षणं वह्नेरिव वस्त्रावगूहनम् ।
जयापीडपुराद्दुर्गाद्बन्धनं नगरे कथम् ॥ ५३८ ॥

इत्यपायोप्युपायस्य जातो मार्गपतेर्यतः ।
इब्राहिमः स मार्गेशस्तावत्पश्चाद्विनिर्गतः ।
शंशनायकमुख्यानां बहूनां कदनं व्यधात् ॥ ५३९ ॥

ठक्कुराह्मदजीराकप्रतीहारान्वयादयः ।
इत्थं तत्साहसं चक्रुर्लङ्घितक्रोशषट्कयः ॥ ५४० ॥

विपदि समनुभूय कोपि कष्टं
भवति पदं नृपसंपदां नितान्तम् ।
कनकमनलपातघातमास्वा
शिरसि विभाति नृपस्य मौलिरूपम् ॥ ५४१ ॥

कारापञ्जरनिर्मुक्तः पक्षीवाक्षतपक्षतिः ।
पुनर्जातमिवात्मानममन्यत स डामरः ॥ ५४२ ॥

पूर्वं जयपुरे दुर्गे योभूद्रुद्धःसहोदरः ।
काराप्राकारमुल्लङ्घ्य रज्जुनैकोपि निर्गतः ॥ ५४३ ॥

रुद्धः सुप्तः पुनर्बद्धो नगरे बन्धनालये ।
निश्चिन्तितं वधस्तत्र द्विषैर्द्वित्रदिनान्तरे ॥ ५४४ ॥

एवं कष्टात्ततो मुक्तः प्राप्तः खानान्तिकं क्रमात् ।
प्रधानपुरुषाख्यातिं प्रापत्प्रकृतिमध्यगः ।
स सैफडामरस्तत्र यथासंख्यमतस्थितः ॥ ५४५ ॥

रामो रावणवञ्चितो यदि गृहान्नैवागमिष्यद्वनं
सुग्रीवः स च वालिना कृतपदो नैवाघटिष्यद्रुषा ।
लङ्कां प्राप्य रिपून्निहत्य समरे जेताभविष्यत्कथं
संयोगं सुखदुःखयोः प्रतनुते धातैव भूत्यै द्वयोः ॥ ५४६ ॥

राज्यार्थी विच्युतो देशात्खानो वीराप्तिलम्पटः ।
डामरा मार्गपक्रुद्धः सर्वनाशात्पदच्युतः ॥ ५४७ ॥

एवमन्योन्यसापेक्षं नाभविष्यत्स्वयं यदि ।
प्रविश्य देशे राज्याप्तिः कथमस्य भविष्यति ॥ ५४८ ॥

राजा विभाति बहुवीरसमाश्रयेण
वीरा भजन्ति च तदाश्रयणेन शोभाम् ।
अन्योन्यसंगतिरभङ्गुरभङ्गिरेषां
बालाङ्गनाकनकभूषणवद्विभाति ॥ ५४९ ॥

तेन प्राप्तेन सा खानसभा तत्र व्यराजत ।
मुक्तालतेवाङ्गनाङ्गे नायकेन शुभात्मना ॥ ५५० ॥

अत्रान्तरे मार्गपतिश्चकितस्तत्समागमात् ।
संधित्सुः शेखवाहावमुखात्खानं व्यसर्जयत् ॥ ५५१ ॥

एधराजानको रिगडामरः केशवो बुधः।
राजाग्रमेत्य संध्यर्थं निन्ये राजपुरीपतिम् ॥ ५५२ ॥

तावद्गदायरात्रुत्रमुखादाश्वास्य मार्गपः ।
शृङ्गारसीहं तं भेदमनयद्द्रविणार्पणैः ॥ ५५३ ॥

नीत्वा मार्गपतेः पुत्रं संधित्सुः स बलद्वये ।
न्यवारयद्रणक्षोभं यावद्राजपुरीपतिः ॥ ५५४ ॥

तावन्मार्गेशपुत्रं तं रोद्धुमन्यैर्विनिश्चितम् ।
नामन्यत स यत्नेन साशङ्का मन्त्रिणोभवन् ॥ ५५५ ॥

यावत्प्रजासु सनृपासु विधिर्विरुद्धो
दायाददुःस्थितिरुपायशतैर्न याति ।
देहे दुराधिनिहते भिषजां प्रयुक्त्या
रोगाः कथं प्रविगलन्ति कृताधिकाराः ॥ ५५६ ॥

खानान्तरङ्गैराक्षिप्ते भिन्ने राजपुरीपतौ ।
अकस्मादुदभूत्क्षोभः सर्वसैन्यभयावहः ॥ ५५७ ॥

गक्कश्रृङ्गारसीहाद्यास्त्रस्ता राजपुरीं ययुः ।
खानोऽपि सबलो भीतो ययौ प्राग्वद्यथागतम् ॥ ५५८ ॥
केचिज्जीराकमीराद्याः प्रापुर्मार्गेशसंनिधौ ।
जल्लालठक्कुरप्रेम्णा कृतमाध्यस्थ्यसंविदः ॥ ५५९ ॥
एवं क्षोभेण सा सेना खानस्याङ्गतरङ्गिता ।
ययौ सहस्रधा दीर्णा सेतुभङ्गादिवापगा ॥ ५६० ॥
अथ मार्गपतिः श्रुत्वा तद्वृत्तान्तमनुद्रुतः ।
युयुत्सया ससैन्यः स प्रापच्छूरपुरान्तरम् ॥ ५६१ ॥
तत्र दूतमुखाच्छ्रुत्वा क्रमराज्यमुपद्रवम् ।
शाहिभङ्गबलप्राप्त्या चिन्ता द्वैगुण्यमादधे ॥ ५६२ ॥
निवृत्य स ततो राज्ञः प्राप्तः सुय्यपुरान्तरम् ।
बबन्ध नौरुजो खानं युक्त्या यत्साधु तद्व्यधात् ॥ ५६३ ॥
स हि तद्दिवसे प्राप्स्येन्मुषणञ्श्रीनगरं विटैः ।
किं तु तत्काङ्क्षितं क्रूरं न सिद्धं पौरपुण्यतः ॥ ५६४ ॥
सोपेक्ष्य मार्गपं तत्र ढौकितं क्रमराज्यतः ।
पदार्थराशौ दत्त्वाग्निं तद्रुषा भस्मसाद्व्यधात् ॥ ५६५ ॥
अन्यायतः प्रतिदिनं समुपार्ज्य वित्तं
यद्दानभोगरहितं निहितं गुहान्तः ।
तत्संप्रयाति कृपणेषु कृतानुतापं
भूपालसादनलसादरिदस्युसाद्वा ॥ ५६६ ॥
ततस्तत्सहितः प्राप्तो नगरं स जहाङ्गिरः ।
जयेन तावन्मात्रेण नगरे स व्यजृम्भत ॥ ५६७ ॥
सैदान्निष्काशितान्देशात्स्वपुत्रवधकानपि ।
लेखैरानाययामास सोपयोग्यतया स तान् ॥ ५६८ ॥

तदन्तरे जम्भवाटे वसन्खानो बलोर्जितः।
मृगानिव हरिस्तत्र विदधे दुर्दशान्खशान्॥ ५६९॥

सप्तविंशतिसंख्यान्स कश्मीरविषयान्यथा।
तावतीः सिन्धुरीस्तत्र व्यधाद्दुःस्थः पराक्रमैः॥ ५७०॥

सार्धं मल्हानहंसैस्तत्कटकः सुभटोत्कटः।
मद्रमण्डलमुल्लुण्ठ्य तुरुष्कांश्चकितान्व्यधात्॥ ५७१॥

स मद्रमण्डलं जित्वा दत्त्वा राजपुरीपतेः।
जिष्णुश्चैत्रे पुनः प्राप तद्युतो नायकालयम्॥ ५७२॥

गृहं दैवतवत्प्राप्तं खानं तं मानयन्गुणैः।
मसूदनायकोमुष्मिन्नाभवद्भक्तिखण्डितः॥ ५७३॥

सागरस्त्यजति चेन्निजां स्थितिं
पश्चिमोदयमुपैति चेद्रविः।
क्षत्रियः शरणमागतेर्थिनि
प्रायशश्चलति न स्वधर्मतः॥ ५७४॥

स सैन्यसंग्रहं कृत्वा छयिल्लकटकान्वितः।
तस्थौ खानो गिरिशृङ्गे वैरिभङ्गविधित्सया॥ ५७५॥

रोगैरिव भटैर्ध्वस्तसमस्तगृहवस्तुभिः।
वास्तव्यानां स्थितिर्दुःस्था गेहे देहे यथाभवत्॥ ५७६॥

अत्रान्तरे बन्धनान्तर्गतं पृष्ठकवाटितम्।
भीतो व्यापादयामास जीराकं नगरेध्वपः॥ ५७७॥

तच्छ्रुत्वा राजलोकश्च सर्व एव विरागभाक्।
आश्वासभ्रातकत्वेन दुरुक्तिमुखरोभवत्॥ ५७८॥

ज्येष्ठे मासि श्रुतानिष्टो मार्गेशः कष्टनिष्ठितः।
अतिष्ठत्स नृपो मल्लशिलापृष्ठेतिनिष्ठुरः॥ ५७९॥

द्रङ्गमार्गनिरोधेन सर्वोप्युभयवेतनः ।
जनो बलद्वयं गन्तुं निराशः समपद्यत ॥ ५८० ॥
विशां निर्लवणं भोज्यमश्नतामत्र मण्डले ।
मार्गेशव्यञ्जनं नाम श्रुतं हास्यावहं न कैः ॥ ५८१ ॥
सार्धे पले सैन्धवस्य क्रयोभून्नगरान्तरे ।
दीनारपञ्चविंशत्या दुरापं नागरैरपि ॥ ५८२ ॥
द्वाषष्टितमवर्षेपि कश्मीरागमनोत्सुकम् ।
खानं श्रुत्वा मार्गपतिर्नीतिकौटिल्यमादधे ॥ ५८३ ॥
दौहित्रं हाजिखानस्य खानमिस्कन्दराभिधम् ।
कम्पनाधिपतिं कृत्वा स्थामार्थं स व्यसर्जयत् ॥ ५८४ ॥
मसूदनायकीयं च राष्ट्रं दत्त्वा स्वगुप्तये ।
यः शराजानकं चापि ससैन्यं प्रत्यमुच्यत ॥ ५८५ ॥
सर्म देशसुखेनाथ प्रालेये तनुतां गते ।
स्वसैन्यसहितः खानो राजपुर्याः समाययौ ॥ ५८६ ॥
प्राप्तं खानं समाकर्ण्य तं भैरवगलान्तरे ।
मार्गे शूरपुरे रोद्धुं मार्गेशः सनृपो ययौ ॥ ५८७ ॥
प्रवेशरोधः खानस्य तदूर्ध्वगलवर्त्तितः ।
राहुदेहेमृतस्येव देशेभूच्चक्रभीतितः ॥ ५८८ ॥
पशुपादिष्टमार्गेण पुरुद्धच्छ्रावणान्तरे ।
ततोगाद्गिरिमुल्लङ्घ्य खानः खाचगलन्तरात् ॥ ५८९ ॥
ताजभट्टादिसैन्यौघो गुसिकोड्डारभूतले ।
क्षुब्धं वायुरिवागत्य चक्रे खानबलार्णवम् ॥ ५९० ॥
ध्वनिदुन्दुभिनादेन तर्जयन्परितो जनान् ।
खानः सकटको भीत्या नगरं व्याकुलं कृतम् ॥ ५९१ ॥

उड्डीयेवागतं श्रुत्वा साश्चर्यो मार्गपस्ततः।
ससैन्यः सनृपस्तूर्णं तद्युद्धाय समाययौ ॥ ५९२ ॥

उड्डामरो डामरः स शौर्यश्रीगरुडामरः।
रणे डामरयोगेन्तर्बभावुच्छुष्मरुद्रवत् ॥ ५९३ ॥

केचित्सैदभटास्तत्र युध्यन्तः सुभटैः सह।
अनिवर्तितया याता दिव्यस्त्रीसुखभागिताम् ॥ ५९४ ॥

श्वभ्रपातरणाघातक्षतानां तत्समागमे।
शवानां राशयस्तत्र पतिताः समरान्तरे ॥ ५९५ ॥

न सैदयुद्धे नो खानागमप्रथमसंगरे।
भटक्षयोभवद्यादृग्गुसिकोड्डारसंगरे ॥ ५९६ ॥

प्रमेयभाजोप्यासन्ये रणे मुख्या निजोचितम्।
शौर्यं नादर्शयन्केचित्साक्षिभूता इव स्थिताः ॥ ५९७ ॥

पातनेनेव वृक्षस्य पक्षिशावा इव च्युताः।
गता हताः क्षताश्चासन्यत्र तत्र शवव्रजाः ॥ ५९८ ॥

पूर्वापकारी यो यस्य ग्रामे वा नगरेभवत्।
स तस्य बाधं कृतवान्दुर्बलस्य बली तदा ॥ ५९९ ॥

मसूदनायकस्तत्र सायकायुधवर्षणे।
रुद्धाश्वो विजहौ प्राणान्भावि केन विलङ्घ्यते ॥ ६०० ॥

कृत्वान्यान्युद्धगान्यत्र मार्गेशोगात्स्वरक्षया।
श्रीसैफडामरो वीरयुतस्तत्रैव सोभवत् ॥ ६०१ ॥

यो गवेष्यः स चावाप्त इति तुष्टो भटावृतः।
प्रथमं प्राहरत्तस्य मूर्ध्नि श्रीसैफडामरः ॥ ६०२ ॥

अलंशिरोहैदरश्च स च क्रूरा इव ग्रहाः।
मुखे भुजे कपाले च भ्रन्तस्तं विवशं व्यधुः ॥ ६०३ ॥

अथ मार्गपतेः स्वर्णमयीमङ्गलमालिकाम् ।
सचामरां डामरेशो जयश्रियमिवासदत् ॥ ६०४ ॥
उपेक्षितं तं तत्रस्थैर्निजैराश्वस्तमानसम् ।
ररक्ष केवलं प्रीतो जात्यश्वः समराच्चलन् ॥ ६०५ ॥
विहितारित्रप्रसराः सचिवाः सममेकपार्श्वगताः ।
यत्र सुशस्त्रप्रचिता मज्जति नौकेव राजश्रीः ॥ ६०६ ॥
वैदेशिकभटैर्द्रोहे विहिते समरागमे ।
तावत्ते कत्थवाडाद्या निन्युः खानं यथागतम् ॥ ६०७ ॥
खानो राजभटैर्बद्धो रणे मिथ्येति वार्तया ।
स सैफडामरो युद्धात्त्रस्तधैर्यो न्यवर्तत ॥ ६०८ ॥
तत्तद्वराश्वसामग्रीं गृह्णञ्शूरपुराध्वना ।
समरोड्डामरः सैफडामरः खानमासदत् ॥ ६०९ ॥
इत्थं तृतीयवारं स प्रविष्टो मण्डलान्तरात् ।
वधं कृत्वा विनिर्गत्य खानः पर्णोत्समागतः ॥ ६१० ॥
अधर्मबहलः कालः सर्वे द्रोहपरायणाः ।
राजा शिशुतरश्चायं स्वतन्त्रं मन्त्रिमण्डलम् ॥ ६११ ॥
अविधेया निजाश्चामी खानपक्षप्रतीक्षिणः ।
पौरा निरनुरागाश्च निष्कोशं नृपमन्दिरम् ॥ ६१२ ॥
सत्ता नाम न वृद्धस्य सर्वसामर्थ्यवर्जिता ।
इति संचिन्तयञ्शस्त्राघातजातव्यथाकुलः ।
मासौ द्वौ गमयामास मार्गेशोपि स्ववेश्मनि ॥ ६१३ ॥
दृष्ट्वा महार्घमणिमौक्तिकविद्रुमौघा-
रत्नाकरं श्रयतु सोपि सुलाभलोभात् ।
यस्तान्महाभयकरान्मकरांस्तदीया-
न्वीर्येण वारयितुमुज्झितभीः समर्थः ॥ ६१४ ॥

अत्रान्तरे पुनः खानश्चाटिकासारपर्वतात् ।
इतो यातैर्भटैः सार्धं लब्धत्राणः समाययौ ॥ ६१५ ॥
तस्मिन्नभ्यन्तरे प्राप्ते मुदितैरिव पर्वतैः ।
तदहःपतितं दध्रे तुषारं सुसिताम्बरम् ॥ ६१६ ॥
ग्रामान्प्रज्वलितान्दृष्ट्वा तद्वार्ताचकितस्ततः ।
मार्गेशो वाङ्गिलं त्यक्त्वा सबलो योद्धुमभ्यगात् ॥ ६१७ ॥
तावन्मितपरीवारो बहुरूपान्तराद्गत ः ।
प्राप दामोदरोड्डारभूमिं डामरसंयुतः ॥ ६१८ ॥
स नृपो मार्गपः पश्चात्तनवायुरिवोर्जितः ।
सैन्यं न्यवेशयत्तत्र सातदैवतसंनिधौ ॥ ६१९ ॥
सव्यूहो जातयुद्धेहो निशान्ते सैफडामरः ।
बभञ्ज मार्गपानीकं दामोदर इवोत्थितः ॥ ६२० ॥
चित्रं हैदरशाहस्य यन्न सिद्धं त्रिधागमैः ।
अहो हीनबलस्यापि सिद्धमस्य विधेर्वशात् ॥ ६२१ ॥
किमन्यदल्पसैन्योपि खानः कश्मीरकुञ्जरान् ।
हतविद्रुतविध्वस्तयूथान्सिंह इव व्यधात् ॥ ६२२ ॥
प्राग्वत्सोनिष्टमाशङ्क्य मार्गपः सैफडामरात् ।
अन्येषां वीक्ष्य ताटस्थ्यं प्रपेदे नगरान्तरम् ॥ ६२३ ॥
छिन्नेषु सेतुबन्धेषु प्राक्सैदद्वैधवत्तदा ।
पारावारगताः पौरा द्वैराज्याकुलतां दधुः ॥ ६२४ ॥
पेरोजप्रतिहाराद्याः प्राप्ता मडवराज्यतः ।
नृपपक्षं परित्यज्य खानपक्षं समाश्रयन् ॥ ६२५ ॥
स्वभेदजर्जरं ज्ञात्वा सैन्यं छित्त्रा निशोनयन् ।
सैदवत्स्कन्दभवने किंकर्तव्यतयाकुलः ॥ ६२६ ॥

एकदा सर्वसैन्येशं कृत्वा मीयामहम्मदः ।
नसराजानकयुतो द्रोहं स्वामिनि तद्व्यधात् ॥ ६२७ ॥
यथा चित्तं तथा कायो यस्य स्यात्साहसक्षमः ।
तस्यात्मनिरपेक्षस्य कर्तव्यं किं न सिध्यति ॥ ६२८ ॥
भोगिनेयं नृपपदेप्युपेक्ष्य स्वार्थलुब्धधीः ।
द्रोग्धाभूद्यत्स तेनाभूत्सर्वनाशस्य कारणम् ॥ ६२९ ॥
नष्टसैन्यः सदैन्योथ मार्गेशः शरणं भयात् ।
ज्यल्लालठक्कुरं प्रायात्पूर्वाश्रमस्थितं हितम् ॥ ६३० ॥
यथैव स विरुद्धानामकरोच्छसनादिकम् ।
तादृशीं स दशां प्रापद्धिक्चला राजसंपदः ॥ ६३१ ॥
सप्तग्रहानुगुणधारितसप्तवार-
वर्णांशुकोपचितवेशविशेषभूषः ।
बह्रामभूप इव योभवदष्टभोगः
प्राप्तो दशामितरवत्स धिगस्तु लक्ष्मीम् ॥ ६३२ ॥
क्व नृपः क्व मदीयं तत्सर्वस्वं क्व परिच्छदः ।
नास्मरत्तद्दिने किंचित्प्राप्तो मुनिगुहान्तरम् ॥ ६३३ ॥
राजदारापहारोत्थपापभारादिवार्दितः ।
तद्भ्राता नाशकद्गन्तुं नावं स्त्रीसहितोविशत् ॥ ६३४ ॥
अन्ये सैन्याः सदैन्या गिरिबिलविगलद्वासरा धूसराभाः
संतिष्ठद्दिष्टरिष्टोद्गतघनविलसद्वृष्टिनिर्नष्टचित्ताः ।
द्विष्टैर्दुष्टैर्गरिष्ठैः परिहृतवसनाः पृष्ठलग्नैर्निकृष्टाः
कारागारान्तराले पशव इव बलात्ते निरुद्धा विरुद्धाः॥६३५॥
गर्जन्तो मुमुषुः परे जनपदान्दुष्टाः खशा दस्यव-
स्तद्भीत्या परिहृत्य सर्वमचलग्नमा नरा वा स्त्रियः ।

मार्गेष्वप्यबला हता बहुबलैः पूर्वोपकारस्मृतेः
सोभूद्राज्यविपर्ययोतिभयदः कल्पान्तकालोपमः ॥ ६३६ ॥

सर्वस्वोल्लुण्ठने तस्मिन्धनिनां दुःसहे पुरे ।
आसन्दरिद्रा अत्याढ्या आढ्या दारिद्र्यभागिनः ॥ ६३७ ॥

ये स्युर्द्रुमाः सदलपुष्पफलाभिरामा
नद्यस्तरङ्गतरलाः सरवाः पिकाद्याः ।
ते शीर्णशुष्कजलमूकमुखा हिमर्तौ
किं तन्न यद्भवति कालविपर्ययेण ॥ ६३८ ॥

ते राजवल्लभा रम्यास्ताः स्त्रियस्ते च सेवकाः ।
कथावशेषतां यातास्तस्मिन्नष्टदले नृपे ॥ ६३९ ॥

इत्थं वर्षद्वयं सप्त मासान्भूत्वा नृपासने ।
नृपो द्वाषष्ठिवर्षे स ह्याश्विने भ्रंशमाप्तवान् ॥ ६४० ॥

राजा महम्मदशाहः स विशप्रस्थान्तरात्ततः ।
आनीय फिर्यपालेन शत्रुपक्षे समर्पितः ॥ ६४१ ॥

राजधान्यङ्गने राजवासे तं मनुजैः सह ।
विधाय वृत्तिं संपूर्णां ररक्षुर्डामराधिपाः ॥ ६४२ ॥

राज्यप्राप्त्या सुखं तादृक्तस्य नासीत्सुदुःस्थितेः ।
यादृक्तद्भ्रंशतस्तस्य नृपमन्त्रिप्रसादतः ॥ ६४३ ॥

सैदद्वैधवधे लुण्ठिः पुरेभूत्त्रिगुणा ततः ।
खशैः कृता दाहवर्जं तस्मिन्राजविपर्यये ॥ ६४४ ॥

प्रधानवणिजः केचित्कोटिसंचयवञ्चिताः ।
तृणमात्रावृतैरङ्गैस्तस्थुस्ते रक्षितासवः ॥ ६४५ ॥

दिनत्रयं ददामो वो मोषणं यदि जायते ।
इति वैदेशिकोत्कोचसापेक्षा मन्त्रिणोभवन् ॥ ६४६ ॥

काश्मीरिका यथा लुण्ठि बहिर्यात्रागता व्यधुः ।
तथा वैदेशिकाश्चक्रुः काले किं किं न दृश्यते ॥ ६४७ ॥

प्रतिपद्भ्रमणैः सपरिश्रमा
मधुकरी तनुते मधुगोकुलम् ।
निहितधूमतया विनिवार्य तां
तमुपलभ्य परः सुखमश्नुते ॥ ६४८ ॥

कष्टैः षण्मासपर्यन्तं महद्भिःसंचितं गृहे ।
अयत्नमपरैर्भुक्तं सर्वं तत्खानसंश्रितैः ॥ ६४९ ॥

रक्ताक्ततृणपूगान्तः क्षिप्तं कैरपि यद्धनम् ।
न नीतमशुचिस्थानसूतिकास्तरणभ्रमात् ॥ ६५० ॥

सद्युम्ननिम्नकुम्भाम्भःपक्षिपुष्करिणीकृतैः ।
रक्षितं कैरपि द्रव्यं नीतं ताडितदर्शनात् ॥ ६५१ ॥

सत्यं ब्रवीमि धनिकाः शृणुतास्मदुक्तं
यत्संचितं वसु गृहे परवञ्चनाद्यैः ।
तद्भोगदानसफलं कुरुताविलम्बं
नो चेद्वृथा स्मरत राज्यविपर्ययेऽस्मिन् ॥ ६५२ ॥

भग्नभाण्डकरण्डालीः प्रसार्य परितो गृहे ।
मुषिताः स्म इति व्याजात्खशाः कैरपि वञ्चिताः ॥ ६५३ ॥

जलान्तरशवागाराञ्शून्यानापूर्य वस्तुभिः ।
ररक्षुर्नागराः केऽपि शून्यीकृतगृहा धनम् ॥ ६५४ ॥

तैर्निवर्तितगर्तान्तःक्षिप्तैः पौरधनैर्घनैः ।
तस्मिन्काले प्रतिपदं सत्यार्थाभूद्वसुंधरा ॥ ६५५ ॥

मार्गरोधोद्यतैः सर्वैः क्षेपणीयाश्मवर्षिभिः ।
राजानवाटकीयैस्तैस्तत्कालं साहसं कृतम् ॥ ६५६ ॥

कर्मस्थाननिधानसर्पसदृशप्रोत्सारणाडिण्डिमो
द्विष्टप्राक्तनसेवकाम्बुजघटाहेऽन्तकालोदयः।
भूपक्ष्मामधुगोलकस्थसरघासंघातधूमोद्गमः
सोभूद्राज्यविपर्ययो नवसभोद्यानद्रुमालीमधुः॥ ६५७॥
किं स्वाचारविपर्ययात्किमु धनस्यान्यायतोपार्जना-
त्किं वा द्रोहितया सतां किमथ वा सद्वर्णसांकर्यतः।
निःसामर्थ्यतया यथा शिशुविभोर्द्वेषेण वा मन्त्रिणां
राज्ये सुस्सलभूपतेरिव बभूवायं प्रजोपद्रवः॥ ६५८॥
येनादौ सैद्वैरे रणरसिकतया मोचिता बन्धनस्थाः
सिद्धादेशाधिकारो व्यधित जितरिपुः स्फूर्जितं च प्रयातः।
प्राज्यं राज्यं व्यधाद्यः फतिहनरपतेर्नाशयित्वारिचक्रं
जीयाच्छ्रीडामरेन्द्रो वरसचिवपतिः सैफमल्लेक एकः॥६५९॥

इति श्रीजैनराजतरङ्गिण्यां पण्डितश्रीवरविरचितायां
फतिहशाहराज्यप्राप्तिर्नाम चतुर्थस्तरङ्गः
समाप्तेयं श्रीवरराजतरङ्गिणी॥



अथ

प्राज्यभट्टकृता

# चतुर्थी राजतरङ्गिणी ।

---

नमश्चराचराकारधारिणे चन्द्रमौलये ।
शिवाय स्वच्छस्वच्छन्दपरमात्मस्वरूपिणे ॥ १ ॥

विलोक्य मिश्रं शिवयोः स्वरूपं
सर्पाधिराजो मिलितोतिभक्त्या ।
गौर्या भुजावर्तनकङ्कणेन
यत्रावताद्वो गिरिजाशिवार्धः ॥ २ ॥

विरतं मोहान्धतमो यदनुग्रहरोचिषा शुकस्यापि ।
वन्दे तं गुरुतरणिं बुद्ध्याश्रयहृत्सरोजदीप्तिकरम् ॥ ३ ॥

वन्द्यं तर्कवितर्ककौशलमतेर्वाक्यं प्रमाणान्वितं
यत्कान्त्या नृपकीर्तिवस्तुरचना देदीप्यते सर्वतः ।
श्लोकैः सत्पदशोभनैरविरलानुप्रासयुक्तैः शुभै-
र्नानार्थानुगतैर्मतैः सुकविनां लालित्यभावान्वितैः ॥ ४ ॥

श्रीकह्लणद्विजप्रोक्तश्रीमद्राजतरङ्गिणीम् ।
आलोक्योद्यमिताभ्यां स्वं वपुः कर्तुमखण्डितम् ॥ ५ ॥

श्रीजोनराजविबुधश्रीवराभ्यां मनोरमम् ।
कृतं द्वाषष्टिवर्षान्तं ग्रन्थं राजावलिद्वयम् ॥ ६ ॥
गङ्गाभगवतीतीर्थस्नाने धन्यः सुभूषितः ।
कविः श्रीप्राज्यभट्टाख्यः समग्रगुणभूषितः ॥ ७ ॥
राजावलिपताकां स्वां राज्ये फतिहभूपतेः ।
एकोननवतिं यावद्व्यक्तीचक्रे ततः परम् ॥ ८ ॥
अथ देशादिदोषेण दुष्टलुब्धकभीतितः ।
नाग्रहीद्राजवृत्तान्तशैवालं मानसे कविः ॥ ९ ॥
तदाप्रभृति तद्वृत्तवर्णनं क्रियते मया ।
बुद्ध्याश्रयात्मजेनात्र शुकाख्येनात्मचापलात् ॥ १० ॥
पूर्वेषां राजसंमान्यं निशम्य पृथुसंपदाम् ।
तद्भारशान्तये वाहं न कुर्वे कविवाञ्छया ॥ ११ ॥
क्व पूर्वकविवक्तृत्वं क्वेदं मन्दधियो मम ।
वर्णमात्रेण रीत्यंशः स्वर्णखण्डायते कथम् ॥ १२ ॥
राजोदन्तमरुं सन्तः श्रुत्वा योजनपूर्वकम् ।
अनुगृह्णन्तु मद्वाक्यसुधावृष्टिनिबर्हणैः ॥ १३ ॥
कश्मीरेषु महाराजजैनशाहकुलाङ्कुरः ।
फताहशाहभूपालः प्रशासन्नभवन्महीम् ॥ १४ ॥
तस्मिञ्शासति तत्क्षोणीं प्रजाः सर्वसुखावहाः ।
आसन्स्वधर्मनिरता दयादाक्षिण्यभूषिताः ॥ १५ ॥
स्त्रीद्यूतमद्यव्यसनेष्वसक्तः सचिवाग्रणीः ।
मूसराजानकश्चन्द्रान्वयोभूत्तस्य भूपतेः ॥ १६ ॥
आसुरोपलवरोर्जितश्रियामन्ववायप्रभवोस्य मन्त्रिराट् ।
धार्मिकोध्वपतिरिब्रहीमकः सन्मतिः शुभरतिः परोभवत् ॥ १७ ॥

प्रतीहारपतिर्हाजीमीयोमेयो गुणैस्तदा।
तृतीयः सचिवो दैवात्कालधर्ममुपागतः॥ १८॥
सामान्येन महीभर्त्रा पुत्रो मल्लेकजङ्गिरः।
पैत्रिकैर्ग्रामराष्ट्रैर्धर्मानेनास्य नियोजितः॥ १९॥
नयज्ञः सर्वविद्दीर्घदर्शी बन्धुः सहानुजः।
मूसचन्द्रस्य राजानश्टङ्गारोभूत्सदाप्रियः॥ २०॥
वृष्टिकालः सुहृत्क्षेत्रे सदा कालश्च वैरिणाम्।
वैकर्तनोर्थिनामास्ते मल्लेकालोस्य सत्सुतः॥ २१॥
न्यूनाधिकतुलादण्डवृत्तिरध्वेशमार्गगः।
समोभूत्पूर्णरावुत्रो मूसचन्द्राध्वपेशयोः॥ २२॥
ब्राह्मणाः स्वक्रियाचारहीनाश्चासंस्तदा ध्रुवम्।
यदेषां मूसचन्द्रोभूक्रियालोपप्रवर्तकः॥ २३॥
सर्वविज्ञानविन्मीरशेष इराकदेशजः।
शाहासिमस्य च्छात्रोस्य ह्युपदेशं विना गुरुः॥ २४॥
मूसचन्द्रस्तदादेशाद्धृत्वा देवालयस्थितान्।
भूमिं द्विजेभ्यो नीत्वा तद्भृत्यांस्तृणान्व्यधात्तया॥ २५॥
सुफाख्यैर्मीरशेषस्य च्छिन्ना इन्धनवाञ्छया।
बोधखान इति व्याजादत्युच्चास्तरवोनुगैः॥ २६॥
सन्निधानं तदात्याजि दैवतैः प्रतिमासु हि।
कथं विधत्ते मनुजस्तत्स्थानेषु विलुण्ठनम्॥ २७॥
दुराचारोथ साचारो भट्टो भुट्टो नटो विटः।
इत्येवमासीत्तत्काले सभासाम्यं कलेर्बलात्॥ २८॥
मूसचन्द्रात्मजस्याथ दानमानौ च गौरवम्।
असहिष्णुभिरध्वेशपुत्रैरब्दालकादिभिः॥ २९॥

विभेद्य होसराजानं प्रतीहारादिचक्रिणः ।
अवधूय स्वजनकं यौनसंबन्धयन्त्रितम् ॥ ३० ॥
श्रीजैनोल्लाबदीनस्य पुण्यराशिरिवोच्छ्रितः ।
मज्जितः श्रीवितस्तान्तश्चिरकालमभूत्तु यः ॥ ३१ ॥
राजानमूसचन्द्रेण प्लावितो निर्मलैर्धनैः ।
श्रीजैनकदलः सेतुः पारावारप्रतारणे ॥ ३२ ॥
बलाढ्यमठमल्लेकपुरान्तरसमाश्रयैः ।
प्लोषितो वेश्मभिः साकं रात्रौ वैरिजिगीषया ॥ ३३ ॥
दग्धारण्यनिभे जाते नगरे कदले तथा ।
नावशिष्टं विटैर्लुण्ठ्या स्नानवासो जनस्य च ॥ ३४ ॥
स संवृत्तः क्षीणकलो मूसचन्द्रस्तदूष्मणा ।
स्वसैन्यसंग्रहं कृत्वा निविष्टो जालद्रागडे ॥ ३५ ॥
शतैकीयोवसत्कोपि ब्राह्मणो ब्रह्मवर्चसा ।
युक्तो येनाभवत्तस्य राजानस्यारिनिग्रहः ॥ ३६ ॥
प्रतापाग्नेर्नरेशस्य पुरस्य दहनार्चिषः ।
राजानमूसचन्द्रेण स्ववपुः श्रीफलायितम् ॥ ३७ ॥
राज्ञा दत्ते बहिर्गन्तुं धर्मद्वारे दिनैः पथि ।
विप्रशापाख्यस्वर्भानुर्मूसचन्द्रमथागिलत् ॥ ३८ ॥
मलेकालादयः पुत्रा विद्रुताः समराद्भयात् ।
विधाय मूसचन्द्रस्यान्त्यक्रियां नृपशासनात् ॥ ३९ ॥
मार्गेशेब्राहिमो मन्त्री स्वान्परान्समतोपयत् ।
सिद्धादेशं महातन्त्रं ज्येष्ठपुत्राय मार्गपः ।
मल्लेकपेरुजायादान्मल्लेकाब्दालकाय च ॥ ४० ॥
शस्त्राधिकारं दत्त्वाथ विभज्यान्यप्रमेयकान् ।
मल्लेकलुहरादिभ्यः स्वात्मजेभ्यो ददौ महान् ॥ ४१ ॥

होसराजानजाङ्गेरप्रतीहारौ तु चक्रिणः ।
बाह्यानीतान्डामरांश्च राष्ट्रेशान्विदधेध्वपः ॥ ४२ ॥
मृते प्रशान्ते सचिवे चेरुरुत्पिञ्जटास्ततः ।
कर्णगोचरदुर्दण्डाः शिङ्गभर्तृव्यदायिनः ॥ ४३ ॥
यमेवाश्रयते रज्जुं नदीं तर्तुमहो नरः ।
छिनत्त्यकस्मात्तस्मै तां विधिर्विधुरतां गतः ॥ ४४ ॥
मूसचन्द्रवधायैते वाह्यानीता हि डामराः ।
मार्गेशेनास्य तैः सर्वैर्द्रोहोकारि नृपाज्ञया ॥ ४५ ॥
नौसेतुच्छेदं कृत्वा ते प्रतीहारादिडामराः ।
नाशयित्वा मार्गपतिं विदेशमनयंस्ततः ॥ ४६ ॥
डामरा उत्समल्लेकदौलताद्या नृपास्पदे ।
अभजन्मन्त्रिपदवीं षट्पदा इव माधवीम् ॥ ४७ ॥
आस्थाने डामरेन्द्रेषु सम्यङ्गिर्णयकारिषु ।
बलिनो दुर्बला आसन्नबला बलवत्तराः ॥ ४८ ॥
सुवृत्तं डामरेन्द्रीये शिङ्गानां प्रत्यभान्न तत् ।
तामिस्रासक्तघूकानां सत्प्रकाश इवावनौ ॥ ४९ ॥
नृपान्तरङ्गाः कारायां क्षिप्तास्तैर्डामरैर्निशि ।
अलिमीरादयो द्रोहकर्त्तारः स्वभयादमी ॥ ५० ॥
जहाङ्गीरप्रतीहारहोसराजानकादयः ।
दुद्रुहुरवमानात्ते दिनैस्तान्डामरान्प्रति ॥ ५१ ॥
आस्थानासीनयोर्गाजखानमल्लेकदत्तयोः ।
शक्त्या गदायमीराख्यो जघानोरोद्वयोर्द्रुतम् ॥ ५२ ॥
श्रुत्वा तदुत्समल्लेको राजाग्रादगमद्बहिः ।
चिरं युद्धारिभी राज्ञा नीतः स्वान्तिकमादरात् ॥ ५३ ॥

तद्वधाद्राजधान्यन्तर्हाहाकारो महानभूत् ।
उदभूत्पौरलोकास्तु नृपतेश्चायशस्तदा ॥ ५४ ॥
डामरो होसमल्लेकः सुय्यभोगान्तरादथ ।
श्रुत्वा ज्ञातिवधं धैर्यान्न चचाल महाभटः ॥ ५५ ॥
प्रयुध्य वैरिभिः सोथ डामरस्तत्र संगरे ।
वीरः स्वःसुन्दरीयोगं समरे डामरोगमत् ॥ ५६ ॥
शाहावदीनकुलजः खान इब्राहिमस्ततः ॥
जहाङ्गीरप्रतीहारज्ञातीयः कुशलो महान् ॥ ५७ ॥
विभागीकृत्य राष्ट्राणि यथार्हं पञ्चषैर्दिनैः ।
प्रददौ होसराजानमुख्यानां नृपतेः पुरः ॥ ५८ ॥
आशङ्क्य नृपतेः पार्श्वस्थं तमुत्सवमल्लिकम् ।
अकरोद्बन्धनं नीत्वा दुर्गमे तु खशालये ॥ ५९ ॥
विभवं मासमात्रं ते गन्धर्वनगरोपमम् ।
विधाय द्वेषाद्ध्वेशभीत्या चेलुरिवाधमाः ॥ ६० ॥
वृत्तान्तमुत्समल्लेकदुग्धभ्राता विश्रुत्य तत् ।
रावुत्रदेवको गत्वा खशालयमवेष्टयत् ॥ ६१ ॥
खशैर्गङ्गामठोपान्ताद्भीतैरुत्सवमल्लिके ।
विमुक्ते ह्युदभूत्कोपि हर्षोन्योन्याश्रयात्तयोः ॥ ६२ ॥
अथाध्यश्रयतां तौ द्वौ नृपकल्पतरुं दृढम् ।
विपत्तीव्रातपक्लिष्टौ मार्गेशागमनोत्सुकौ ॥ ६३ ॥
एकोननवतौ शुक्लाषाढादाश्वयुजावधि ।
वधादिवृत्तं राजानडामराणामभूदिदम् ॥ ६४ ॥
शरत्काले बहिस्तीर्त्वा मार्गेशः पुनराययौ ।
विभागीकृत्य कश्मीरान्सर्वेषां दत्तवानसौ ॥ ६५ ॥

राजाधिकारान्संस्थाप्य स्वात्मजेभ्योभवद्भीः।
योगीव कतिचित्कालं स्वदेशे विगतज्वरः॥ ६६॥
उत्समल्लेकराजानशृङ्गारौ निरदाहयत्।
गृहानब्दालमीरस्य नावतेब्दे जिगीषया॥ ६७॥
निरोधं वेश्मदाहादि श्रुत्वा पुत्रस्य मार्गपः।
भाङ्गिलात्क्षुण्णमार्गेण हिन्दुवाटं समागमत्॥ ६८॥
तस्मिन्दिगन्तरं याते मल्लेकाब्दालकोरिभिः।
बन्धनाय निनायोग्रैर्दुर्गं लब्धखशालयम्॥ ६९॥
उत्समल्लेकराजानशृङ्गारौ नृपसंयुतौ।
यातौ विभक्तुं कश्मीरोत्पत्तिं वाराहमूलकम्॥ ७०॥
तत्र राजान्वयानीतैः सिद्धादेशाधिकारिभिः।
देशोत्पत्तिविभागज्ञैस्तज्ज्ञैर्लेखककर्मभिः॥ ७१॥
कायस्थैर्बुधकाश्वीशसंख्येशजुगकादिभिः।
भागत्रयं विधायोर्व्या राष्ट्रदेशेषु सर्वतः॥ ७२॥
भागः फताहशाहस्य मल्लेकोत्सस्य चापरः।
तृतीयोंशश्च राजानशृङ्गारस्येत्यलिख्यत॥ ७३॥
विभज्य भुक्ता देशेत्र देशोत्पत्तिः पुरा त्रिभिः।
हुष्कजुष्ककनिष्काख्यैस्तथैवैतैर्महात्मभिः॥ ७४॥
ततो नगरमारुह्य राजराजानडामराः।
नात्यजन्हृदयाद्वैरं गूढं नकुलसर्पवत्॥ ७५॥
मुख्यं मन्त्रिपदमुत्समल्लेकस्य ददौ नृपः।
सिद्धादेशं च राजानशृङ्गारस्य महत्पदम्॥ ७६॥
आस्थान उत्समल्लेके स्थिते निर्णयकारिणि।
शृगालैडिकसंयोगः श्रुतोभूल्लक्षितस्तदा॥ ७७॥

कर्तितोर्णालडिङ्गयर्थवादिनोः प्राप्तयोर्द्वयोः ।
प्रादात्स उत्तरं द्रष्टुं स्वाभिज्ञामावृताश्रयाम् ॥ ७८ ॥
तदा ह्याहितसद्वेषः सुवेशो मन्त्रिणां वरः ।
मसूदशाहिसहित इब्राह्मोध्वेश आययौ ॥ ७९ ॥
वाराहमूलं संप्राप्ते तत्सैन्ये राजसैनिकैः ।
उत्समल्लेकमुख्यास्ते योद्धुं सुय्यपुरेविशन् ॥ ८० ॥
पारावारस्थितं सैन्यद्वयं वीक्ष्य नराधिपः ।
फताहशाहो मन्त्रीशमुत्समल्लेकमब्रवीत् ॥ ८१ ॥
मन्त्रिन्नध्वाधिपेनेयं परिणीतेव भामिनी ।
अस्मान्कापुरुषाञ्ज्ञात्वा राज्यलक्ष्मीर्हृतामुना ।
श्रुत्वा तदुत्समल्लेको नृपमूचे महीपते ॥ ८२ ॥
एकाकिनमबन्धुं मां दृष्ट्वा किं न करोत्ययम् ।
कदाचिद्दृश्यते चिन्तामणिः खकुसुमादि च ॥ ८३ ॥
राजप्रतापदग्धा हि नोत्पद्यन्ते नरर्षभाः ।
उत्तिष्ठ राजन्युध्यस्व दैवाधीना विभूतयः ॥ ८४ ॥
श्रुत्वैवं मन्त्रिणो वाक्यं योद्धुं नृपबलं ययौ ।
अध्वेशे भवतुङ्गं तत्पथा याते ससैनिके ॥ ८५ ॥
सबल उत्समल्लेकः कोशनोत्सो न्यविक्षत ।
मध्ये भूत्वा गिरिं तत्र स्थितात्सैन्यद्वयाद्भटाः ॥ ८६ ॥
एत्यान्योन्यं शरासारं पारावारादथाक्षिपन् ।
प्रयुध्य वैरिभिस्तत्र मार्गेशात्मजशिर्यकः ॥ ८७ ॥
स्वप्राणैः पद्मनागस्य प्रादाद्बलिं महत्तरम् ।
हते तस्मिन्रणे तत्र शिर्यमार्गपतावतः ॥ ८८ ॥
बन्धुत्वादुत्समल्लेको जेता शिथिलतां ययौ ।
शैथिल्यमस्य दृष्ट्वा ते वीरा मार्गेशसैनिकाः ॥ ८९ ॥

खूयाश्रमाध्वना यातस्यानुसस्रुर्महौजसः।
फताहशाहो राजानश्शृङ्गारान्वित एव तत् ॥ ९० ॥
श्रुत्वा सुय्यपुराद्धिन्दुवारं शूरपुराद्ययौ।
अनुयातैरथाध्वेशसैनिकैरुत्समल्लिकः ॥ ९१ ॥
अरोधि न्योवाग्रामान्ते केशरीव गुहामुखात्।
नवाब्दान्पालयित्वा क्ष्मां याते फताहभूमिपे ॥ ९२ ॥
महम्मदशाहः संप्रापद्राज्यं मार्गेशसंश्रयः।
मार्गेशप्रीत्या नृपतिर्मह्मान्तं स्वाततायिनम् ॥ ९३ ॥
सेहएस्कन्दरं खानं यौवराज्यपदोर्जितम्।
महामार्गपतिर्भूयो राजलक्ष्मीविराजितान् ॥ ९४ ॥
स्वपुत्रानकरोत्कारागृहे शत्रुनिधानतः।
दत्तकन्योप्ययं जन्य इव मां घातयेत्कथम् ॥ ९५ ॥
निश्चिन्त उत्समल्लेको यावदास्ते स्म बन्धने।
मार्गेशपुत्रो बलिनं सद्वेषस्तं कुकर्मणा ॥ ९६ ॥
अयःशृङ्खलबद्धाङ्घ्रिमवधीत्पश्चषैर्दिनैः।
युद्धं भट्टार्जुनस्याजौ कारायाः शेषचक्रिणः।
बद्धस्य तादृग्वीरस्य तस्याभूच्छित्रिभिः परैः ॥ ९७ ॥
बलिना कलिराहुणा नृचन्द्रे
ग्लपिते कोप्युदभूद्बलान्धकारः।
जनताप्यनिशं भृशं रुरोद
कलयन्ती पितरीव पक्षपातम् ॥ ९८ ॥
विरते चोत्समल्लेके लोके रात्रिश्चराः खलाः।
विचेरुरन्धतमसा विस्फुरद्दीर्घदृष्टयः ॥ ९९ ॥
भोग्यांशो द्विगुणो जातो ग्राम्याणां तत्र वत्सरे।
विज्ञप्तिश्रवणे मूका बधिरा मन्त्रिणोभवन् ॥ १०० ॥

नवमासान्नवाहानि राज्यं कृत्वा महम्मदे ।
बहिर्याते कृतोत्साहः शाहः फतिह आययौ ॥ १०१ ॥
प्रतीहारजहाङ्गीरस्यादान्मन्त्रिपदं नृपः ।
सिद्धादेशं च राजानशृङ्गारस्य महत्पदम् ॥ १०२ ॥
स्वयंभूहुतभुग्दीप्तमहसः शौर्यशालिनः ।
काचचक्रस्य शस्त्राधिकारं राजा स्वयं ददौ ॥ १०३ ॥
नूनं नाकेशचक्रेशावतारः काचमल्लिकः ।
आजीवमभवद्यस्य राजश्रीललितं वपुः ॥ १०४ ॥
श्रीमद्धोसनचक्रस्य क्रमराज्याजिजन्मनः ।
प्रोद्भूतः काञ्चनो वीरो रामो दशरथादिव ॥ १०५ ॥
प्रजापुण्योदयाद्राज्ञो धार्मिका धीरजायत ।
अथवात्यल्पकालोस्य राज्यस्याज्ञायि भूभुजा ॥ १०६ ॥
तथा हि प्रेष्यवद्रुद्धव्यापाराधिपतां नृपः ।
अकरोत्ताम्रपट्टान्तर्गणनाक्षेपवारणम् ॥ १०७ ॥
मृतहिन्दुकजन्तूनामस्थीन्यादाय भूमिपः ।
गङ्गां यातुं समादिक्षन्म्लेच्छोपद्रवशान्तये ॥ १०८ ॥
क्षिप्त्वास्थीन्यत्र स्वर्णद्यां प्रत्यायाता जनाः पथि ।
अकस्माद्वातवृष्ट्या तेयुतसंख्या विपेदिरे ॥ १०९ ॥
चिरेण गङ्गया भुक्तान्यस्थीनीति क्षुधार्तया ।
मन्येस्थिप्राप्तलोकोपि निगीर्णो ह्यनया ध्रुवम् ॥ ११० ॥
आयुःशेषं समाश्रित्य पादत्राणसमाश्रयाः ।
मृता गृहेषु ये प्राप्ताः केचिन्नियतियोगतः ॥ १११ ॥
अस्मिन्नेकनवत्यब्दे शरत्कालेथ मार्गपः ।
महूदशाहिसहितो बाङ्गिलात्पुनराययौ ॥ ११२ ॥

ससैन्यो बाङ्गिले ग्रामे निविष्टोभून्महीभुजः।
फताहशाहः प्रबलं बलं युद्धाय निर्ययौ ॥ ११३ ॥
प्रयुध्य वैरिभिर्गाढं धार्मिकोध्वेशनायकः।
गतः स्वःकामिनीयोगं सात्मजोत्र रणाजिरे ॥ ११४ ॥
कलौ धर्मस्य पादैको वर्ततेस्मिन्भुवस्तले।
महामसूदस्तम्भैः स चतुष्पाद्येन योजितः ॥ ११५ ॥
नूनं कर्कोटनागेन निगीर्णो मार्गपः क्रुधा।
प्रत्यब्दं तद्गिरिस्थानाद्गमागमचिकीर्षया ॥ ११६ ॥
अन्येप्यब्दालमल्लेकलुहराद्या हि तत्सुताः।
गता दिगन्तरं भूभृद्युक्ता व्यर्थमनोरथाः ॥ ११७ ॥
वितास्तिः पूर्यते जीर्णवस्त्रे हस्तो विशीर्यते।
इत्येवमादिका दोषा जायन्ते पापिनां विशाम् ॥ ११८ ॥
सम्यगन्तकनारीव व्याध्युपद्रवकारिणी।
उद्भूत्सर्वतो मारी जनताक्षयकारिणी ॥ ११९ ॥
मृतानां नाभवत्संख्या ग्रामेषु नगरेषु वा।
अन्त्यकर्पटवासोपि येषामास्ते स्म दुर्लभम् ॥ १२० ॥
बान्धवा नैव चक्रन्दुः प्रलापस्य कथैव का।
प्राणरक्षापराः केचिदायुःशेषेण रक्षिताः ॥ १२१ ॥
जजृम्भे शमिते मारीदोषे देशेथ दैवतः।
वार्त्ता मह्लदशाहस्य कश्मीरागमनं प्रति ॥ १२२ ॥
गत्वा मह्लदशाहः स नौशाहारात्सलोहरात्।
इस्कन्दराद्गजपतेः स प्राप्य महतीं चमूम् ॥ १२३ ॥
प्रत्यायातोध्वपसुतैः सहितो राज्यवाञ्छया।
प्राप्तो राजपुरीदेशमिति दूतान्नृपोश्रृणोत् ॥ १२४ ॥

त्रस्ता दुर्वार्त्तयाप्यासन्पूर्ववैरा महीभुजः ।
समस्ता मन्त्रिणः शाहमह्मदागमनेप्सवः ॥ १२५ ॥

काचचक्रेशराजानशृङ्गारौ स्वबलैर्वृतौ ॥
गतौ प्रतीक्षितुं शूरपुरं नवनृपस्य तौ ॥ १२६ ॥

विधुरे हि विधौ भृत्य आलीमीरोस्य भूपतेः ।
श्रीमत्फताहशाहस्य शत्रुपक्षमथाश्रयत् ॥ १२७ ॥

वैदेशिको निःशरणः शाहिभङ्गीय इत्यसौ ।
पुत्रवद्वर्द्धितो राज्ञा ग्रामहेमाद्यनुग्रहैः ॥ १२८ ॥

प्रतीहारजहाङ्गीरमन्त्रिणैकेन संश्रितः ।
श्रीमान्फताहशाहः स पुराद्योद्धुं विनिर्ययौ ॥ १२९ ॥

त्रोषाणकं फतिहशाहबले निविष्टे
गूढेक्षणैः प्रतिभटैर्विदितारिवृत्ताः ।
एत्यारिमध्यमथ शूरपुराद्युयुत्सु-
कामाः प्रवीरशयनान्यधिजग्मुरत्र ॥ १३० ॥

फताहशाहो वीक्ष्यैतद्युद्धमश्वादथापतत् ।
मन्त्रिभिः प्राक्तनस्नेहात्प्रभुत्वादपि रक्षितः ॥ १३१ ॥

एवं समासं वर्षैकं भुक्त्वा भूमिं स भूमिपः ।
वर्षे द्वानवते मास इषे राज्यादथापतत् ॥ १३२ ॥

ततः फतिहशाहः स निरस्तो बाह्यमण्डलम् ।
मन्त्रिभिश्चटिकासारगिरिमुल्लङ्घ्य लोहरम् ॥ १३३ ॥

श्रीमान्महामदोत्साहः शाहो महम्मदः पुनः ।
समं गजपतेः सैन्यैः कश्मीरानविशज्जयी ॥ १३४ ॥

गजेशदत्तमत्तेभा व्यधुः सेनाजनस्य ते ।
जङ्गमाद्रिभ्रमं मार्गे काल्लोधाराधिरोहणे ॥ १३५ ॥

वाजिनां हेषया हस्तिकर्णतालैश्च धुंकृतैः ।
पटहैर्जयशब्दोभूद्द्विगुणो नृपतेर्विशाम् ॥ १३६ ॥
बद्ध्वा राजानश्रृङ्गारमब्दालं मार्गपं बहिः ।
कर्त्तुं मन्त्रिपदे राज्ञश्चिन्ता काप्युदभूद्धृदि ॥ १३७ ॥
नृपादेशान्महामन्त्रिपदं चक्रेशकाञ्चनः ।
आलिमीराद्यनुज्ञातोप्यगृहीत्स महाबलः ॥ १३८ ॥
स्वामात्यान्देशरक्षायै स्थापयित्वा गते भुवम् ।
विभज्याटविकं लोकं प्रतिमुक्ते बहिर्नृपे ॥ १३९ ॥
नाग्रामकोटं लुहराध्वेशराजाननोस्सकौ ।
प्रविष्टौ सैन्यसंनद्धौ शत्रुकार्यचिकीर्षया ॥ १४० ॥
हिमार्तोराजको देशोपरिज्ञाताश्च मन्त्रिणः ।
देशो दुर्वार्त्तयाशेषश्चकम्पेन्वहमित्यतः ॥ १४१ ॥
चक्रेशो विह्वलस्तूर्णं वीरं मल्लेकजाङ्गिरम् ।
साहायकार्थमानिन्ये राष्ट्रघोषैः कृतार्हणम् ॥ १४२ ॥
मासमात्रमुषित्वात्र कोटे ते वैरिणां क्रुधा ।
प्रभाते नगरं वीरा ययुर्युद्धचिकीर्षया ॥ १४३ ॥
निर्याते काचचक्रेशसैन्ये रिपुबलं प्रति ।
परस्परमभूद्युद्धं वीराणां जालद्वागडे ॥ १४४ ॥
युद्ध्वा लुहरमार्गेशो याते राजाननोस्सकः ।
हुत्वा रणाग्नौ स्वप्राणानाश्लिक्षन्नाकयोषितः ॥ १४५ ॥
छित्त्वा तत्राङ्गुलीः काचचक्रेशस्यारयोथ ते ।
नाजोकमार्गपत्याद्याः प्रययुः शलभायिताम् ॥ १४६ ॥
प्रवीरो देवरावुत्रश्चलितः समराङ्गणात् ।
हतो मारीनदीतीरे चक्रसैन्यैर्निरायुधः ॥ १४७ ॥

ताद्दशात्समरान्मुक्तः काचचक्रोखिलैर्जनैः ।
देशरक्षाकरोज्ञायि राधेयार्जुनसन्निभः ॥ १४८ ॥
सचिवः काञ्चनश्चक्रः प्रवीरः काञ्चनश्रियम् ।
अङ्गुल्या सह संप्राप छिन्नया तत्र संयुगे ॥ १४९ ॥
संतोष्य नृपतिर्दानमानाद्यै राजमण्डलम् ।
प्रतिमुच्यागतोकार्षीत्सौराज्यं राज्यमण्डले ॥ १५० ॥
वर्षेण साहिमल्लेकलद्दभट्टादयोखिलाः ।
चक्रेशमन्त्रिणा कारागाररक्षिता महौजसः ॥ १५१ ॥
अङ्गुलीसूत्रनिर्देशं स्थापिते भूपतौ ततः ।
चतुर्नवतिवर्षे तु श्रावणे काचचक्रपः ॥ १५२ ॥
मल्लिकजाङ्गिरप्रीत्या खानमिब्राहिमं व्यधात् ।
सिद्धादेशाधिकारेस्य सुजनं धीमतां वरम् ॥ १५३ ॥
क्रियालताया मूलानि पूर्वं शिर्यद्विजन्मना ।
रोपितानि च कालेन सिक्तान्यमृतवारिणा ॥ १५४ ॥
श्रीमन्निर्मलकण्ठेन वैकुण्ठेनेव भास्वता ।
कलौ गृहीतदेहेन कश्मीरेषु द्विजातिना ॥ १५५ ॥
श्रीमन्निर्मलकण्ठेन द्विजेन्द्रेण हिमागमे ।
मसूराजानकालोद्यन्म्लेच्छोपद्रवजो महान् ॥ १५६ ॥
संमन्त्र्य कण्ठभट्टाद्यैर्दुष्कलङ्को निवारितः ।
प्रलोभ्य काचचक्रेशं स्वप्राणेन धनेन च ॥ १५७ ॥
तत्कार्यत्रस्तचक्रेशानुमतो म्लेच्छचोदितः ।
खुज्जामीराह्मदो भट्टान्निर्मलाद्यानघातयत् ॥ १५८ ॥
ब्राह्मं तेजः क्व ते विप्राः क्वाचारोद्यतने युगे ।
इत्येव खिन्नो वित्रस्तांस्तन्मुखानवधीद्द्विजान् ॥ १५९ ॥

आसूत्रितः सैदकाले मूसचन्द्रेण व्यञ्जितः।
प्रफुल्लः काचचक्रेण मौसुलोपद्रवक्रमः॥ १६० ॥
ततोब्दे पञ्चनवते श्रावणे बाह्यमण्डले।
फताहशाहराजेन्दुरस्तं यातो नृपाधिपः॥ १६१ ॥
श्रुत्वा महम्मदस्साहेन तद्दिने नाशि नास्वपि।
नास्नायि राजराजं तं स्मारंस्मारं दिवानिशम्॥ १६२ ॥
नयज्ञो दीर्घदर्शी च सत्यवाग्गुणिवत्सलः।
प्रशान्तः प्रियभृत्यश्च क्व तादृग्लभ्यते प्रभुः॥ १६३ ॥
संप्राप्तं नरदेवेन जन्म बाह्येत्र मण्डले।
प्रमयोस्याभवत्तत्र विधिकार्यं हि दुर्घटम्॥ १६४ ॥
कर्णीरथमथारोप्य स्वभृत्यैर्नरनायकः।
शवीभूत इहानीतः कर्तुमन्त्यक्रियां दिनैः॥ १६५ ॥
कश्मीरेन्द्रः समारोप्य सामात्यस्तं शवं नृपम्।
बृहन्मृताजिरे श्रीमज्जैनशाहादिभूभुजाम्॥ १६६ ॥
गोगतैः स्फटिकावर्तैर्मूर्तैः कायैरिवाश्रिते।
राजोचितक्रियां कृत्वा भूगर्भाभ्यन्तरेक्षिपत्॥ १६७ ॥
कर्तुं राज्यमखण्डितं हठधियोद्धर्तुं स मान्यान्दृढा-
न्भर्तुपामरसेवकान्हि नृपतिः किं किं न कुर्याच्छ्रमम्।
हा दैवं तदुपासितुं प्रयततेनर्थादिवाभ्याहतो
मूलोत्पाटनमाप्य धिङ्नृपतरुस्तूर्णं पतेदाकुलः॥ १६८ ॥
क्व सैफडामरेन्द्रादीन्हत्वा स्वसचिवान्नृपः।
विपत्तौ प्रमयं प्राप हा हा कालविपर्ययः॥ १६९ ॥

॥ इति फताहशाहस्वर्यानम्॥

तदैवमेत्य राजानश्शृङ्गारेण महात्मना।
अन्वगामि नृपेन्द्रस्य प्रेम्णेव स्वर्गवासिनः॥ १७० ॥

तस्मिन्काले बहिश्चक्रवर्ती गजपतिर्दिवम् ।
इस्कन्दराख्योऽप्यगमत्सुरराजदिदृक्षया ॥ १७१ ॥
अभावादथ भूपस्य राजपक्ष्यं विशङ्क्य तम् ।
मल्लेकजङ्गिरमीरखुज्जाह्मदमुखान्ध्रुवम् ॥ १७२ ॥
इब्राहीं खानशृङ्गारभट्टादींश्चक्रनायकः ।
वैशाखेऽब्दे षण्णवतौ नगरस्थानरोधयत् ॥ १७३ ॥
सिद्धादेशातिपदवीं तदीयां चक्रपो ददौ ।
दैवदृष्टस्य राजानहोसनस्य महात्मनः ॥ १७४ ॥
तद्गौरवं त्रिभिर्मासैरसहिष्णुः स चक्रिराट् ।
होसराजानकं कारां क्षिप्त्वासीदकुतोभयः ॥ १७५ ॥
मल्लेकचक्रसेरङ्गताजमीरादिबान्धवान् ।
तोषयित्वा राष्ट्रघोषैः पूर्णकामांस्तदाकरोत् ॥ १७६ ॥
ज्येष्ठेऽथ सप्तनवते इब्राह्माध्वपतेः सुताः ।
मल्लेकाब्दालकाद्यास्ते संधाय देशवासिभिः ॥ १७७ ॥
फतिहशाहजं खानमादायेस्कन्दराभिधम् ।
ससैन्यमाययुर्बाह्यात्स्ववंशैश्वर्यकाङ्क्षिणः ॥ १७८ ॥
श्रुतप्रवेशश्चक्रेशकाचकोतिबली ययौ ।
योद्धुं लौलपुरोड्डारं क्ष्माभृद्युक्तोऽध्वपान्प्रति ॥ १७९ ॥
दृष्ट्वा चक्रबलं भूरि जग्मुर्भीत्याल्पसैनिकाः ।
नाग्रामकोटं रात्रौ ते दुर्गमं प्राणरक्षया ॥ १८० ॥
अथानुसस्रे चक्रेशसैन्येनाध्वपतीन्प्रति ।
कोटभूम्यन्तरे भूरि स्वसैन्यं स न्यवीविशत् ॥ १८१ ॥
चमूद्वयाद्विनिर्गत्य शरासारैरवाकिरन् ।
योधा दिवं च भूमिं च गर्जन्तः समराङ्गणे ॥ १८२ ॥

तावत्प्रतीहारपतिर्जहाङ्गीरः ससैनिकः ।
गदायमीरबहुरमीराद्यैर्लुहरेविशत् ॥ १८३ ॥
ऊर्ध्वाधःसहितं शत्रुसैन्यं वीक्ष्य स चक्रपः ।
मसूदचक्रं स्वसुतं व्यसृजल्लुहरं प्रति ॥ १८४ ॥
ताजचक्रादिसहितो वीरो मीरमसूदकः ।
शाहावदीननगरं स प्रापारियुयुत्सया ॥ १८५ ॥
दृग्गोचरं गते चक्रिसुते युयुधिरे भटाः ।
आगच्छ प्रविशेत्युच्चैर्नदन्तः समराङ्गणे ॥ १८६ ॥
मसूदमीरसंक्षिप्तां वीरो मीरगदायकः ।
शरावलिं चकर्तास्य वैजयन्तीमिव श्रियः ॥ १८७ ॥
पार्थपुत्रोपमे तस्मिन्रणं चक्रिणि कुर्वति ।
अरिमध्यात्सुसन्नद्धो नासीत्कोपि धनुर्धरः ॥ १८८ ॥
मा पलायन्त समराद्वीरा वीरगुणोज्झिताः ।
जिताः शत्रुसमूहेन व्यूहेनागम्यतामिति ॥ १८९ ॥
इत्युक्तेर्जुनराजानकैर्नैकेनागता भटाः ।
युद्धाय विविशुस्तूर्णं शलभा इव पावकम् ॥ १९० ॥
प्रत्यायाते स्वसैन्येथ प्रयुध्यैतैर्महारथैः ।
गदायमीरः स्वर्नारीप्रणयित्वमथाश्रयत् ॥ १९१ ॥
स्वस्रेयश्चक्रिणो दत्तनायकः पुष्पसायकः ।
दृष्ट्वैव नीतस्तूर्णं स स्वःस्त्रीभिः समराङ्गणात् ॥ १९२ ॥
सेनान्यं निहतं वीक्ष्य वीरास्तदनुयायिनः ।
मसूदमीरं धावित्वा जघानाक्ष्णि शरेण ते ॥ १९३ ॥
शरनिर्भिन्ननयनो न्यपतन्निहतो भुवि ।
मसूदमीरः प्रवरो धन्विनां चक्रिणः सुतः ॥ १९४ ॥

विशीर्णे रिपुभिश्चक्रिसुते तरलसंनिभे ।
अनीकिनीपदं लेभे मुक्ताहारा न कुत्रचित् ॥ १९५ ॥
होसराजानको राजमीरः शृङ्गारभट्टकः ।
एते विरुद्धास्तत्राजौ बद्धाः पापिजनैर्हताः ॥ १९६ ॥
प्रतीहारपतेः सेना प्रतुष्टा पुरमाविशत् ।
दिनद्वयमथोषित्वा सा प्रयाता यथागता ॥ १९७ ॥
तादृशे तनये वीरे निहते संगरेरिभिः ।
काचचक्रस्य तद्दुःखात्कालुष्यमगमन्मनः ॥ १९८ ॥
सेनान्यं दुःखितं वीक्ष्य ताजचक्रादयो निजाः ।
अवोचन्समये चास्मिन्दैन्यं मा संश्रयेश्वर ॥ १९९ ॥
निर्ययावथ चक्रेशो योद्धुं मार्गेशसैनिकान् ।
पारावारस्थितान्कोट्टे पुत्रशोकादविह्वलः ॥ २०० ॥
युयुत्सौ काचचक्रेशसैन्ये रिपुबलैश्चिरम् ।
ग्राम्या दीनतयाभूवन्किकर्तव्यतयाकुलाः ॥ २०१ ॥
मार्गेशाः ख्यातवीर्यास्ते वैरिनिष्ठस्य चक्रिणः ।
पौरुष्यं वीक्ष्य खानेन युक्ता याता दिगन्तरम् ॥ २०२ ॥
यथागतं गतेष्वेषु ससैन्येषु नृपान्वितः ।
विजयी नगरं प्राप चक्रेशः शोकविह्वलः ॥ २०३ ॥
वीरं धीरं गुणज्ञं तं महायोधपुरःसरम् ।
मल्लेकदौलतं ज्ञात्वा चक्रेशोभूद्धयोज्झितः ॥ २०४ ॥
समस्तं ग्रामराष्ट्रादि पुत्रसम्बन्धि धन्विने ।
ददौ दौलतचक्राय भ्रातृपुत्राय स प्रभुः ॥ २०५ ॥
वर्षेष्टानवते राजपुत्रमाजग्मुरध्वपाः ।
हबीबखानमादाय चटिकाशारपर्वतात् ॥ २०६ ॥

तामसीमरुगास्थाने स्थापिते सैनिकेध्वपैः।
मल्लेककाचचक्रस्य बलं संघपुरेविशत् ॥ २०७ ॥
विज्ञातचक्रिवीर्यास्ते मार्गपा अल्पसैनिकाः।
गिरिमार्गादवारोहन्नधर्म्मेषु केषुचित् ॥ २०८ ॥
अध्वेशसैन्यात्तदैन्यान्निर्गत्याशिश्रय द्रुतम्।
मूसराजात्मज ईदाराजानश्चक्रिणश्चमूम् ॥ २०९ ॥
तच्छ्रुत्वा तेध्वपाः प्रत्यागतास्तत्पर्वताध्वना।
आशापिशाचिका त्यक्ता मित्रद्रोहात्सुविह्वला ॥ २१० ॥
मार्गेशवाहिनीमित्रद्रोहाख्यानशिलोच्चयात्।
विशीर्णा शतधा याता संबद्धा आत्मरक्षके ॥ २११ ॥
हवीवखानः सोस्वस्थो मार्गे पञ्चत्वमागतः।
आरुह्य शिबिकां तूर्णमानीतो निजपार्श्वगैः ॥ २१२ ॥
कश्मीरानथ कृत्वास्य चान्त्यकर्म मृताजिरे।
शायितः पितृपार्श्वेधोगतैर्मात्यैर्महात्मभिः ॥ २१३ ॥
शस्त्रेण ये वारयितुमशक्या वैरिणोभवन्।
नखैरपास्तभाग्यानामुदये काचचक्रिणः ॥ २१४ ॥
प्रतीहारकुलोद्भवश्चन्द्रो मल्लेकजाङ्गिरः।
ज्वालाभिर्बाह्यदेशेत्र तत्काले पञ्चनां यथा ॥ २१५ ॥
आनीताश्चक्रिणा मार्गपाब्दाललुहरादयः।
यौनसंबन्धन्यायेन कश्मीरान्विविशुस्ततः ॥ २१६ ॥
तथा हि लुहराध्वेशः स्वसुतां परिणीतवान्।
मल्लेककाचचक्राय शक्रायेव पुलोमजाम् ॥ २१७ ॥
मल्लेकाब्दालकायाथ चक्रेशः स्वसुतां ददौ।
परिणीयचिरोत्सन्नामिव स्नेहतरङ्गिणीम् ॥ २१८ ॥

श्रीमता ताजचक्रेण स्मरेणेव रतिर्यथा ।
उद्वाहिता मार्गपतेरब्दालस्यात्मजा तदा ॥ २१९ ॥
ततः काञ्चनचक्रेण राष्ट्रशेषैः क्रमागतैः ।
महद्भिर्दानमानैश्च मार्गेशानां कृतार्हणा ॥ २२० ॥
अन्वहं वर्धिते प्रेम्णि मार्गेशैः सह चक्रिणाम् ।
बन्धुना गिरिचक्रेण दैवाद्दूरीकृतस्तु सः ॥ २२१ ॥
काम्भोजयवनेशेन बाबुलेन विपाटितः ।
तदैव हस्तिनापुर्यामिब्राहीमो नृपेश्वरः ॥ २२२ ॥
तद्रणोत्थरजोध्वस्ता न प्राकाशन्त कुत्रचित् ।
आशा गजपतेर्वीररत्नानामनुयायिनाम् ॥ २२३ ॥
मार्गेशदीपश्चक्रेशस्नेहपूर्णो विकारितः ।
कर्णेजपाम्बुपूरेण रिगचक्रालिमीरयोः ॥ २२४ ॥
तद्रुषोत्थानलज्वलन्मनसश्चक्रिणः कृताः ।
रिगचक्रनिरोधाख्यजलाप्यायेन शैत्यता ॥ २२५ ॥
तृतीयेब्देऽध्वपास्ते तु निःस्नेहाश्चक्रिणं प्रति ।
आलिमीरकृताश्वासाश्चिरोड्डारं न्यवीविशुः ॥ २२६ ॥
विदित्वा तादृशैर्वृत्तं मन्त्रयित्वा महीभृता ।
न्यविक्षच्चक्रपः सैन्ये योद्धुं स्वं जालदर्गडे ॥ २२७ ॥
असाध्याः सामदानाद्यैस्तद्भटा उद्भटा रणे ।
न शेकुश्चक्रिसैन्यान्तः केनापि विनिवर्तितुम् ॥ २२८ ॥
शलस्थलपालडादिदेशेष्वध्वेशसैनिकैः ।
प्रयुध्य शतशोहानि निर्भयश्चक्रिपोभवत् ॥ २२९ ॥
रात्रौ चक्रबलाघाते लहरीवाटिकातलम् ।
भूपाले काचचक्रेशो बाह्यदेशं भयादगात् ॥ २३० ॥

विरोधमाषा उप्ता या आलिमीरेण धीमता ।
ताः पुष्पिताः पल्लविताश्चक्रेशाध्वेशभूमिषु ॥ २३१ ॥
हिन्दुवाटं प्रयातेस्मिन्नुग्रे मन्त्रिणि भूमिभृत् ।
साम्राज्यमकरोद्देशेध्वेशमन्त्रिभिराद्दतः ॥ २३२ ॥
बहिश्चक्रेश्वरेणात्र सामन्ताः करदायिनः ।
श्रीजैनशाहिवद्रीत्या कृताः स्वबलशालिना ॥ २३३ ॥
ताजचक्रादयो वीरा भ्रातरो लोहरादिषु ।
आहवे मुगलान्हत्वा चक्रुः स्वं सफलं वयः ॥ २३४ ॥
दुश्चेष्टिते विचिन्त्यात्र युवराजस्य चक्रपः ।
खानमिस्कन्दरं तं स रुरोधाजगरमिव ॥ २३५ ॥
तादृक्साहसिकं वीक्ष्य चक्रेशं भूमिपोनयत् ।
चतुर्थेब्दे शुचौ मासे कश्मीरांस्तं दिगन्तरात् ॥ २३६ ॥
पिता भ्राताथवा पुत्रो राज्ञां राज्यजिहीर्षया ।
शत्रवः कथिता लोके किं करोत्यपरो रिपुः ॥ २३७ ॥
इत्थं विदितभूपालचरिता अध्वपास्ततः ।
ससैन्याः प्रययुर्बाह्यदेशं कीचाश्रमाध्वना ॥ २३८ ॥
शत्रुश्येनं समादाय प्राप्ते चक्रिपतौ नृपः ।
राज्यं निष्कण्टकं मेने परितोषमुपाययौ ॥ २३९ ॥
खान इस्कन्दरो राजभृत्यैर्नीतो नृपालयम् ।
अपुनर्दर्शनात्कुर्वञ्श्यामा नेत्रोत्पलैर्दिशः ॥ २४० ॥
नृपादेशादथ क्रूरा नेत्रोत्पाटनमञ्जसा
श्येना इव कुरङ्गाय व्यधू राजात्मजाय ते ।
(व्यधू राजतनूजाय कुरङ्गायेव सारसाः)
तत्क्षणे या व्यथा तेन प्राप्ता वक्तुं न पार्यते ॥ २४१ ॥

तं विना नृपनिर्दैन्यांस्तान्क्रूरान्राजसेवकान् ।
पित्रोः शापो नु फलितो धनलुब्धस्य तस्य वा ॥ २४२ ॥

ज्ञात्वा कृत्याश्रमासीनानध्वेशांश्चक्रिराट् ततः ।
गत्वा वराहमूलान्ताच्छ्रीनगर्यां न्यवीविशन् ॥ २४३ ॥

पारावारात्समागत्य तत्रान्योन्यबलद्वयम् ।
व्यधाज्जनक्षयं घोरं जयाजयपरीक्षया ॥ २४४ ॥

गिरीनुल्लङ्घ्य यातोऽथ चक्रिभ्रातृसुतो निशि ।
मल्लेकदौलतो मार्गपेशान्देशान्न्यवारयन् ॥ २४५ ॥

असमर्थोऽध्वना यातुं मीयामीरोऽध्वपाग्रणीः ।
मार्गे पञ्चत्वमायातश्चलिताः केऽपि सायुधाः ॥ २४६ ॥

अथाध्वपेषु नष्टेषु यातेष्वेवं बहिर्भयात् ।
स महम्मदशाहोगान्नगरं चक्रिभिर्वृतः ॥ २४७ ॥

धत्ते मुदं जडमतिः शमितारिवह्नि-
स्तावद्ध्युदेति निलयाद्विषमोऽग्निरस्य ।
मह्मूदशाहिनृपतिः स्वसुतादवाप-
त्साम्राज्यनाशमहहो घटना विधातुः ॥ २४८ ॥

तथा हि भूभुजानेन गजाधीशनिवेशने ।
पुत्र इब्राहिमाखानो नीधिं दत्तोऽभवत्पुरा ॥ २४९ ॥

तुरुष्काहववातेन विधूता शतधा चमूः ।
याता तज्जीवरत्नौघयुता नौरिव सागरे ॥ २५० ॥

तदाहववधान्मुक्तो भाविराज्योदयात्ततः
खानः स प्राप कश्मीरान्पितृस्नेहविवर्धितः ॥ २५१ ॥

प्रादुर्बभूव राजानं प्रति राज्यजिहीर्षया ।
अस्मिन्नवसरे चक्रपतेर्दुष्टविषूचिका ॥ २५२ ॥

प्रादुर्बभूव राज्ञोस्य राज्यभ्रंशाय पूर्वजा ।
राजान्तरङ्गांश्चक्रेशो दुष्टरोगान्भिषगिव ।
मल्लेकलद्भट्टादीन्कारागारे रुषाक्षिपत् ॥ २५३ ॥
ताजचक्रालये बद्ध आलिमीरो निजानुगैः
विमुह्य रक्षिणो रात्रौ नीत्वा क्षिप्तो दिगन्तरम् ॥ २५४ ॥
तद्वैषम्यादिवाग्दोषोपरागादावृणोत्क्रुधा ।
मह्मूदशाहभानुं तं चक्रराहुर्मितैर्दिनैः ॥ २५५ ॥
इत्थेमकादशाब्दान्स दशमासान्दिनानि च ।
रक्षित्वा काश्यपीं राजा मह्मूदश्चलितोभवत् ॥ २५६ ॥
धर्मः फलति कालेन सद्यःपाको हि सोभवत् ।
खानस्यान्ध्याद्यथा याभूद्राज्यभ्रंशान्नृपस्य सा ॥ २५७ ॥
गग्गोडाख्यं खशस्थानं प्रहितोथ स चक्रिणा ।
दत्त्वा न्यायकसुग्यादीन्क्रूरान्रक्षिजनान्निजान् ॥ २५८ ॥

॥ इति मह्मूदशाहराज्यभ्रंशः ॥

जगत्सृष्टिस्थितिध्वंसहेतवे वृषकेतवे ।
भवाब्धिसेतवे ब्रह्मविष्णुरुद्रात्मने नमः ॥ २५९ ॥
अथ काञ्चनचक्रेण पुत्रो मह्मदभूभुजः ।
इब्राह्मशाह इत्याख्यां कृत्वा राज्येभ्यषिच्यत ॥ २६० ॥
स्वमन्त्रिपदवीं दीप्तां चक्रे चक्रेश्वरस्ततः ।
स्वीकृत्य राज्यतन्त्राणि द्रङ्गाशुल्कोद्धवैर्धनैः ॥ २६१ ॥
नाग्रामप्रमुखै राष्ट्रे राजयोग्यैर्न्ययोजयत् ।
अनुजांस्ताजचक्रेशमीयामीरादिकान्स्वकान् ॥ २६२ ॥
बाह्ये चाब्दालमार्गेशो डिल्लीशं मुगलेश्वरम् ।
सेनां मार्गयितुं मिर्जाबाबुरं प्रययौ रुषा ॥ २६३ ॥

आकारेङ्गितवाक्चेष्टासंपूर्णं वीक्ष्य मार्गपम् ।
क्षणं तुरुष्कराजोभूद्विस्मयानतकन्धरः ॥ २६४ ॥
तुरुष्कभूपेन ततो ज्ञात्वा मन्त्रिवरं च तम् ।
सहस्रसंख्या वीराणां सेनास्मै प्रतिपादिता ॥ २६५ ॥
इत्थं प्रवृद्धां वार्तां तां देशे पञ्चमहायने ।
वैशाखे श्रुतवांश्चक्रपतिर्विक्रमशोभितः ॥ २६६ ॥
स्वःक्रीडामिव कुर्वत्सु भूमौ चक्रिषु मार्गपाः ।
मल्लेकाब्दाललुहरमार्गेशाद्या महारथाः ॥ २६७ ॥
गिरीनुल्लङ्घ्य बाङ्गेलात्काश्मीरान्विविशुर्द्रुतम् ।
शिखालभिगमद्मूद्खानादिमुगलैर्वृताः ॥ २६८ ॥
फताहशाहजं खानं नाजुकं चाग्रयायिनम् ।
कृत्वा निविष्टाः संनद्धाः प्रतापपुरधन्वनि ॥ २६९ ॥
श्रुत्वैतच्चक्रपः सेनां नीलाश्वे स्वां न्यवीविशत् ।
सैन्यद्वयोद्गता वीराः स्वामिभक्तिमदर्शयन् ॥ २७० ॥
विपक्षपक्षिविच्छिन्ने म्लेच्छसैन्यविहायसि ।
विहाय स्वपदं यातुं नाशकुत स पक्षिभिः ॥ २७१ ॥
ततश्चक्रपतिं दूतः प्राह मार्गेशवाचिकम् ।
भो भोश्चक्रपते बाह्ये सामन्ताः करदायिनः ॥ २७२
कृता येन स्ववीर्येण लक्षैः पञ्चभिरावृतः ।
हतो गजपतिः श्रीमानिब्राहीमो बलोत्कटः ॥ २७३ ॥
तस्य मिरजबाबुरराजस्यानुचरा इमे ।
मया नीताः सहायार्थं संनद्धोस्तु भवान्रणे ॥ २७४ ॥
इत्युक्तो लेखहारेण चक्रेशोन्ववददमुम् ।
डिल्ली न देशः कश्मीराः प्रतिष्ठाना वयं न ते ॥ २७५ ॥

फलपाको मतो देशान्मुगलानां महौजसाम् ।
अथ वीरा महौजस्का महावीर्या धनुर्धराः ॥ २७६ ॥
इब्राह्मखानसेरङ्गमीरमल्लीकताजकाः ।
तथा मार्गेशपक्ष्यास्तु मल्लेकलुहरादयः ॥ २७७ ॥
रिगचक्रेशमल्लेको म्लेच्छाः शिखबिगादयः ।
कुरुपाण्डवसैन्यस्य युद्धं द्यङ्कुमिवोद्यताः ।
निर्ययुः समरे वीराः स्वबाहुबलदर्पिताः ॥ २७८ ॥
रिगचक्रेशवीरेण शक्तिः क्षिप्ता च वैरिषु ।
प्रकृत्ताद्भुतवीरेण ताजमीरेण सत्वरम् ॥ २७९ ॥
मीरसेरङ्गचक्रेण प्रहिता करवालिका ।
रिपोर्लुहरमीरस्य याता पुष्पक्षतोपमाम् ॥ २८० ॥
एवं प्रवीरैरन्योन्यं प्रकीर्य समराम्बरम् ।
स्ववीर्यमृगनाभ्युद्यत्सौगन्ध्याकुलितं कृतम् ॥ २८१ ॥
ततः स्वसैन्यैः सेनान्तस्ताजचक्रेश उद्ययौ ।
वातोद्धूतपताकाभिस्तर्जयन्निव वैरिणः ॥ २८२ ॥
रणः प्रववृते तत्र चक्रमार्गेशसैन्ययोः ।
आगच्छ जहि तिष्ठेति शब्दोभूद्भटसंक्षये ॥ २८३ ॥
समरोद्धतमीक्ष्यताजचक्र-
  मवदल्लूहरमार्गपस्तमेत्य ।
कुरु युद्धं किमतः परं किमन्य-
  न्मनुजैः स्वामिदशासु साध्यते तत् ॥ २८४ ॥
तन्निशम्य चिरं युद्ध्वा वीरैर्मल्लेकताजकः ।
शिश्रिये वीरशयनं नाकनारीविराजितम् ॥ २८५ ॥
कीर्तिशेषं गते तस्मिन्परे चक्रिसहोदराः ।
मीयामल्लेकसेरङ्गमाराद्या मुगलैर्युताः ॥ २८६ ॥

स्वसैन्यं निहतं दृष्ट्वा चक्रेशोल्पबलान्वितः ।
खशालयं ययौ भीत्या शोकेन च समाकुलः ॥ २८७ ॥

अथ मार्गेश्वरा जित्वा मल्लेकाब्दालकादयः ।
विविशुर्नगरं लोकानाश्वासंतो भयाकुलान् ॥ २८८ ॥

गत्वा नृपाङ्गणे सर्वे छत्रचामरशोभितम् ।
प्रददू राज्यतिलकमध्वेशा राजसूनवे ॥ २८९ ॥

अथ नाजुकशाहेन पित्र्ये सिंहासने श्रिते ।
प्रहर्षाकुलिता उच्चावचाः सर्वेभवंस्तदा ॥ २९० ॥

गत्वा ज्यमालमरुगां सनृपास्तेथ मन्त्रिणः ।
मल्लेकाब्दालकस्यांश आलिमीरस्य चापरः ॥ २९१ ॥

मार्गेशलुहरस्यांशो रिगचक्रस्य चापरः ।
विभक्तेर्थे चतुर्भागैस्तैश्चतुर्भिरिहत्यभूः ॥ २९२ ॥

खशालयस्थं चक्रेशं विसृष्टस्तैर्महात्मभिः ।
लेखहारस्तमाह स्म मार्गेशमुखवाचिकम् ॥ २९३ ॥

भोभोश्चक्रपते स्वामिभक्तिज्योत्स्ना भवादृशैः ।
दुर्मन्त्रिभिरमात्यानां विमला मलिनीकृता ॥ २९४ ॥

यस्य बालस्य साम्राज्ये राज्यकार्येषु मन्त्रिणः ।
बद्धाञ्जलय एवासन्स रुद्धो भवता कथम् ॥ २९५ ॥

रवेरावरणं मूढः कुण्डेन विदधाति कः ।
इत्थं दूतमुखाच्छ्रुत्वा मुमोच नृपतिं त्वसौ ॥ २९६ ॥

ततो महमदशाहः स गत्वा लुहरमासदत् ।
पूर्वोर्वरीशवद्गङ्गाशुल्काद्यमपि चाग्रहीत् ॥ २९७ ॥

नीतिज्ञो मन्त्रयित्वाथ मार्गेशैर्मुगलांस्ततः ।
विसर्जयामास नृपः संमान्यैतान्स्वकं पदम् ॥ २९८ ॥

उल्लङ्घ्य लोहरं प्रापुस्तुरुष्काः स्वनिवेशनम्।
मह्मूदशाहं संलेभे आलिमीरश्चिरं प्रभुम्॥ २९९॥
हेमन्तमतिवाह्यात्र वसन्तमिव तं नृपम्।
काश्मीरोपवने मीरो मार्गेशानुमतोनयत्॥ ३००॥
राज्यं कृत्वाथ वर्षैकं दशम्यां नाजिको नृपः।
ज्येष्ठशुक्ले नृपात्प्राप यौवराज्यं महम्मदात्॥ ३०१॥
षष्ठेब्दे मह्मदः शाहोभिषिक्तः सचिवैः शुचौ।
राज्ये खशालयान्मुक्तो भूयो जात इवादृतः॥ ३०२॥
दिवं मिरजाबाबुरः स प्रयातः स्वपुत्रयोः।
दत्त्वा स्वविभवं कामराणहोमाययोस्तदा॥ ३०३॥
सप्तमेब्देध्वपैः सार्द्धं युद्धेच्छुः काचचक्रपः।
नौर्वारग्रामादगमत्ससैन्योथ दिगन्तरम्॥ ३०४॥
याति चक्रपतौ वीरे ततः पश्चिमदिग्वधूः।
रतिहेतुरुषा केतुं मूर्ध्नि नित्यमधार्यत॥ ३०५॥
तद्वर्षे कार्तिके शुक्ले मन्हूमाख्यश्चमूपतिः।
मिरजाकामराणस्य काश्मीराञ्जेतुमाययौ॥ ३०६॥
शिखालभिगमह्मूदखानादिमुगलैः सह।
कुर्वन्दश दिशः पूर्णा गर्जद्भिः प्रबलैर्बलैः॥ ३०७॥
श्रुत्वा मह्मदशाहाद्याश्चक्रेशं शीघ्रमानयन्॥
साहायकार्थमध्वेशै राष्ट्रघोषकृतार्हणम्॥ ३०८॥
सहस्रैरश्ववाराणां म्लेच्छा नगरमाविशन्।
काश्मीरिकाश्च दुर्गेषु स्वबलानि न्यवीविशुः॥ ३०९॥
भयात्पौरजने याते गिरिगह्वरवर्त्मसु।
वीरेषु सैन्यबाहुल्यात्प्रनष्टेषु च तत्र तु॥ ३१०॥

शून्यं पुरवरं दृष्ट्वा मुगलास्ते क्रुधादहन् ।
गृहाणि राजधानीं च कुह्रदीनस्य लुण्ठकाः ॥ ३११ ॥
दुर्गेभ्यो निर्गता वीरास्तुरुष्कैराहवेच्छया ।
स्वेच्छया प्राणसर्वस्वं विक्रीय यश आददुः ॥ ३१२ ॥
ग्रामेषु नगरेरण्ये तुरुष्कैर्निष्कृपैर्हताः ।
सहस्रसंख्या लोकानां जुलुच्यवधकारिभिः ॥ ३१३ ॥
ततः काश्मीरिकैर्वीरैर्मार्गेशैश्चक्रिभिश्च ते ।
अर्कांशुभिस्तमांसीव संधायापासिता इतः ॥ ३१४ ॥

॥ इति तुरुष्कोपद्रवः ॥

मुक्तास्ते साहसाद्वीराः स्वगृहेषु स्थितिं व्यधुः ।
मार्गेशानादरत्रस्तः काचचक्रो बहिर्ययौ ॥ ३१५ ॥
वर्षेष्टमे शुचौ शूरपुरात्सोप्याययौ पुनः ।
शस्त्रं प्रतिहतं ज्ञात्वा बाह्यं यातो यथागतम् ॥ ३१६ ॥
मार्गमासेत्र शरदि कास्कारीयाश्चमूचराः ।
मिरजाहैदराद्याः श्रीसैदखानमहीभृतः ॥ ३१७ ॥
हयारोहसहस्रैर्द्वादशभिः परिवारिताः ।
काश्मीरानाययुर्जेतुं श्येना इव विहङ्गमान् ॥ ३१८ ॥
कोटाद्गमनानिर्यन्त आगच्छन्तो नृपालयम् ।
प्रविशन्तो भवन्तीत्थं श्रुत्वा सन्तो विपेदिरे ॥ ३१९ ॥
तुरुष्कोपप्लवाल्लोकैः कास्कारोपद्रवो महान् ।
अज्ञायि सूर्यग्रहणं चन्द्रग्रासाद्विशिष्यते ॥ ३२० ॥
चलिते सकले जीवलोके वेश्मावलिस्ततः ।
शवराशिरिवोच्छ्वासशून्याभूद्भयदायिनी ॥ ३२१ ॥
तस्यां दाहक्रियां कर्तुं तीव्रवह्निप्रदायकाः ।
सिकन्दरपुरीराजधानीं रम्यामतेजयन् ॥ ३२२ ॥

नीचावचगृहैर्लक्षसंख्यैर्दग्धैः पुरोर्वरा।
जाता श्मशानभूवत्सा दग्धकाष्ठभयङ्करा ॥ ३२३ ॥
राजधानीद्वयं तादृग्लभ्यते कुत्र भूमिपैः।
सुधादार्विष्टकाचित्रे कोटिसंख्या व्ययीकृताः ॥ ३२४ ॥
श्रीजैननगरे दिद्दामठे चाग्निं विना कृतम्।
राजधानीद्वयं भूभृत्सुकृतमिव तत्स्थितम् ॥ ३२५ ॥
वेतालसाधनायुक्ता इवासन्मुगला ध्रुवम्।
लब्धं यत्सद्मनिहितं गुप्तं पौरधनं तु यैः ॥ ३२६ ॥
जलावरणयुक्तासु भूपभूमिषु शिश्रियुः।
काश्मीरिकाश्चमूनाथा आश्रयान्म्लेच्छशङ्कया ॥ ३२७ ॥
चिरोड्डारं च हाजीङ्कोट्टं चक्रधरं तथा।
श्रुत्वाभ्यवाहयन्मासत्रयं म्लेच्छैः प्रयुध्य ते ॥ ३२८ ॥
दैत्यरूपेण खुःशेन स्थितांश्चक्रधरान्तिके।
काश्मीरिकान्प्रति कृतं युद्धं निष्फलमप्यगात् ॥ ३२९ ॥
"वन्ध्यमप्यभवद्युद्धं कृतं काश्मीरिकान्प्रति।"
खिलीकृतास्तुरुष्कैस्ता भुवो मडवराज्यगाः।
हृत्वा फलसमृद्धिं तां हत्वा ग्राम्यजनान्क्रुधा ॥ ३३० ॥
ये याता नौषु तीर्त्वासन्खुयाश्रमादिभूमिषु।
सबालवृद्धाः सुखिनः स्वायुःशेषेण रक्षिताः ॥ ३३१ ॥
जुलुचोपप्लवे पूर्वं तथा कज्जलसंगरे।
क्षोभोभूत्तादृशो देशे कुकृत्यात्पापिनां विशाम् ॥ ३३२ ॥
चक्राधारादेत्य भूपेन्द्रयुक्ता
भीमादेवीसंनिधौ संनिवेशम्।
चक्रुस्तीर्त्वा लेदरीवामपारं
चक्रेशा वा मार्गपा आहवाय ॥ ३३३ ॥

खान इस्कन्दरो मिर्जाहैदरोन्ये महारथाः ।
काश्मीरिकान्प्रतिययुः संनद्धास्तत्र संयुगे ॥ ३३४ ॥
मार्ताण्डपादमूले तत्राहौषुर्बलद्वयात्प्राणान् ।
मल्लेकालकहोसनमीरशिखालाः कमालमीरश्च ॥ ३३५ ॥
कास्कारीयाः प्रवीराश्च केचिद्युद्ध्वा दिवं ययुः ।
सफलं स्ववयः कृत्वा मल्लेकालादिभी रणे ॥ ३३६ ॥
रे मूढाः कुरुत सदैव सेवनं त-
त्तान्सर्वान्भवविभवान्विहाय लोलान् ।
दृष्ट्वा तन्मरणमथालिमीरनाम्नः
सङ्ग्रामे मुगलवरैर्हि देशहेतोः ॥ ३३७ ॥
विदुरोपमिते तस्मिन्निहते दुद्रुवुर्भटाः ।
काश्मीरिकाः कृताश्वासाश्चक्रेशाध्वेशनायकैः ॥ ३३८ ॥
कबन्धनर्तका यक्षनरा वेतालराक्षसाः ।
महामांसाशनव्यग्रा जन्यव्याप्ता इवाहवे ॥ ३३९ ॥
रणोद्याने वीरपानमदोन्मत्तेषु तेष्वथ ।
हतशिष्टे चमूयुग्मे स्वाश्रयेषु न्यविक्षत ॥ ३४० ॥
अथ चक्रेशमार्गेशौ नृपादेशात्समेत्य तैः ।
मुगलैः सह संधानमकरोत्पौरुषोर्जितौ ॥ ३४१ ॥
नवसंख्यानि वस्त्राणि कतीफसूफसग्लतैः ।
तोकं तद्भाषयादाय मुगला भूपतेः पुरः ॥ ३४२ ॥
नृपमुद्राङ्कितं पत्रं गृहीत्वा मौसुलाक्षरैः ।
प्रत्यायाताः स्वसैन्ये तत्कुर्वन्तो हर्षनिर्भरम् ॥ ३४३ ॥
धाटीभिः पामरा नीताः स्त्री पुमान्पुष्यदन्तिकाम् ।
मुक्ता हस्सनमीराद्यैरानीताः करुणापरैः ॥ ३४४ ॥

ततोब्दे नवमे ज्येष्ठे स्वदेशं मुगला ययुः।
बलात्पौरश्रियं साम्नादाय राजसुतामपि ॥ ३४५ ॥
इत्थं सतीसरोदेशे पीडाभूत्पापिनां विशाम्।
पूर्वपश्चिमतः केतोरनिशं दिवि दर्शनात् ॥ ३४६ ॥

॥ इति कास्कारीयोपद्रवः ॥

पक्वशालिवरस्फातिपूर्णक्षेत्रेषु सर्वतः।
नभसस्तारकाः पेतुर्भूयः केतुरदृश्यत ॥ ३४७ ॥
सम्यङ्निगीर्णेन्नराजे तदुपद्रवरक्षसा।
उदजृम्भन्महाघोरो दुर्भिक्षोन्नपते रिपुः ॥ ३४८ ॥
निविष्टे मण्डलेमुर्ष्मिश्चेरुस्तत्सैनिकास्ततः।
क्षुत्पिपासादयो लोकपीडका बलवत्तराः ॥ ३४९ ॥
सहस्रदशभिर्निष्कैर्लभ्या मूल्येन खार्यभूत्।
धान्यस्य गतिरादातुं कान्यस्य धनिनो विना ॥ ३५० ॥
भर्तृभक्तिं सुतस्नेहं शुश्रूषां पित्रोरेव च।
हित्वा स्वप्राणरक्षायै चेरुः स्त्रीपुरुषाः क्षुधा ॥ ३५१ ॥
भुक्त्वा द्वित्रिचतुर्वारं क्षुधार्ता दिवसान्तरे।
अटन्तः प्रेतरूपा हि दृष्टा भोजनवाञ्छया ॥ ३५२ ॥
तत्कालेब्दालमल्लेकादयः पुण्यरता हि ते।
प्रत्यहं तन्डुलशतैः पक्वान्नैः पुपुषुर्जनम् ॥ ३५३ ॥
ग्रामेषु नगरे राजमार्गेषु गणनास्तु न।
क्षुत्पिपासाप्रमीतानां प्रेतानामिव देहिनाम् ॥ ३५४ ॥
संचितं रूप्यकुप्यादि विक्रीय व्यधुरात्मनः।
प्राणसंधारणं केचिच्छाकेनाक्षोटपिण्यकैः ॥ ३५५ ॥
उपद्रवभयादेष दुर्भिक्षोपप्लवो महान्।
गलनेत्रामयादुष्टविस्फोटो ह्यतिदुःसहः ॥ ३५६ ॥

ज्येष्ठान्तं दशमाब्दस्य नवमाद्वत्सराङ्कशम् ।
घोरे दुर्भिक्षतमसि परितः क्रान्तमण्डले ॥ ३५७ ॥
गुण्ठीबीजोद्भवस्नेहधूपैर्दीपैः प्रकाशयन् ।
आशा अन्ननृपामात्यः सुकालो योद्धुमाययौ ॥ ३५८ ॥
यथा गोधूमकलटा उद्ययुस्तम्भजा भुवः ।
कुर्वन्तः स्वफलैः शेषजन्तोरारात्रिकामिव ॥ ३५९ ॥
स्वबलैर्भृशमाक्रान्तमवेक्ष्यान्नाधिपः स्वयम् ।
आययौ बलिनं जेतुं दुर्भिक्षं घोरराक्षसम् ॥ ३६० ॥
वितत्य महतीं सेनां प्रियङ्गुशालिकोद्रवैः ।
यन्त्राश्मभिरिवाक्षोटैर्जित्वा तं स न्यविक्षत ॥ ३६१ ॥

॥ इति दुर्भिक्षोपद्रवः ॥

अन्नराजफलैः पुष्टा जन्तवोतिकृशास्ततः ।
पुनर्जातमिवात्मानममन्यन्त दिवानिशम् ॥ ३६२ ॥
तदा काञ्चनचक्रेशः स्थितिं जैनपुरे व्यधात् ।
मन्त्रित्वमध्वपादेशाद्राज्ञोभ्यर्णे विभूषयन् ॥ ३६३ ॥
श्वपचाकारकश्चक्रपतिर्मडवराज्यगः ।
भूमीरदण्डयन्मार्गपानां ताटस्थ्यवीक्षणात् ॥ ३६४ ॥
अत्रान्तरे महान्देशो देहो दुष्टैरिवामयैः ।
स्वस्वावासाश्रयैरेतैः पीडया जर्जरीकृतः ॥ ३६५ ॥
तदुत्थपापसंतापाच्चैत्रान्तेब्दे त्रयोदशे ।
राजा मह्मदशाहोभूदस्वस्थो नियतेर्बलात् ॥ ३६६ ॥
कान्तं देहं रुजा क्रान्तं शान्तं वीक्ष्य च भूमिपः ।
मल्लेकलद्दभट्टाख्यं सस्नेहं प्राह मन्त्रिणम् ॥ ३६७ ॥
राजधर्मोद्भवैः पुण्यपापैः संवर्धितोपि सन् ।
तथापि कायः सापाय इति सर्वत्र निश्चयः ॥ ३६८ ॥

अस्मद्वंशे महीयांसः शंसदीनादयो नृपाः।
श्रीजैनोल्लाबदीनश्चाप्येते पूर्वपितामहाः॥ ३६९॥
तद्वंश्योहं मदीयः कः कीदृशो मत्परो भवेत्।
इति चिन्ताकुलं चेतो ज्वरेणाद्यापि दह्यते॥ ३७०॥
इत्युक्त्वा विरते राज्ञि मार्गेशाब्दालकादयः।
आगतास्तादृशं वीक्ष्य साश्रुनेत्रास्तमब्रुवन्॥ ३७१॥
भूपास्मदपचारेण प्रजाभाग्यैरथापि ते।
कायक्लेशोस्ति स्वस्यैव दण्डो भृत्यापराधतः॥ ३७२॥
श्रुत्वाब्रवीन्नृपस्तेषां वचो मत्तनयाः सदा।
भवद्भिः पालनीयाश्च वयं यामः पराध्वनि॥ ३७३॥
आक्रन्दोभून्महाराजगृहे श्रुत्वा नृपोदितम्।
तदह्नि निष्ककोट्यश्च राज्ञा धर्मेण योजिताः॥ ३७४॥
प्राप्ते पुष्पाकरे मासे व्यथार्तस्यास्य भूभुजः।
दातुर्जातु विपत्तिः स्यात्कृष्णपक्षे कथञ्चन॥ ३७५॥
ज्येष्ठशुक्लादिदिवसे गुरुवारे नरार्यमा।
वर्षान्पञ्चाशतिं भूपो राज्यं कृत्वास्तमाययौ॥ ३७६॥
तस्मिन्याते दिवं लोकः सशोको विललाप तम्।
हा कं श्रयाम भवति नाकलोकमुपस्थिते॥ ३७७॥
अस्मान्को नृपते कृच्छ्रात्त्वां विना पालयिष्यति।
मृगाङ्कसुन्दराकार महासेनपराक्रम॥ ३७८॥
महम्मद महीपाल महीं हित्वा क यास्यसि।
इति प्रलापमुखरे राजद्वारे स्थिता जनाः॥ ३७९॥
संस्थितस्य नृपस्यादुर्बाष्पैरिव जलाञ्जलीन्।
कर्णीरथमथारोप्य शवं बृहन्मृताजिरे।
दत्तस्कन्धाः पितुः पार्श्वे गोगर्ते मन्त्रिणः क्षिपुः॥ ३८०॥

क्वेदं कोमलशय्यासु नृपार्हं शयनं प्रभोः ।
क्व शर्करिलभूम्यन्तस्तमोन्धे विवरे स्थितिः ॥ ३८१ ॥
तदह्नि शोकमूकस्य लोकस्योच्छ्वसनात्परम् ।
धूमादि रन्धनाभावान्नालक्ष्यत गृहेषु तत् ॥ ३८२ ॥

॥ इति महम्मदशाहस्वर्यानम् ॥

मार्गेशेन कृताशंसः सप्रशंसोस्य मन्त्रिभिः ।
शंखशाहोयमित्याख्यां कृत्वा पुत्रोभ्यषिच्यत ॥ ३८३ ॥
नवराज्योर्जितं चैतं युवानं वीक्ष्य भूमिपम् ।
महान्तः पामराः सर्वे तुतुषू राजवल्लभाः ॥ ३८४ ॥
चिरं स्वे पैतृके राज्ये स्थाया इति जनाशिषः ।
शृण्वन्राजगृहं प्राप शंखशाहः सहानुजः ॥ ३८५ ॥
तस्मिन्राज्यस्थिते जैनपुरान्नगरमाययौ ।
काचचक्रपती रिगचक्राश्वस्तो महाबलः ॥ ३८६ ॥
दृष्ट्वा वीरं तमायान्तमुत्सभट्टान्वितस्ततः ।
मार्गेशहोस्सनः प्रायात्कीचाश्रमेध्वपान्तिके ॥ ३८७ ॥
प्रविष्टो नगरं रम्यं काचचक्रः सभाजितः ।
नृपेण तेन सस्नेहं परपक्षविमर्दनः ॥ ३८८ ॥
तथा काञ्चनचक्रेशो ज्ञात्वा दूरगतान्रिपून् ।
सबलो गर्भसोडारे निविष्टोरिजिगीषया ॥ ३८९ ॥
अत्यन्तिकस्थं बलिनं रिपुमाकर्ण्य मार्गपाः ।
चमूं निवेशयामासुस्तूर्णं जलगदान्तिके ॥ ३९० ॥
महात्मा रिगचक्रेशः काचचक्राध्वपेशयोः ।
गत्वा प्रेरितदूतः स साम कर्तुमथेष्टवान् ॥ ३९१ ॥
नगरे काचचक्रेशः क्रमराज्ये तु मार्गपाः ।
सन्तु सोहं समस्तेषामिति सांधिं व्यधादयम् ॥ ३९२ ॥

अथ मार्गेशसैन्यस्थानानीयान्तिकमात्मनः ।
जैतचक्रेशमल्लेकदौलतेब्राह्मखानकान् ॥ ३९३ ॥
स्वबन्धून्काचचक्रेश आरुरोह जयी पुरम् ।
निवासमकरोद्वीरो रिगचक्रालयेषु सः ॥ ३९४ ॥
काचचक्रे स्थिते राज्ञोन्तिके निर्णयकारिणि ।
बलं बलवतां दृष्टं शौर्येण तु पृथग्जने ॥ ३९५ ॥
आगत्य रिगचक्रेशः काचचक्रान्तिकं तदा ।
दिनान्युषित्वा ज्ञात्वास्य स्वल्पप्रेमागमत्पुनः ॥ ३९६ ॥
मार्गेशनिकटं गत्वावोचच्चक्रेशचेष्टितम् ।
संमन्त्र्य वीरान्सर्वांस्तान्संघटय्य नृपाग्रगान् ।
रिगचक्रः स मार्गेशं ज्ञात्वा दुष्टमिवामयम् ॥ ३९७ ॥
कश्मीरभूमौ प्रथिता अमात्या भीमार्जुनद्रोणसमा रणेषु ।
मल्लेकश्रीदौलतगाजखानचक्रेशमुख्याश्च विचारदक्षाः ॥ ३९८ ॥
सिद्धादेशात्प्रसिद्धस्य सिद्धादेशाधिकारिणः ।
श्रीमन्मल्लेकराजाननाज्जुकस्य मुखाद्यथा ॥ ३९९ ॥
विज्ञप्यन्तेत्रदेशीयैः कान्दिशीकैर्बलातुरैः ।
सर्वैर्जनपदैर्दीनैर्दुरातङ्ककलङ्कितैः ॥ ४०० ॥

तथा हि

जैनशाहे दिवं याते दुर्बला बलवत्तरैः ।
पीडिताः कान्दिशीकाश्च जना दुर्दण्डतो गताः ॥ ४०१ ॥
श्रीसैफडामरेन्द्रेण नृपामात्येन पालिता ।
लालिताथ प्रजा नित्यं दुर्व्यवस्थानिवारणात् ॥ ४०२ ॥
पुण्यपापपरीपाकान्मन्त्रिभिरन्तरान्तरात् ।
पोषिता शोषिता लोकाः सद्विचारा विवेकतः ॥ ४०३ ॥

भानुरिव ततश्चक्रपतिर्मल्लेककाञ्चनः ।
उदेत्य मन्त्रिवीथीं तां नृपादेशादभूषयत् ॥ ४०४ ॥
विचारनिरतेमुष्मिन्नासीने राजमन्दिरे ।
बलं बलवतां दृष्टं शौर्येण तु पृथग्जने ॥ ४०५ ॥
वैमत्यान्महतां पापाद्विशां च तत उत्थिताः ।
मुगलातङ्कदुर्भिक्षदोषास्तस्मिन्बहिर्गते ॥ ४०६ ॥
मार्गेशाब्दालकानीतो मीरेजोगणयत्ततः ।
अप्राप्तानिव प्राप्तान्स कश्मीरांश्चक्रिणो भयात् ॥ ४०७
काचचक्रेशमल्लेके हिन्दुवाटे गते दिवम् ।
काश्मीरिकाणां बाह्यानामभूत्कलुषितं मनः ॥ ४०८ ॥
तदाकर्ण्याथ मीरेजहैदरोचीकरन्महान् ।
कुलागतमिवास्वस्थं तदा कश्मीरमण्डलम् ॥ ४०९ ॥
चक्रेशेन्तर्हिते भूमौ मुगला दैत्यरूपिणः ।
विचेरुः शारदापीठे निःशङ्कमकुतोभयाः ॥ ४१० ॥
मीरेजमधुगोलस्य कश्मीरस्थस्य चान्तिकम् ।
आययुः परदेशेभ्यो मुगलाः सरघा इव ॥ ४११ ॥
बलेषु वर्धमानेषु तेषु यातीतवार्षिका ।
लोत्रप्रतिग्रहोपात्ता भूर्हृता तैर्नियोगिभिः ॥ ४१२ ॥
दिवानैर्म्लेच्छसंख्येशैर्लिखिता मुसुलाक्षरैः ।
भूमिः समग्रराष्ट्राणां हृत्वाप्यायं प्रजास्वपि ॥ ४१३ ॥
इतीव भूर्नभोमासि साध्वीवाथ व्यकम्पत ।
द्वाविंशेब्दे जनान्नीचान्हताप्यायानवेक्ष्य सा ॥ ४१४ ॥
प्रनष्टमुगले देशे भूमीच्छुरखिलो जनः ।
काश्मीरिकाणां विजयाद्भूयोभूदर्थलिप्सया ॥ ४१५ ॥

तुरुष्कसाहचर्यात्ते काश्मीरा नात्यजंस्त्रयम्।
वेशो भूमिर्भोजनं च चिकित्सादण्डमद्भुतम्॥ ४१६॥
दृष्टाशुभोपि लोकोयं नामुञ्चद्धृदयाद्दृढाम्।
दुर्वासनां महावैद्याश्चिकित्सां शास्त्रगामिव॥ ४१७॥
दुराचारादियं भूमिर्वायुक्रान्तेव भूरिशः।
त्रिंशेब्दे चाश्वयुङ्मासे कम्पिता स्वामिनो मुहुः॥ ४१८॥
आर्तत्राणान्महीदानान्मुक्तेर्लोत्रप्रतिग्रहे।
मोक्षाच्चातिथिसत्काराद्गहो धर्मेण शाम्यति॥ ४१९॥
अदृष्टविग्रहेशेन स्वेच्छाक्रीडनका इव।
धात्रा विनिर्मितः स्रष्टुं जगद्बाबादमाभिधः॥ ४२०॥
दृष्ट्वैनं स्त्रीयुतं चाग्रे प्रादुरासन्दशाष्ट च।
सहस्राण्यालयान्यस्य विभोर्दुर्घटलीलया॥ ४२१॥
अर्शकोर्शी दिवः सप्त भुवः षट्त्रिंशदावृतम्।
जगत्स्फारमवेक्ष्यार्षिरूपाः सृष्टाः पिगम्बराः॥ ४२२॥
विभुधामाश्रयी श्रीमान्नसूलोद्य पिगम्बरः।
दिगम्बरेच्छया लोककृपालो मानवो जयेत्॥ ४२३॥
स्वदैवसृष्टिभूमध्ये हिमवान्गिरिरुत्तमः।
तत्रास्ति देशः कास्कारो हारो भूमिवरस्त्रियः॥ ४२४॥
सतां सुकृतसंभारोगारः सर्वधनुष्मताम्।
नानाद्रुमलताकारो विहारः सर्वसंपदाम्॥ ४२५॥
मेधावी रेवतीशप्रथितभुजबलः सद्वयः श्रीधरश्च
भूपालेन्द्रः प्रतापोर्जितनिजयशसा भूषितो नामवर्णैः।
जीयात्तद्देशजन्मार्जितबहुवसुधाप्रोद्गतो भानुमूर्तिः
काश्मीरान्योजनायानयतिमिरहतान्योजनायेव नष्टम्॥४२६॥

मीरीजहैदरमहम्मदवाक्प्रमाणो
जीयाच्चिरं वसुमतीमवतीर्ण एव ।
कर्तुं सतीसरसि नौशरवानतुल्यं
पूर्वोर्वरीशचरितं चिरकालनष्टम् ॥ ४२७ ॥
सर्वैः पैगम्बरवरैर्मिलितैः खदैव-
स्यादेशतस्त्विह पिगम्बरवाटिकां ताम् ।
एतां कुकृत्यचरिताख्यदवाग्निदग्धां
सत्कर्मवृष्टिनिवहैः परिपोषणाय ॥ ४२८ ॥
श्रीमत्काञ्चनचक्रपे च विधिनान्वर्थीकृताख्याक्षरा
राजिः काञ्चनदानतस्तव सदा सत्यं समीक्षामहे ।
भ्राजिष्णौ करपद्मकर्णनिचयेभिज्ञानमेतादृशं
सव्यः सोस्तु करः परोपकृतयेजस्रं सहस्रं समाः ॥ ४२९ ॥
श्रीमन्मार्गपतीश तावकयशः शुभ्रं विलोक्याबहि-
श्चक्राधीश समागतो ऋतुपतिस्त्वां सेवितुं सर्वतः ।
कुन्दैः कञ्जलकर्णिकारकुटजैः स्रग्भिस्तथा मञ्जरी-
पुष्पैः षट्पदकोकिलास्वनभरैः कुर्वञ्जयोद्घोषणाम् ॥४३०॥
सन्तः प्रमुदिताः केन न केन तव कर्मणा ।
वसन्तो भवतामस्तु वसन्तः शुभकृत्सदा ॥ ४३१ ॥
(एषुश्लोकेषु कवेरेव ग्रामीणतां निरूप्य लेखके दोषो नोपचार्यः ।)
जिष्णुः संतापितारातिः कालखड्गधरो रणे ।
प्रणेता जगतां प्राणः शंकरो विनतात्मनाम् ॥ ४३२ ॥
कलावान्राज्यराड्गास्वान्गुरुकाव्यक्षमङ्गलः ।
जीयाद्भूभूषणो नित्यं गाजशाहो महारथः ॥ ४३३ ॥
मुन्यग्निसंख्ये वर्षे च शुचौ मास्यसितेतरे ।
अष्टम्यां राजहोमाय पुत्रस्याकूब्ररभूभुजः ॥ ४३४ ॥

मुगलेशस्य सेनानीकरबाहुधरान्वितः।
नाजुकशाहः पाषण्डदेशं प्राप्तो जिगीषया ॥ ४३५ ॥
संमन्त्र्य गाजशाहोथ श्रुत्वा तद्बाह्यचेष्टितम्।
मल्लेकहोसचक्रेशं बाह्यदेशं व्यसर्जयत् ॥ ४३६ ॥
लौलमल्लेकचक्रेशपेजाहैबतखानकैः।
खुजाफतिहमीरालकाद्यैर्मन्त्रिवरैर्युतः ॥ ४३७ ॥
वीरायुतैः पत्तिभिश्च निःसंख्यैः पटमण्डपैः।
महात्मा होसमल्लेको निविष्टः सुबलान्तरे ॥ ४३८ ॥
तावन्मुगलसैन्येन महता बाह्यभूर्वृता।
विमला सज्जनस्येव चित्तभूः कलुषैर्मलैः ॥ ४३९ ॥
ततो राजपुरीदेशमशेषमावृणोद्बलैः।
मुगलेशस्य प्राक्सैन्याः पाषाण्डैरकृतादरैः ॥ ४४० ॥
क्रुद्धः काश्मीरिको राजाकर्ण्य शूरपुराद्बहिः।
सबलो हिन्दुवाटं स प्रयातस्तज्जिगीषया ॥ ४४१ ॥
ऊर्जितां गाजशाहस्य चमूं दृष्ट्वा महीयसीम्।
मार्दवं म्लेच्छसेनागाद्धिमानीवार्करश्मिभिः ॥ ४४२ ॥
दृष्ट्वोर्जितं गाजशाहबलमाजग्मतुर्द्रुतम्।
फत्तेमल्लेकलुहरमल्लेकावस्य चान्तिकम्।
रुद्धेषु दुर्गमार्गेषु प्रभूतं मौगलं बलम् ॥ ४४३ ॥
वीरैः फतिहखानाद्यैर्गजेन्द्रैराकुलीकृतम्।
खुजहाजकयोसूफचक्राद्या मुगलान्विताः ॥ ४४४ ॥
साम राजपुरीराज्ञा गाजीशाहभयात्कृतम्।
नौशाहारस्थिते शाहनाजुके मुगलास्तथा ॥ ४४५ ॥
उवाह संधिबन्धेन कालं दुर्गादिकर्मभिः।
विसृष्टो गाजभूमर्त्रा दूतेशो मुखवाचिकम् ॥ ४४६ ॥

करबाहुधरादीनां प्राह गत्वा सभान्तरम् ।
भोभो म्लेच्छपते कस्मादकस्मात्प्रबलैर्बलैः ॥ ४४७ ॥
आयाताः केन विश्वस्ता अज्ञातनृपविक्रमाः ।
अथवा प्राक्तनी शैली शाहियुद्धं नु विस्मृतम् ॥ ४४८ ॥
बलद्वयवधात्पापं युष्माकं परिणंस्यति ।
यदि शक्तिः किमेतैः स्याद्दुर्गग्रन्थ्यादिकर्मभिः ॥ ४४९ ॥
विधिर्ददाति यद्यस्य स तत्फलमथाश्नुते ।
चक्रिराजानकाद्या वा स्थिता अंशहरा इतः ॥ ४५० ॥
देशत्के मुगलाः को वा खुजहाजी भविष्यति ।
इत्युक्तो लेखहारेण खुजहाज्यब्रवीदिदम् ॥ ४५१ ॥
शासनमक्भराख्यानं मुगलेशस्य वच्म्यहम् ।
चक्रेशभूपं दातारं गुणज्ञं धन्विनां वरम् ॥ ४५२ ॥
विचारे नौशिरोवानं कया स्तुत्या स्तुवीमहे ।
काश्मीरिकाणां देशांशो म्लेच्छानां पारितोषकम् ॥ ४५३ ॥
दत्त्वा मुगलराजस्य चेतःशुद्धिर्विधीयताम् ।
अथवा देशधाटीभिः किं स्यात्प्राकृतमेतया ॥ ४५४ ॥
युद्धेन वीरहानिः स्याज्ज्ञाता सर्वस्य भूमिपः ।
दृष्टाः श्रुताः स्मृता नैव गाजिशाहस्य संनिभाः ॥ ४५५ ॥
योद्धुं दिगन्तरं को नु यात एतत्परः समः ।
दूतात्प्रत्यागताच्छ्रुत्वा क्रोधविस्मयवान्नृपः ॥ ४५६ ॥
अवरूढोद्रितुङ्गात्स समारूढो महद्यशः ।
श्रीमच्छृङ्गारमल्लेक आलीमल्लेक इत्यपि ॥ ४५७ ॥
खना अह्मद्योसूफइबशाहादयः सुताः ।
खानः स शाहिभाजोपि वृतश्चान्यैश्च मन्त्रिभिः ॥ ४५८ ॥

स्वस्वसैन्यसमुन्नद्धैः कश्मीरेन्द्रो विभूषितः।
सहस्रैरश्ववाराणां वाजिभिर्वेगराजिभिः ॥ ४५९ ॥
शार्ङ्गत्सरुगदाप्रासशक्तितोमरभूषितैः।
नागरन्ध्रगतोफाकनामाश्मरन्ध्रगायुधैः।
पदातिलक्षैः संनद्धैः शत्रुसेनान्तिकेवसत् ॥ ४६० ॥
अन्तिकादन्तिकं व्यूहैर्निविष्टे सैन्ययोर्द्वये।
पारावारगता योधा रणरङ्गमभूषयन् ॥ ४६१ ॥
हासदुन्दुभिनादेन कर्णतालैश्च हेषकैः।
गजाश्वानामश्मरन्ध्रगर्जनैस्तर्जयन्निव ॥ ४६२ ॥
अथ पत्तिसहस्रेण पुरोगेन प्रभूषितः।
प्रवीरो गाजिशाहोत्र समरारम्भमग्रहीत् ॥ ४६३ ॥
दृष्ट्वा वीरं तमायान्तं केचिन्मुगलपुङ्गवाः।
मनःशैथिल्यमादाय शनैर्युद्धाय निर्ययुः ॥ ४६४ ॥
नृपाग्रे म्लेच्छवीराणां स्वामिभक्त्या पुरो गताः।
मुण्डानि चिच्छिदुर्युद्धे शरावाणीव चक्रतः ॥ ४६५ ॥
रणे हैबतखानेन प्राणदानेन तत्क्षणम्।
विवाहोजनि स्वःस्त्रीणां पञ्चबाणेन योषिताम् ॥ ४६६ ॥
वीरव्रतं पुरोगानामद्भुतं च तपः प्रभोः।
विचिन्त्य मुगलाश्चेलुर्हतशेषा यथागतम् ॥ ४६७ ॥
स्वप्राणवेतनैर्युद्ध्वा परोस्त्रव्यवहारिणः।
विजित्य कीर्त्युपचयं स्वर्यातस्तद्बलद्वयात् ॥ ४६८ ॥
पत्तीनामद्भुतं वीर्यं वीक्ष्य म्लेच्छबलान्तरात्।
धात्र्यात्तं रूप्यकुप्यादि तद्राज्ञानुग्रहीकृतम् ॥ ४६९ ॥
स्वसैन्यापचयं शत्रुसेनोपचयमेव च।
विचिन्त्य मुगला याता वाणिजा इव वेतने ॥ ४७० ॥

46

स रराज पुरीराजः पाषण्डान्करदायिनः ।
कृत्वा प्रत्याययौ गाजशाहः स विक्रमोर्जितः ॥ ४७१ ॥
नित्यं जेता चिरं स्थेया राजन्साम्राज्यदीक्षितः ।
इत्याशिषो जनाच्छृण्वन्काश्मीरान्तर्नृपोविशत् ॥ ४७२ ॥
वेदैः षड्स्वरसैः पदक्रमयुतैर्वेदान्तसिद्धान्तकै-
स्तर्कव्याकरणैः पुराणपठनैर्मन्त्रैः षडङ्गागमैः ।
शैवैर्वैष्णवसौरबौद्धसहितैश्चित्रैर्विहारैर्मठै-
र्द्राक्षाकुङ्कुमसस्यशालिनिवहैः पुष्पैः सुगन्धैरपि ॥ ४७३ ॥
पौराणश्रुतितर्कशास्त्रनिचयैः किं चाग्निहोत्राङ्कितै-
र्विप्रैर्ध्यानतपोजपादिनिरतैः स्नानार्चनाद्युत्सुकैः ।
नागैः कोटियुतैस्तथा हरिहरैर्गन्धर्वविद्याधरैः
स्वर्गस्थामृतखण्डशीतलजला काश्मीरभूरुत्तमा ॥ ४७४ ॥
चत्वारिंशदथापि पञ्च गिरिशाः षष्टिश्च चक्रायुधा
ब्रह्माणस्त्रय इत्यनादिनिधना द्वाविंशतिः शक्तयः ।
नीलादीनि शतानि सप्त फणिनां तीर्थौकसां कोटयो
विख्याताश्च चतुर्दशोत्तमतराः काश्मीरभूमण्डले ॥ ४७५ ॥
अष्टादशचमूभर्ता योभवद्धस्तिनापुरे ।
वीरो युधिष्ठिरभ्राता भ्राता धुर्य इवार्जुनः ॥ ४७६ ॥
स दिग्विजयरागेण भुवं जित्वाखिलामिमाम् ।
पातालमविशद्वीरव्रतखण्डनशङ्कितः ॥ ४७७ ॥
तत्र नागपुराण्याशु जित्वानभिमुखो रणे ।
प्राप्य नागसुतां वीरो वर्षं तत्राभजत्सुखम् ॥ ४७८ ॥
आगतोथ गते काले बहले पुनरप्यसौ ।
दिग्जयाय जगामाशु स्वपुत्रेण हतो रणे ॥ ४७९ ॥

जीवायितस्ततस्तूर्णं परिज्ञाय स्वभार्यया ।
हृष्टश्च सुतवीर्येण तेनैव समुपाययौ ॥ ४८० ॥
अथ कालेन नीतेस्मिन्नर्जुने तत्सुतौ भुवम् ।
विभज्य दधतुः सर्वां परीक्षिद्बभ्रुवाहनौ ॥ ४८१ ॥
आभीरदेशे निवसन्सार्द्धं शतमसौ समाः
षोडशोनं शतं यज्ञे सुतानां वीर्यशालिनाम् ॥ ४८२ ॥
तेषामपि सुतांस्तद्वत्तत्सुतांश्च सहस्रशः ।
आसंत्यज्य पुनर्योगी मातामहपुरं ययौ ॥ ४८३ ॥
ततस्तेतिबलोन्मत्ताः परस्परविरोधिनः ।
प्रजानां विदधुः पीडां मर्यादां च न्यवारयन् ॥ ४८४ ॥
आज्ञातिक्रमणात्पित्रा शप्तास्ते बलदर्पिताः ।
स्वनाशायाखिलान्देशान्धाटीभिः समपीडयन् ॥ ४८५ ॥
दृष्ट्वाकाशं गतः कश्चित्सिद्धस्तज्जनपीडनम् ।
विज्ञप्तिमकरोत्तूर्णं दयावानीश्वरं प्रति ॥ ४८६ ॥
अथोच्चचार नभसो वागेवमशरीरिणी ।
सृष्टः सागरमध्येस्ति सासिरेव यमोपमः ॥ ४८७ ॥
स गृहीतस्ततस्तेन रोमदेशे च वर्धितः ।
तेनासिना हयारूढः कण्टकोद्धरणं व्यधात् ॥ ४८८ ॥
लोत्रीकश्चक्रवर्त्ती स सर्वभूतालिजित्वरः ।
भ्रियमाणो न केनापि दृष्टोभून्मित्रबन्धुभिः ॥ ४८९ ॥
ये लोकोत्तरकर्म कर्तुमतुलं सृष्टाः परं वेधसा
तेषां तादृशमेव सोथ कृतवाञ्जन्मावसानं तथा ।
दृष्टान्तस्तु सहस्ररश्मिरिह यस्त्रैलोक्यदीप्तिप्रदो
ज्ञातः केन कुतोभ्युदेति यदि वा कुत्रास्तमभ्येति च ॥४९०॥

तद्वंशजन्मा पार्थोभूद्दूरं गत्वा रुषा पितुः ।
पञ्चगह्वरभूमध्ये यो गह्वरपुरं व्यधात् ॥ ४९१ ॥
तद्वंश्यः कुरुशाहोभूद्यः सर्वां दिशमुत्तराम् ।
जित्वा सपश्चिमां चक्रे धनुर्देवालयं निजम् ॥ ४९२ ॥
ताहिरालसुतस्तस्य लोचनत्रयभूषितः ।
यथेच्छालाभमाहात्म्ययुक्तो लोभविवर्जितः ॥ ४९३ ॥
त्रिकालदर्शी चादृष्टपालितोतिबलान्वितः ।
दयालुः सततं योगी वदान्यः सर्वशास्त्रवित् ॥ ४९४ ॥
तस्य प्रभावतो राज्यं कश्मीरेषूपभुञ्जते ।
कश्मीरभूमिपालानां यः स्यादशुभचिन्तकः ॥ ४९५ ॥
दिगन्तरीयभूपालस्ताहिरालो निहन्ति तम् ।
काश्मीराः पार्वती तत्र राजा ज्ञेयो हरांशजः ॥ ४९६ ॥
इत्येतत्प्रत्ययायैव यस्यासील्लोचनत्रयी ।
नास्य शत्रुरभूत्कश्चिन्न चासौ कस्य चिद्रिपुः ॥ ४९७ ॥
दैवीमप्यापदं लोके तपसैव न्यवारयत् ।
ताहिरालकुलोत्थानां न हि गृह्णाति यो नृपः ।
सोवश्यं संपदः स्वस्या ददात्येव जलाञ्जलिम् ॥ ४९८ ॥
द्विस्त्रिराकर्णयामास गिरं खादुदितामसौ ।
गृहाण राज्यं कश्मीरेष्विति नैवान्वमन्यत ॥ ४९९ ॥
शाहमीरः सुतो योस्ति तवात्यन्तनयज्ञधीः ।
स विसृज्यस्त्वया यस्मादात्मा पुत्र इति श्रुतिः ॥ ५०० ॥

॥ इति ताहिरालवंशवर्णनम् ॥

राज्यं नाजुकखानाय दत्त्वा दौलतचक्रकः ।
स्वयं न बुभुजे देशं निर्देशेन ह्यशेषतः ॥ ५०१ ॥

कम्पितो म्लेच्छलोकेन नवे तस्मिन्नराधिपे।
रज्यते स्म जनो नित्यं शिशिरेण मधाविव ॥ ५०२ ॥
नाजूकशाहे तद्राज्यं गृहीते निर्ववुर्जनाः।
उदयाद्रिं गते सूर्ये प्रातः पद्माकरा इव ॥ ५०३ ॥
मिलितेष्वथ सर्वेषु परस्परविरोधिषु।
पुनर्ग्रामविभागेन शनैर्वैरमजायत ॥ ५०४ ॥
एदेराणादयो लोका मिर्जाहैदरसेवकाः।
चक्कजातिविरोधेन सदाशिवपुरेवसन् ॥ ५०५ ॥
वितस्तातीरमाश्रित्य समुद्रामठवासिनः।
युयुधुर्दहनास्त्रेण चक्कदौलतकादयः ॥ ५०६ ॥
मासमेकं कृते युद्धे दहनास्त्रशरादिभिः।
दौलतचक्कलोकेन विजयो विहितस्तदा ॥ ५०७ ॥
अत्रान्तरे स होमायः पातिशाहोभवद्भुवि।
नमत्समस्तभूपालमौलिघृष्टपदाम्बुजः ॥ ५०८ ॥
तेन निर्वापितो राज्ञा मिथो वैरमहानलः।
प्रजानां हृदयोन्माथी न दारिद्र्यदवानलः ॥ ५०९ ॥
अजहोमायनामासीद्वैरी तस्य महीभृतः।
स देशं दुर्गमं श्रित्वा स्थातव्यमित्यचिन्तयत् ॥ ५१० ॥
किंतु नेष्यामि कश्मीरदेशं पर्वतदुर्गमम्।
तत्र स्थितं न बाधेत मां होमायमहीपतिः ॥ ५११ ॥
इत्युक्त्वा चलिते तस्मिन्नजहोमायभूपतौ।
काश्मीरैः सह सङ्ग्रामो बभूव नगमस्तके ॥ ५१२ ॥
ततः काश्मीरलोकेन पर्वतोपरिवासिना।
अजहोमायभूपस्य निहतं सर्वसैनिकम् ॥ ५१३ ॥

अयं तु नृपतिः शश्वत्पाति कश्मीरमण्डलम् ।
नाजूकनृपतौ साक्षाद्दिग्दाहः सर्वतोभवत् ॥ ५१४ ॥
द्वितीये प्रहरे रात्रेः प्रसुप्ते सकले जने ।
बभूव धरणीकम्पो मथितानेकमानवः ॥ ५१५ ॥
भूमिरन्ध्रेषु जातेषु भूकम्पेन पदेपदे ।
पथि संचरतां मार्गः पान्थानां विस्मृतोभवत् ॥ ५१६ ॥
भूमिरन्ध्रगते गेहे रात्रौ निर्गमनोत्सुकाः ।
उपर्याच्छादनं भित्त्वा जनाः प्रातर्विनिर्ययुः ॥ ५१७ ॥
वितस्तातोयपतिताद्गृहात्काष्ठमयात्तदा ।
सप्तक्रोशेष्वतीतेषु प्रबुद्धा निर्ययुर्जनाः ॥ ५१८ ॥
हसैनपुरहोसैनपुरयोर्दूरवर्तिनोः ।
नदीमुल्लङ्घ्य भूकम्पे व्युत्क्रमोद्यापि दृश्यते ॥ ५१९ ॥
क्वचिद्धा तातेति क्वचिदपि च हा मातरिति वा
क्वचिद्धा मित्रेति क्वचिदपि च हा भ्रातरिति वा ।
तदा तत्रत्यानां करुणरुदितं दुर्व्यसनिनां
निशम्याभूद्वज्रप्रतिहतमिवातीव हृदयम् ॥ ५२० ॥
निर्घातध्वानभीमे नभसि हतगतौ तारकाणां समूहे
कल्लोलालोलतुम्बीफलवदविरतं चञ्चले भूमिखण्डे ।
पुत्रे मित्रे कलत्रे सुजनसहृदये द्रव्यजाते जनानां
भूकम्पातङ्कशङ्काप्रचलितमनसां स्नेह आसीन्न तेषाम् ॥५२१॥
विजयेश्वरमार्तण्डवराहक्षेत्रवासिनाम् ।
पुण्यतीर्थप्रभावेन भूकम्पान्नाभवद्भयम् ॥ ५२२ ॥
पुनःपुनः प्रतिदिनं भूमिकम्पे प्रवर्तिते ।
उवास सकलो लोकः पटमण्डपपङ्क्तिषु ॥ ५२३ ॥

यातेबहुविधे काले निवृते सकले जने।
ररक्ष सकलं देशं सम्यग्दौलतचक्रकः॥ ५२४॥
निरुध्य जलसंचारं वेतालाङ्गणभूमिषु।
विदधे निजमास्थानं सस्यक्षेत्रचिकीर्षया॥ ५२५॥
एतादृशो कृते कार्ये क्रुद्धवेतालचोदिताः।
गृहे दौलतचक्रस्य पतन्तिस्म शिला निशि॥ ५२६॥
अदृष्टदेवताक्षिप्तशिलावर्षणसंकुलम्।
राजद्वारं निशीथिन्यामभवद्विस्मयावहम्॥ ५२७॥
ईदृशं प्रत्यहं केन कृतं पाषाणवर्षणम्।
इत्थं परस्परं लोकः कथयामास विस्मितः॥ ५२८॥
तूलमूलाभिधे ग्रामे सम्यग्ज्ञानपरायणः।
अभिमन्युरिति ख्यातः साधुरासीन्महातपाः॥ ५२९॥
एकदा तद्गृहं गत्वा साधुं दौलतचक्रकः।
उवाच निर्भयं प्राज्यं कथं राज्यं भविष्यति॥ ५३०॥
इत्युक्ते तेन सोवादीन्निवारय मदाज्ञया।
वार्षिकं ब्राह्मणकरं तेन सिद्धिर्भविष्यति॥ ५३१॥
इत्थं निवेदिते तेन साधुना म्लेच्छसत्तमः।
उवाच वचनं सम्यक्शृणु वच्मि महामुने॥ ५३२॥
तूलमूलाभिधं ग्राममर्पयिष्यामि तेधुना।
विप्रदण्डं कथं म्लेच्छो वारयामि त्वदाज्ञया॥ ५३३॥
इत्थं दौलतचक्रेन वचने कथिते सति।
अभिमन्युर्बभूवासौ रोषव्याकुलमानसः॥ ५३४॥
तेनाशु ब्राह्मणकरो यदा नैव निवारितः।
साधुर्दौलतचक्रं तं शशाप रोषसंयुतः॥ ५३५॥

समुद्रमध्यमासाद्य चन्द्रार्कौ ते पतिष्यतः ।
इति शापप्रनष्टश्रीर्ययौ दौलतचक्कः ॥ ५३६ ॥
वर्षमेकं कृते राज्ये हबीबाभिधभूभृता ।
जग्राह तत्पदं लोभाद्गाजीखानस्ततः स्वयम् ॥ ५३७ ॥
तत्प्रतापाग्निदग्धेषु सिक्ताः स्त्रीनयनाश्रुभिः ।
गृहेषु वैरिणां नित्यमुत्पद्यन्ते तृणाङ्कुराः ॥ ५३८ ॥
रुदच्छात्रवनारीणामश्रुवर्षाकुलेष्वपि ।
ज्वलत्यपूर्वो गेहेषु यत्प्रतापदवानलः ॥ ५३९ ॥
अथ दिग्दाहभूकम्पान्समीक्ष्य पृथिवीभृता ।
पृष्टा वाक्यमिदं प्राहुर्गणका गणनापराः ॥ ५४० ॥
देशेऽस्मिंस्तव संभविष्यति महद्युद्धं समृद्धं प्रभो
सङ्ग्रामेष्वपि निःसरिष्यति महावेगा च रक्तापगा ।
लोकानां प्रचरिष्यति प्रतिपदं दुर्भिक्षपीडाथवा
तस्माच्चारुविचारणेन धरणीं भूपाल भोः पालय ॥ ५४१ ॥
अथाययौ स्वसेनाभिर्मिर्जाहैदरसेवकः ।
करबहद्दुरनामासौ भूयो देशजिगीषया ॥ ५४२ ॥
निशम्यैतादृशीं वार्तां गाजशाहिर्विनिर्ययौ ।
तुरङ्गमखुरोद्धृष्टचूर्णीकृतमहीधरः ॥ ५४३ ॥
स समाश्रित्य भूपालो देशं राजविराभिधम् ।
पदातिमार्गलोकानां समराय समादिशत् ॥ ५४४ ॥
राजवीराभिधे देशे मिलिते राजकद्वये ।
भीतिर्बभूव लोकानां द्विराजनामशङ्किनाम् ॥ ५४५ ॥
रणे विलोक्य सर्वासां पत्तीनां गतिचातुरीम् ।
बभूव वायुवत्कम्पो भीतिचञ्चलमानसः ॥ ५४६ ॥

करबह्दुरो दृष्ट्वाथ काश्मीरशरवर्षणम् ।
स क्रुद्धः करबह्दुरः पत्तिलोकविलोकनात् ॥ ५४७ ॥
अन्धकार इव प्रातः साक्षादरुणदर्शनात् ।
तस्मिन्पलायिते देशान्निर्ववौ सकलो जनः ॥ ५४८ ॥
सर्पे विनिर्गते गेहात्कुटुम्बमिव तत्क्षणम् ।
तदास्य ववृधे तेजः करैर्जज्वाल मेदिनी ।
विससार प्रतापश्च ग्रीष्मकाले रवेरिव ॥ ५४९ ॥
अत्रान्तरे महारोषजर्जरीकृतमानसाः ।
हबीचक्रादयो लोकाश्चस्कन्दुर्नगरान्तरम् ॥ ५५० ॥
सदाशिवपुरे दुर्गं कृत्वा तिष्ठत्सु वैरिषु ।
दिद्दामठान्तिके तस्थौ भूपो युद्धचिकीर्षया ॥ ५५१ ॥
युद्धेस्मिन्हाटके स्वामिसदाशिवपुरस्थयोः ।
वितस्ता सेनयोर्मध्ये वारयन्तीव सा बभौ ॥ ५५२ ॥
नदीमुल्लङ्घ्य भुपालो युद्धं कृत्वा महत्तरम् ।
सितानदीप्रवाहेषु हबीचक्रममारयत् ॥ ५५३ ॥
गते बहुविधे काले नोस्सीचक्रप्रचोदितः ।
आययौ मुगलस्वामी श्रीकश्मीरजिगीषया ॥ ५५४ ॥
शाह अब्दुलभालीति नाम यस्याभवद्भुवि ।
स काश्मीरान्तरं प्राप बहुलोकसमन्वितः ॥ ५५५ ॥
तत्तदागमनं श्रुत्वा सैन्येन महता वृतः
आससाद स भूपालः परिहासपुरान्तिकम् ॥ ५५६ ॥
कृते बहुविधे युद्धे सकले सैनिके मृते ।
शाह अब्दुलमाली स चलाल निजवर्त्मना ॥ ५५७ ॥
बभूवुः समरे तत्र यवना विगतासवः ।
यमस्तुतोष रक्तौघव्याजेनाधिगतासवः ॥ ५५८ ॥

आनीतैः समरस्थानाद्भूपालो नगरान्तरे ।
गृहमुट्टङ्कयामास मृतमानवमस्तकैः ॥ ५५९ ॥
एकदा सप्तवर्षस्य बालस्योन्मुष्णतः फलम् ।
कृपां विहाय भूपालः करं चिच्छेद तत्क्षणम् ॥ ५६० ॥
चौरे मुष्णति कस्मिंश्चिन्मीनान्ग्रामनिवासिनाम् ।
बलाज्जहार भूपालः स्वर्णमुद्राशतद्वयम् ॥ ५६१ ॥
मातुलं स्वं जिघांसन्तं यौवनस्थं प्रतापिनम् ।
क्षणाज्जघान भूपालः स्वसुतं हैदराभिधम् ॥ ५६२ ॥
निहते स्वसुते तेन यौवनस्थे दुरात्मना ।
हतः पुत्रोप्यनेनेति हाहाकारो महानभूत् ॥ ५६३ ॥
अष्टादशाभवंस्तस्य युवराजस्य मन्त्रिणः ।
स तांजघान भूपाल उन्मत्त इव राक्षसः ॥ ५६४ ॥
एकदा कुष्ठरोगेण बहुलेन महीपतिः ।
बभूव विगतच्छायो ग्रहणेनेव चन्द्रमाः ॥ ५६५ ॥
कण्डूः कीटकृता देहे पूयशोणितनिर्गमः ।
नरके यानि चिह्नानि तान्यासंस्तस्य जीवतः ॥ ५६६ ॥
कीटो जघास मांसानि पीत्वा तत्पूयशोणिते ।
नरकादधिका पीडा बभूवैतस्य जीवतः ॥ ५६७ ॥
हा तात मित्र हा पुत्र मम कष्टमुपस्थितम् ।
इति क्रन्दितमाकर्ण्य को नाभूद्दीनमानसः ॥ ५६८ ॥
इति स्पष्टमहाकुष्ठनिपीडितकलेवरः ।
सह संसारलोभेन प्राणांस्तत्याज भूपतिः ॥ ५६९ ॥
मृतस्य तस्य भूपस्य भ्राता होसेनखानकः ।
निखन्य भूतले सम्यङ्निर्ममे मृतसंस्कृतिम् ॥ ५७० ॥

अकस्माद्भूतलं तत्र जज्वाल नरकाग्निना ।
धूमेनोत्पतता कुर्वद्विस्मितां जनसंततिम् ॥ ५७१ ॥
निःश्वास इव कालेन पीड्यमानस्य भूभृतः ।
उत्तस्थौ सर्वतो धूमः सर्वलोकविलोकितः ॥ ५७२ ॥
रात्रौ तद्भूतलं गत्वा पीड्यमानस्य भूभृतः ।
शुश्राव सकलो लोको यमकिङ्करताडनम् ॥ ५७३ ॥
तेनोप्तं यादृशं बीजं तादृशं लभ्यते फलम् ।
इत्थं परस्परं लोको वदति स्म सविस्मयः ॥ ५७४ ॥
वर्षद्वयान्तरे कृत्वा राज्यं पापमलीमसम् ।
कुष्ठरोगविशीर्णाङ्गो गाजिशाहिर्ममार सः ॥ ५७५ ॥
हा कथं तेन भूपेन कृत्वा पापमहर्निशम् ।
अल्पकालप्रसङ्गेन नाशिता बहुवत्सराः ॥ ५७६ ॥
स्वर्याते नृपतौ भ्राता राज्यं होसेनखानकः ।
जग्राहास्तं गते चन्द्रे पूर्वाद्रिमिव भास्करः ॥ ५७७ ॥
राज्यमाश्रित्य भूपालो दुर्विचारदवानलात् ।
प्रजा निर्वापयामास ग्रीष्मर्त्ताविव तोयदः ॥ ५७८ ॥
सदा प्रत्यर्थिदानेन लक्ष्मीस्तेन वशीकृता ।
तदा प्रत्यर्थिदानेन कीर्तिर्दूरतरं गता ॥ ५७९ ॥
चिक्रीडं सह कान्ताभिर्भूपः पीतनवासवः ।
सुखं तत्सदृशं स्वर्गे स चकार न वासवः ॥ ५८० ॥
तद्गृहे गुणबद्धेव लक्ष्मीरासीदनन्यगा ।
तां विलोक्य तथाभूतां कीर्तिर्भीत्येव साचलत् ॥ ५८१ ॥
तदीयगृहमाश्रित्य प्राप्तसर्वमनोरथः ।
याचको नाभवत्प्रीतो दानेन दयया च कः ॥ ५८२ ॥

सततं यस्य पादाब्जसमस्तन्यस्तमस्तकः ।
अवाप परमां लक्ष्मीं लोकः शोकविवर्जितः ॥ ५८३ ॥
तस्मिन्नक्षति कश्मीरदेशं नित्यं विशेषतः ।
अभूत्पुष्पफलोत्पत्तिपरिपूर्णा वसुन्धरा ॥ ५८४ ॥
दुर्भिक्षचोरराजभ्यो भये तेन निवारिते ।
अमंस्त स्वर्गसदृशं लोकः कश्मीरमण्डलम् ॥ ५८५ ॥
यदा यदा तेन कृतो विचार आसीन्न चौरस्य तदा प्रचारः ।
अभून्न दानावसरे विकारस्ततोभवत्तस्य यशःप्रकारः ॥५८६॥
खानेजमाननामाभून्मन्त्री तस्य महीभृतः ।
स निर्गते महीपाले चस्कन्द नगरं क्षणात् ॥ ५८७ ॥

[ येनापराधः कृतस्तत्प्रातिवेश्मिकान्राजा मुमोष । प्रत्यहं शतशो लोकाञ्जघान । स्वल्पापराधेधिकं दण्डं कृतवान् । एकस्य ग्रामस्यापराधे सति बहूत्तमान्मुमोष । सुपात्रे किमपि न ददौ कुपात्रेषु समार्पयत् । स्वसेवकं जैतानामानमादिदेश । मत्पुत्रो हन्यताम् । स स्नेहवशाद्राजपुत्रं न जघान । ततो राजपुत्रं देलावरखानो जघान । लोकास्तत्रसुः । हा पाप राजन्परलोके का गतिस्तव भविष्यति । स्वसुतस्यापि कृपा न जाता । तत्सेवकानपराधरहितान्किमवधीः ]

तदीयसैन्यमागत्य नाशयामास तत्क्षणम् ।
होसेननृपतिः प्रातरन्धकारमिवांशुमान् ॥ ५८८ ॥
सुखं बहुविधं तेन कृतं नित्यं महीभृता ।
संरक्षिता विधानेन प्रजाः संजातविस्मयाः ॥ ५८९ ॥
विरोधे कृतबुद्धीनां वैरसंसक्तचेतसाम् ।
मल्लदखानकादीनां चकर्ष नयनानि सः ॥ ५९० ॥

निर्गतानां महीं जेतुं भूपः संप्राप पर्वते।
एकदा शारिकास्थाने मिलिते सकले जने।
वसन्तदिवसे राजा स चकार महोत्सवम्॥ ५९१॥
कुङ्कुमागुरुकर्पूरचन्दनाद्यनुलेपनैः।
रराज सकलो लोको वसन्तदिवसे तदा॥ ५९२॥
विहितोन्नतदुर्लक्ष्यलक्ष्यभेदाय भूपतिः।
निजसेवकलोकाय गजवाजिधनं ददौ॥ ५९३॥
भूयः श्रीपञ्चमी तत्र दिवसे पृथिवीपतिः।
ददर्श मिलितं लोकं ज्येष्ठरुद्राख्यपर्वते॥ ५९४॥
कश्चित्कान्तां प्रति कृतरुचिर्मञ्जरीं जिघ्रति स्म
क्षीबोन्यस्त्रीहसितसमये व्याकुलः कश्चिदासीत्।
पीत्वा कश्चिन्मधु समभवत्पुष्पसंभूषिताङ्गः
श्रीपञ्चम्यामिति कृतसुखो निर्बभौ सर्वलोकः॥ ५९५॥
वराङ्गनानां नवसुन्दरीणां विलोक्य साक्षाद्बहु नृत्यगीतम्।
ददौ समासाद्य नवीननावं सुवर्णदुर्वर्णवसांसि राजा॥ ५९६॥
अथापस्मारदोषोस्य प्रबभूव महीभृतः।
कलङ्क इव चन्द्रस्य निर्मलस्य शनैःशनैः॥ ५९७॥
होसेनशाहिशीतांशौ ग्रस्तेपस्मारराहुणा।
दुर्विचारान्धकारेभ्यो जनो भीत्याकुलोभवत्॥ ५९८॥
होसेनपृथिवीपालो राज्यं संस्थाप्य सोदरे।
कुतूहलादिव स्वर्गं ययौ दानसमर्जितम्॥ ५९९॥
सप्तवर्षेष्वतीतेषु नित्यं सुखमयेषु सः।
कीदृशं स्वर्गमस्तीति दर्शनार्थं ययाविव॥ ६००॥
विमानितापि द्रविणव्ययेन सहैव याता क्षितिपस्य लक्ष्मीः।
आराधितापि प्रसभं धनेन कीर्तिः कथं तिष्ठति लोकमध्ये॥ ६०१॥

आलिखानाश्रिते राज्ये तुतुषुः सकलाः प्रजाः ।
उदयाद्रिं गते सूर्ये प्रातः कमलिनीर्यथा ॥ [redacted]०२ ॥

कश्मीरदेशमालोक्य सम्यग्भूपालपालितम् ।
निनिन्द सुखितो लोकः स्वर्गं दैत्येन्द्रनाशितम् ॥ [redacted]०३ ॥

विचारे विहिते तेन दुर्जना विलयं ययुः ।
उलूका इव पूर्वाद्रिं प्रयाते दिवसेश्वरे ॥ [redacted]०४ ॥

तस्मिन्नवसरे चौरा गुप्ता आसन्भयाकुलाः ।
मध्याह्नकाले संप्राप्ते बिलमग्ना इवाखवः ॥ [redacted]०५ ॥

प्रत्यर्थिभ्यो ददौ दानं महासमितिसंयुतः ।
चकार सफलान्नित्यं मार्गणान्निर्गतांस्तदा ॥ [redacted]०६ ॥

यत्सर्वेषां दयांचक्रे भीतानां धरणीपतिः ।
अतः संह्लादयांचक्रे प्रजाः संजातकौतुकाः ॥ ६०७ ॥

अकस्मादरुणीभूतं बभूवाथ दिशां मुखम् ।
भाविदुर्भिक्षसंहाररौद्रकालानलोपमम् ॥ [redacted]०८ ॥

उत्पातलक्षणोपेता चकम्पे च वसुन्धरा ।
दुर्भिक्षभारोद्वहनादसमर्थेव साभवत् ॥ ६०९ ॥

मार्गेमार्गे तदा तस्थुरुच्छूनाः शवपङ्क्तयः ।
दुर्भिक्षकालमासाद्य यमस्य पटहा इव ॥ ६१० ॥

सुवर्णरजतादीनां नाभूत्तत्र प्रयोजनम् ।
किण्वमात्रं सुदुष्प्रापं चिन्तारत्नमिवाभवत् ॥ ६११ ॥

काचिच्च खिन्ना भर्त्तारं गृहिणी स्नेहवर्जिता ।
जघास भोजनं गूढं पुत्रे दूरे निवारिते ॥ ६१२ ॥

बुभुक्षासहिते पुत्रे कन्ययापि कृतार्थना ।
चकार भोजनं नारी प्राणांस्त्यजति भर्त्तरि ॥ ६१३ ॥

एकदा बहुभिर्लोकै राजद्वारि मृते गजे।
अहंपूर्विकया लोभान्मांसं नीतं पृथक्पृथक् ॥ ६१४ ॥
एकदा कन्दुकारेण हत्वा नापितबालकम्।
पक्त्वा भक्ष्यप्रसङ्गेन विक्रीतं मानुषामिषम् ॥ ६१५ ॥
विहाय स्वगृहं लोकाः पुत्रदारसमन्वितम्।
देशान्तरं तदा जग्मुः प्राणत्राणसमुत्सुकाः ॥ ६१६ ॥
तस्मिन्नवसरे वायुर्बभूवोत्पाटितद्रुमः।
कल्पान्तकालसंहारभीतलोकविचारितः ॥ ६१७ ॥
वायुनोत्थापिते धूलिराशौ वलितभास्करे।
मध्याह्नसमयः साक्षादर्धरात्र इवाभवत् ॥ ६१८ ॥
वायौ चलति चाकस्मात्सदाशववनोत्थितः।
अग्निर्जज्वाल संमूर्च्छन्निव मित्रदिदृक्षया ॥ ६१९ ॥
वितस्तातीरमुल्लङ्घ्य समुद्रामठसंयुतम्।
ददाह नगरं सर्वं वायुवेगानुगोनलः ॥ ६२० ॥
ज्वलन्ती नगरी रेजे वितस्ताजलबिम्बिता।
जलान्तर्दत्तझम्पेव दाहनिर्वाणहेतवे ॥ ६२१ ॥
धूमेनोत्पातिता व्योम्नि तारका पिहिता अपि।
अनेकाङ्गाररूपेण बभूवुर्द्विगुणा इव ॥ ६२२ ॥
धूमेन पिहितास्तारास्तत्र व्योमनि ता बभुः।
ज्वलन्तं वह्निमालोक्य भयेनेव पलायिताः ॥ ६२३ ॥
नववर्षार्जितान्भोगान्भुक्त्वा स धरणीपतिः।
दुर्भिक्षपीडाविज्ञप्तिं कर्तुमिव ययौ दिवम् ॥ ६२४ ॥
तस्मिन्प्रयाते त्रिदिवं नरेन्द्रे राज्यं गृहीते च तदीयपुत्रे।
अब्दालखानोपि चकार कोपं पितृव्य एतस्य महीभृतोपि॥६२५॥

यदापि म्रियते भ्राता भ्राता गृह्णाति तत्पदम् ।
इत्थं कुलक्रमोस्माकं कथं राज्यं स इच्छति ॥ ६२६ ॥
इत्युक्त्वा प्रहिते दूते तेनाब्दालाभिधेन तत् ।
युद्धं युसूबशाहस्य सिकन्दरपुरेभवत् ॥ ६२७ ॥
अब्दालखानको युद्धं कृत्वा हत्वारिसैनिकम् ।
कुतूहलेनेव दिवं ययौ भ्रातृदिदृक्षया ॥ ६२८ ॥
युसूबभूपती राज्ये गृहीते प्रददौ धनम् ।
प्राक्तनान्कर्णमान्धातृमुखान्विस्मारयन्निव ॥ ६२९ ॥
अथ सर्वमहायोधदुर्विवेकेन चोदितः ।
तस्य मूमारखानोगाद्दूरं युद्धचिकीर्षया ॥ ६३० ॥
मह्मदखाननामाभूद्युसूबक्ष्मापसेवकः ।
युयुधे सह तेनैष तदा दिह्वामठान्तिके ॥ ६३१ ॥
महानीलरजोराशिमेघान्तरविमूर्च्छिताः ।
जगर्जुर्दहनास्त्रस्य ज्वाला विद्युल्लता इव ॥ ६३२ ॥
निःशोभा अभवंल्लोका मृते मह्मदखानके ।
अस्तं दिनकरे याते सायं पद्माकरा इव ॥ ६३३ ॥
चलन्तः सादिनोप्यासन्वितस्ताजलबिम्बिताः ।
विशन्त इव पातालं तत्पराभवशङ्कया ॥ ६३४ ॥
मासद्वयस्य सार्धस्य भोगान्भुक्त्वा स भूपतिः ।
जगाम खशलोकानां मार्गं पर्वतदुर्गमम् ॥ ६३५ ॥
राज्यं मूमारखानेन श्रिते यूसुबभूपतिः ।
चचालोदयति प्रातः सूर्ये चन्द्र इवाशुभः ॥ ६३६ ॥
समस्तपृथिवीपालजलालदीनभूपतेः ।
चरणं शरणीकर्तुं ययौ यूसुबभूपतिः ॥ ६३७ ॥

मूमारखानलोकस्य शनैर्वैरमजायत ।
परस्परविरोधेन वनस्येव दवानलः ॥ ६३८ ॥

सपादस्यैव मासस्य सुखं कृत्वा स भूपतिः ।
उवास देवतागारे शत्रुलोकाभिरक्षितः ॥ ६३९ ॥

मूमारखानं निर्जित्य चक्कहैदरकादयः ।
राज्ये निवेशयामासुः श्रीमल्लह्वरचक्ककम् ॥ ६४० ॥

तस्मिँल्लह्वरभूपाले भूमिं शासति सर्वतः ।
बभूवोपद्रवो नित्यं सिंहेभ्यो ग्रामवासिनाम् ॥ ६४१ ॥

रात्रौ यो यः प्रतिग्रामं गृहद्वाराद्विनिर्गतः ।
निहतः स स सिंहेन पिशाचेनेव भक्षता ॥ ६४२ ॥

जलालदीनभूपालपाददर्शनहर्षितः ।
आययौ वत्सरे याते श्रीमान्यूसुबभूपतिः ॥ ६४३ ॥

श्रीमत्सुय्यपुरग्रामं वितस्ताजलदुर्गमम् ।
शिश्रिये स महीपाल उदयाद्रिमिवांशुमान् ॥ ६४४ ॥

तदा लह्वरभूपालो निर्ययौ नगरान्तरात् ।
अनेकलोकसंयुक्तः सिंहो नगमुखादिव ॥ ६४५ ॥

ज्ञात्वा सुय्यपुरग्रामं वितस्ताजलदुर्गमम् ।
ययौ हैदरचक्कोसावन्यमार्गेण सत्वरम् ॥ ६४६ ॥

ज्ञात्वा यूसुबभूपालस्तत्तद्रिपुविचेष्टितम् ।
वितस्ताजलमुल्लङ्घ्य युयुधे लह्वरेण सः ॥ ६४७ ॥

विधाय तुमुलं युद्धं सर्वप्राणिभयावहम् ।
मन्त्री लह्वरखानस्य ममाराब्दालमीरकः ॥ ६४८ ॥

नष्टे लह्वरभूपाले मिलितैर्निजसैनिकैः ।
अवर्धत स भूपालो नदैरिव महार्णवः ॥ ६४९ ॥

लह्वरखानो यूसुबखानपादमशिश्रियत् ।
सभ्रातरममुं सोपि निर्नेत्रमकरोत्क्षणात् ॥ ६५० ॥
ज्ञात्वा हैदरचक्रोसौ यूसुबनृपचेष्टितम् ।
शिश्रिये जाङ्गलं देशं पुनर्युद्धचिकीर्षया ॥ ६५१ ॥
युद्धं यूसुबभूपालचक्रहैदरयोरभूत् ।
वनेषु शोणितासारदूरीकृतदवानलम् ॥ ६५२ ॥
जल्लालदीनभूपस्य ययौ हैदरचक्रकः ।
सकाशं वसुभिर्हीनो भास्करस्येव चन्द्रमाः ॥ ६५३ ॥
शशास चलिते तस्मिन्देशं यूसुबभूपतिः ।
अन्धकारे गते दूरं पद्माकरमिवोष्णगुः ॥ ६५४ ॥
ववर्ष वासवः सम्यग्ववौ वायुः सुखावहः ।
ततापः तपनः साक्षात्तस्मिन्रक्षति मेदिनीम् ॥ ६५५ ॥
कीर्तिर्दूरीकृता तेन चचाल वसुधामिमाम् ।
यद्गेहे गुणवद्धेव लक्ष्मीरासीदनन्यगा ॥ ६५६ ॥
गुणेष्वनन्तेष्वपि तस्य राज्ञः
स एष दोषः प्रकटस्तदाभूत् ।
यच्चञ्चलागृह्यत तेन लक्ष्मीः
स्थिरापि कीर्तिर्विहिता सुदूरम् ॥ ६५७ ॥
चन्द्रमा गुणिवैरीति प्रसिद्धिं परमां गतः ।
साम्ययोगः कथं तस्य नृपेण गुणिबन्धुना ॥ ६५८ ॥
हबीबखानप्रमुखेषु तेषु
रुद्धेषु यूसूबमहीधरेण ।
निष्कृष्य चक्षूंषि विशेषरोषा-
त्कश्मीरदेशे विहितो विचारः ॥ ६५९ ॥

जल्लालदीनभूपालसेवनार्थं कृतोद्यमः।
याकूबराजपुत्रोपि प्रहितस्तेन भूभृता ॥ ६६० ॥
उपायनेषु दृष्टेषु याकूबनिहितेष्वपि।
कश्मीरविजयोत्कण्ठा संबभूव महीभृतः ॥ ६६१ ॥
जल्लालदीनभूपेन कश्मीरविजयार्थिना।
कृताज्ञा भगवद्दासप्रमुखानां महीभृताम् ॥ ६६२ ॥
तद्विज्ञाय स याकूबस्त्यक्त्वा भूपालसेवनम्।
प्रत्याययौ स्वकश्मीरदेशं मार्गादलक्षितः॥ ६६३॥
पितरं स्वं समागत्य याकूबोवदद्व्यथः।
भगवन्भगवद्दासः प्रहितस्तेन भूभृता ॥ ६६४ ॥
महतोप्यसमर्थस्य महत्त्वं याति निष्फलम्।
पर्वतसदृशाकारं कुञ्जरं हन्ति केसरी ॥ ६६५ ॥
इति निश्चित्य सर्वे ते निर्गमाय जयार्थिनः।
आज्ञां विदधिरे सर्वपर्वतीयदरार्पणात् ॥ ६६६ ॥
विनिर्गते महीपाले सज्जीभूतेथ सैनिके।
वैजयन्त्यस्तदा रेजुर्वामनीकृतभूरुहः ॥ ६६७ ॥
वराहतीर्थमाश्रित्य तस्थौ यूसुबभूपतिः।
तदीयमन्त्रिणोप्यग्रे ययुर्युद्धचिकीर्षया ॥ ६६८ ॥
उवाच सचिवान्भूपो न युद्धं कर्तुमर्हथ।
जल्लालदीनपादाब्जं सेवनायाश्रयामहे ॥ ६६९ ॥
कथं महत्तरं जेतुं शक्तिर्नीचस्य जायते।
न समीरस्य वेगोस्ति पर्वतोन्मूलने क्षमः ॥ ६७० ॥
श्रुत्वेति सचिवाः सर्वे तमूचुः पृथिवीपतिम्।
कथमेतादृशी बुद्धिर्भवतामपि जायते ॥ ६७१ ॥

अकृतगुरुसद्वाक्यः सिद्धिं न गच्छति साधको
व्रजति न सुखं रोगी वैद्यप्रयोगवियोगतः ।
अगणितमहायन्ता दन्ती न विन्दति चातुरीं
सचिववचनद्वेषी राजा न याति सुवैभवम् ॥ ६७२ ॥
निशम्येति स भूपालः सचिवांस्तानवोचत ।
दृष्टं सैन्यं न युष्माभिर्जल्लालदीनभूपतेः ॥ ६७३ ॥
प्राचीमेव शचीपतिः स भजते श्रीदक्षिणाशां यमः
पानीयाधिपतिश्च पश्चिमदिशं वित्तेश एवोत्तराम् ।
एते केवलदिक्पतित्वविभवस्पर्धां कथं कुर्वते
जीयात्सर्वदिगीश्वरो नरपतिर्जल्लालदीनाभिधः ॥ ६७४ ॥
नाकबरसमः कश्चिद्दाताभून्न भविष्यति ।
दानं समर्पितं येन पण्डितेष्वपि वैरिषु ।
कर्णः सुवर्णदानेन यशः प्राप्नोति भूपतिः ॥ ६७५ ॥
वित्ती चेन्नरवाहनो भवति तत्कार्पण्यमुच्चावचं
चन्द्रश्चेत्खलु निर्मलः प्रतिदिनं दोषः कलङ्काभिधः ।
तेजस्वी यदि वह्निरुद्धततमोधूमः सदा दूषको
राज्ञा दानयशःप्रतापनिकरैरेतेमुनाधःकृताः ॥ ६७६ ॥
इत्थं जल्लालदीनस्य सेवाहेवाकतत्परे ।
यूसुबनृपतौ सम्यक्सचिवा इदमब्रुवन् ॥ ६७७ ॥
शत्रुपादस्पृहा यस्य जीवितं तस्य निष्फलम् ।
स एव पुरुषो धन्यो यो द्वेष्टि रिपुणा सह ॥ ६७८ ॥
भवन्तः सन्तु दूरस्थाः कुर्मस्त्वत्कार्यनिर्णयम् ।
जाङ्गलं देशमाश्रित्य योत्स्यामः प्रत्यहं वयम् ॥ ६७९ ॥
सहस्रकिरणो रविर्जगति सत्प्रतापोज्ज्वलो
गुहान्तरगतं तमो हरति नो यथा जातुचित् ।

तथा नरपतिः क्षमो भवति चक्रवर्ती कथं
विनाशयितुमुद्यतो विहितजाङ्गलासादनम् ॥ ६८० ॥

इत्थं निशम्य भूपालः सचिवोदीरितं वचः ।
निर्वापयन्निवोवाच वचनामृतशीकरैः ॥ ६८१ ॥

भयं त्यजत मद्वाक्यमनुपालयताधुना ।
अहं जल्लालदीनस्य ग्रहीष्यामि पदाम्बुजम् ॥ ६८२ ॥

अलंकारभूतोस्ति यो भूपतीना-
मलं कामदेवेन रूपे यदीये ।
अहं कामतः स्तौमि जल्लालदीन-
महंकार एषोस्ति चित्ते मदीये ॥ ६८३ ॥

करिष्यामः कथं वैरं श्रीचक्रवर्तिना समम् ।
मयैव सेवा कर्तव्या सुखं देशे भविष्यति ॥ ६८४ ॥

न भूतो न भावी न वा वर्तमानः
कदाचिच्च कश्चिन्महीभृत्समानः ।
इति प्रायशो नित्यशो वर्धमानः
सदा जल्पतो वर्तते मेभिमानः ॥ ६८५ ॥

पातिशाहिगुणाञ्श्रोतुं कर्णोयं चपलायते ।
एतद्दातृत्वमाकर्ण्य कर्णोयं च पलायते ॥ ६८६ ॥

विधात्रा लिखितां भाले लिपिं दारिद्र्यदूषिताम् ।
पतन्ति चरणे तस्य जनाः कर्तुमिवान्यथा ॥ ६८७ ॥

मस्तके भूषणं राज्ञां लक्ष्मीप्राप्तिमहौषधम् ।
अस्ति पादरजस्तस्य दुर्लभं महतामपि ॥ ६८८ ॥

प्रत्यक्षदेवमादित्यं ध्यायतश्चक्रवर्तिनः ।
साक्षाद्भक्तिप्रभावेन दूरं यान्ति विपत्तयः ॥ ६८९ ॥

वेदान्निर्णीतभेदानसुरवरकराक्रान्तदेशान्सुरेशा-
न्गन्धर्वान्मन्ददर्पान्प्रतिदिवसभयव्याकुलाँल्लोकपालान् ।
वेधोगोविन्दशर्वांस्तदभिमुखकृतप्राञ्जलींश्चापि मत्वा
सूर्यं प्रत्यक्षदेवं प्रणमति मतिमाञ्शाहिजल्लालदीनः ॥६९०॥

अकबरनृपतेर्यदैति सैन्यं
कथमिव शक्यमनेन मङ्गलेन ।
प्रसरति जलधेर्यदा तरङ्गो
भवति हि शूर्पनिवारणं निरर्थम् ॥ ६९१ ॥

प्रत्यक्षदेवमादित्यमुलूको यदि निन्दति ।
का हानिस्तस्य देवस्य जगतामुपकारिणः ॥ ६९२ ॥

इति निश्चित्य भूपालो जल्लालदीनभूपतेः ।
चरणं शरणीकर्तुं भगवद्दासमाश्रयत् ॥ ६९३ ॥

पञ्चवर्षाश्रितान्भोगान्भुक्त्वा यूसुवभूपतिः
जल्लालदीनभूपालसेवनार्थमथागमत् ॥ ६९४ ॥

गते तस्मिन्महीपाले भगवद्दाससैनिकम् ।
याकूबो नाम तत्पुत्रः प्राज्यं राज्यमथाग्रहीत् ॥ ६९५ ॥

संग्रामे पितृसर्वस्वमर्जितं कोशसंचितम् ।
दत्त्वा याकूबभूपालः सर्वाँल्लोकानरञ्जयत् ॥ ६९६ ॥

चलिते भगवद्दासे यूसुवनृपसंयुते ।
बभौ याकूबभूपालो मेघमुक्त इवांशुमान् ॥ ६९७ ॥

म्लेच्छशास्त्रविनिर्दिष्टमास्ते मतचतुष्टयम् ।
अन्योन्यमतवैरेण बभूव कलहागमः ॥ ६९८ ॥

शंशचक्रादयस्तस्य नृपस्य धृतमत्सराः ।
सदाशिवपुरे दुर्गे चक्रुर्युद्धाचिकीर्षया ॥ ६९९ ॥

अथ याकूबभूपस्य दिद्दामठसमीपतः।
बभूव तुमुलं युद्धं शंशाचक्रेन तेन तत् ॥ ७०० ॥
अलंमाशिरमल्लेकआलकादिपुरस्कृतः।
युयोध शंशाचक्रोसौ याकूबप्रभुणा सह ॥ ७०१ ॥
शंशाचक्रस्ततो गत्वा मल्लेकबलचोदितः।
जग्राह जलमध्यस्थं ग्रामं सुय्यपुराभिधम् ॥ ७०२ ॥
उद्यन्यथा दिनकरः किरणोत्करेण
राज्यन्धकारनिकरं हरति क्षणेन।
सैन्यं तथैव यमसादकरोत्करेण
याकूब एव कृतसायकमोक्षणेन ॥ ७०३ ॥
अलंमाशिरखानोसौ युद्धं कृत्वापलायत।
नगराच्छंशाचक्रं तं स रुरोध महीपतिः ॥ ७०४ ॥
विजये विहिते तेन याकूबेन तदन्तरे।
मध्यदेशमहीपालाद्भयं नित्यमजायत ॥ ७०५ ॥
मध्यदेशमहीपालजल्लालदीनभूपतेः।
कश्मीरविजयोत्कण्ठा भूयः सम्यगजायत ॥ ७०६ ॥
कासिमखाननामानं चक्रहैद्रसेवितम्।
प्रेरयामास भूपालः कश्मीरविजयेच्छया ॥ ७०७ ॥
द्वाविंशानां तदा सेनापतीनां निर्गमाय सः।
चकाराज्ञां महीपालः कश्मीरविजयोत्सुकः ॥ ७०८ ॥
ते सेनापतयस्तस्य भूपतेराज्ञया क्षणात्।
लाहोरनगरात्तस्मान्निर्जग्मुरूर्जितश्रियः ॥ ७०९ ॥
कूपा निरुदका आसन्पङ्कशेषास्तदा ह्रदाः।
मरुश्च समतां यातस्तदा सेनाप्रचारतः ॥ ७१० ॥

तत्र रेजुः पताकाभिः पट्टमण्डपपङ्क्तयः ।
कश्मीरपर्वतालोकसमुत्क्षिप्तमुखा इव ॥ ७११ ॥
उद्ययौ स रजोराशिस्तथा सेनाप्रचारतः ।
येन नभसि सूर्यस्य राहुभीतिर्यथाभवत् ॥ ७१२ ॥
मार्गस्थानां हि धूलीनां यथा संख्या न विद्यते ।
तथा संख्या न सेनायाः पदातिगजसादिनाम् ॥ ७१३ ॥
दिनैः कतिपयैः सेना दूराध्वमलिनीकृता ।
चन्द्रभागां नदीं प्राप चकोरीन्दुकलामिव ॥ ७१४ ॥
वस्त्राण्यनेनिजुस्तत्र पपुस्तोयं च निर्मलम् ।
तडागदूषिता लोकाः सुखं चक्रुर्यथेप्सितम् ॥ ७१५ ॥
स्नानत्रस्तचलद्वाजिभीतिचञ्चलमानवे ।
चन्द्रभागातटे दूरादुपहासः कृतोभवत् ॥ ७१६ ॥
स्नानमुक्ताद्गजाद्यत्राप्यग्रे दत्तकरेणुकात् ।
अन्यदन्तिकृतत्रासाज्जनो भीत्याकुलोभवत् ॥ ७१७ ॥
चन्द्रभागां समुल्लङ्घ्य दिनैः स्वल्पतरैरपि ।
पर्वतस्यान्तिकं प्राप सेना काश्मीरदेशगा ॥ ७१८ ॥
पर्वतेषु पदातीनामारोहणावरोहणैः ।
जानुगुल्फपदादीनामवसादो महानभूत् ॥ ७१९ ॥
क्वचित्तोये धारा क्वचिदपि जलं दुर्लभतरं
क्वचित्पङ्के म्लानिः क्वचिदपि शिलाताडनभयम् ।
क्वचिच्छीतं नित्यं क्वचिदपि सदोष्णांशुपतनं
नगस्थाने पन्था भवति यममार्गोपर इव ॥ ७२० ॥
सुवृष्टिकोमलीभूतं तासु पर्वतभूमिषु ।
नवघासाङ्कुरं जक्षुर्नृपवारणवाजिनः ॥ ७२१ ॥

मध्यदेशीयलोकानां पश्यतां पर्वतस्थितिम् ।
पृच्छतां नाम वृक्षाणां चमत्कारो महानभूत् ॥ ७२२ ॥

तास्ताः सङ्कटभूमयः सुगमतां नीताः शिलापट्टकै-
स्ते ते कुञ्जगकुञ्जराः किल भटैर्भीतिं तदा प्रापिताः ।
लोकः कुञ्जमतिप्रकाशमकरोत्सानुं सतोयोद्गमं
सेना पर्वतमस्तके समभवत्कल्पान्तकालोपमा ॥ ७२३ ॥

चक्रवर्त्तिप्रभावेन तत्सेनादर्शनेन च ।
पर्वतीयजना आसन्भयाच्चकितमानसाः ॥ ७२४ ॥

छागानुपायनीकृत्य मातुलुङ्गफलानि च ।
पर्वतीयजनास्तत्र कासीमखानमाययुः ॥ ७२५ ॥

यद्वद्व्योमचरोपि मांसशकलैः संरुध्यते खेचरो
यद्वत्तोयतलस्थितोपि बडिशैर्मत्स्योपि चाबाध्यते ।
यद्वच्छष्पसमर्पणेन कृतिभिर्दूरान्मृगो गृह्यते
तद्वत्तेन वशीकृता जनपदाः कासीमनाम्ना धनैः ॥ ७२६ ॥

हैदरचक्रनामाभूद्याकूबो वैरतत्परः ।
मार्गसंदर्शनार्थे तत्खानकासिमसैनिके ॥ ७२७ ॥

अत्रान्तरे स काश्मीरमार्गरक्षणतत्परः ।
बऱ्हामनायकोप्यासीद्याकूबभयविह्वलः ॥ ७२८ ॥

बऱ्हामनायको लोकं स्थापयित्वा बहिः स्वयम् ।
जगाम केवलतया खानकासिमसैनिकम् ॥ ७२९ ॥

तस्य कासिमखानोपि सर्वकार्यविचक्षणः ।
चकार बहुसंमानं वस्त्रैराभरणैर्धनैः ॥ ७३० ॥

अथान्यैरपि याकूबमवगण्य समर्पितम् ।
राज्यं होसनखानस्य पश्चानिलगिरिस्थितैः ॥ ७३१ ॥

कासिमखानमायान्तं देशान्तरव्यवस्थितम् ।
मध्ये होसनखानस्य राज्यं श्रुत्वा चुकोप सः ॥ ७३२ ॥

अथ याकूबभूपालः प्रस्थानं कृतवान्क्षणात् ।
होसनखानं निर्भर्त्स्य पञ्चानिलगिरिं प्रति ॥ ७३३ ॥

याकूबप्रहितं सैन्यं प्रभुसेवापराङ्मुखम् ।
साकं होसनखानेन संधिं चक्रे यदृच्छया ॥ ७३४ ॥

श्रुत्वा याकूबभूपालो मिलितं निजसैनिकम् ।
निन्दां चपलचित्तानां सेवकानां चकार सः ॥ ७३५ ॥

हरन्ति संपत्तौ वित्तं विपत्तौ विद्विषन्ति च ।
सेवकाः सन्ति दुर्ग्राह्यास्तत्समा न तु तस्कराः ॥ ७३६ ॥

शंशचक्राभिधं बन्धान्मीरमल्लदसंयुतम् ।
मोचयित्वा स याकूबः काष्ठवाटान्तरं ययौ ॥ ७३७ ॥

याकूबभूपमधिगम्य निरस्तवीर्यं
ते सेवका न विदधुर्बहुमानसेवाम् ।
चिन्तामणिं लुठितहस्ततलाभिघातैः
खेलन्ति वानरगणा गुलिकाक्रमेण ॥ ७३८ ॥

याकूबे चलिते सैन्यं विससार पृथक्पृथक् ।
हारसूत्रे स्वयं छिन्ने मौक्तिकं विद्रुतं यथा ॥ ७३९ ॥

काष्ठवाटान्तरे केचित्केचिन्नगरवासिनः ।
आसन्केचिद्विदेशस्थाः केचिन्मुगलसंगरे ॥ ७४० ॥

होसनखानादाहृत्य राज्यं पर्वतमस्तके ।
जग्रहे शंशचक्रेन कासिमाभिधशङ्कया ॥ ७४१ ॥

कासिमखानमायान्तं निशम्य कृतनिश्चयः ।
जग्राह शंशचक्रोसौ पर्वतं जनदुर्गमम् ॥ ७४२ ॥

स्वल्पलोकसमायुक्तः शंशाचक्रोभवत्तदा।
कासिमखानकोप्यासीद्बहुलोकसमावृतः ॥ ७४३ ॥
पुरस्कृत्य स कासिमखानो हैदरचक्रकम्।
चकार तुमुलं युद्धं सुग्रीवमिव राघवः ॥ ७४४ ॥
काश्मीरसैनिकं सर्वं चक्रहैदरदर्शनात्।
चचाल रात्रितामिस्रं प्रातरिवारुणोदयात् ॥ ७४५ ॥
यथा महाभ्रजोराशिर्वायुमात्रेण नश्यति
तथा मुगलसैन्येन नष्टं काश्मीरसैनिकम् ॥ ७४६ ॥
काश्मीरसैनिके नष्टे मुगलैर्विजयः कृतः।
इति श्रुत्वा पुरन्ध्रीणां हाहाकारो महानभूत् ॥ ७४७ ॥
भयधूतकराम्भोजा विलोलनयनोत्पलाः।
कुन्तलालियुतास्तस्थुः पद्मिन्य इव योषितः ॥ ७४८ ॥
शोकान्धकारे संप्राप्ते रराज नयनोत्पलम्।
स्त्रीणां किंतु मुखाम्भोजं संकोचमगमत्तदा ॥ ७४९ ॥
रुदन्तीनां कुचे स्त्रीणां निपेतुर्बाष्पबिन्दवः।
ज्वलन्तं हृदि शोकाग्निं दूरीकर्तुमिवोदिताः ॥ ७५० ॥
द्राक्षाक्षोटफलव्याप्तं पुष्पकुङ्कुमशोभितम्।
प्रविश्य नगरं मेने स्वर्गवद्यवनो भृशम् ॥ ७५१ ॥
शाके प्रयातेष्टखपञ्चचन्द्र-
संख्ये द्वितीयादिषु कार्तिकस्य।
शुक्लेथ पक्षे रविवासरे च
सैन्यप्रवेशो नगरे बभूव ॥ ७५२ ॥
द्राक्षाफलमथास्वाद्य कार्षिकोपायनीकृतम्।
निनिन्दुर्मुगलाः सर्वे निजकान्ताधरामृतम् ॥ ७५३ ॥

कुङ्कुमपुष्पमालाभिर्भूषिताशेषमस्तकः ।
मुगलो मद्यपानेषु निजं वीर्यं व्यकत्थत ॥ ७५४ ॥
कासिमखाननेतारं दृष्ट्वा हैदरचक्रकम् ।
अथ काश्मीरलोकोपि तत्सेवनमशिश्रियत् ॥ ७५५ ॥
अनेकलोकसंयुक्तं दृष्ट्वा हैदरचक्रकम् ।
भीत्या कासिमखानोपि कारागृहे न्यवेशयत् ॥ ७५६ ॥
अथ कासिमखानेन रुद्धे हैदरचक्रके ।
काश्मीरलोकाः सर्वे ते दूरं जग्मुर्वनान्तरम् ॥ ७५७ ॥
एकत्र मिलिताः सर्वे ते निन्दां चक्रुरात्मनः ।
परस्परं च संमन्त्र्य मतिं युद्धाय चक्रिरे ॥ ७५८ ॥
योषित्पत्या विहीनेव चन्द्रहीनेव शर्वरी ।
लोकपूर्णा तथा सेना राजहीना न शोभते ॥ ७५९ ॥
इति निश्चित्य सर्वे ते लोका यवनभर्त्सिताः ।
क्षणादानाययामासुर्याकूबं कृतनिश्चयाः ॥ ७६० ॥
याकूबमागतं श्रुत्वा साक्षात्कासिमखानकः ।
मुमारखाननामानं प्राहिणोत्तज्जिगीषया ॥ ७६१ ॥
मुमारखानमायान्तं श्रुत्वा याकूबभूपतिः ।
बभूव बद्धसन्नाहः सम्यग्युद्धचिकीर्षया ॥ ७६२ ॥
कोयं मुमारखानाख्यो युष्मत्सेवकसेवकः ।
एतेन सह योद्धव्यमित्यूचुस्तस्य मन्त्रिणः ॥ ७६३ ॥
त्यक्त्वा मुमारखानं तं विजयेश्वरसंस्थितम् ।
प्रस्थानमन्यमार्गेण चकार नगरं प्रति ॥ ७६४ ॥
तस्मिन्नवसरे सूर्यः साक्षाद्वेदत्रयीमयः ।
भाविसङ्ग्रामसंहारघृणयेवास्तमाययौ ॥ ७६५ ॥

शनैः शनैर्दिने याते केवलत्वभियेव सा।
तत्संगमार्थिनी संध्या ययौ स्थित्वा क्षणान्तरम् ॥ ७६६ ॥
याकूबमायान्तमवेक्ष्य चन्द्रो हस्तस्थखड्गद्वयदुर्निरीक्ष्यम्।
राजेति नामद्वयमाकलय्य भीत्येव यातोस्तनगप्रदेशम् ॥७६७॥
अत्रान्तरे स याकूबो दुराध्वखिन्नसैनिकः।
सदाशिवपुरस्थाने चस्कन्द नगरं क्षणात् ॥ ७६८ ॥
कृतवति सति कान्ते चुम्बनालिङ्गनानि
क्षिपति च निशि बाणान्निर्दयं कामदेवे।
सुरतनिरतनारीसंगमे संनिकृष्टे
समरभुवि नराणां सिंहनादो बभूव ॥ ७६९ ॥
मार्गे गृहान्तरे वापि हत्वा यवनसैनिकम्।
सैन्येन महता युक्तो राजद्वारं ददाह सः ॥ ७७० ॥
अलिः सूर्योदयार्थीव रात्रिबद्धोम्बुजान्तरे।
कासिमखानकोप्यासीद्रुद्धं निजगृहान्तरे ॥७७१ ॥
फतिहखाननामाभून्मुगलो धृतसैनिकः।
सम्यङ्नद्धतनुत्राणः सिकन्दरपुरेभवत् ॥ ७७२ ॥
जज्वाल नगरं सर्वं यवनत्रासकारकम्।
अपि ज्वालाप्रकाशेन काश्मीरैर्युयुधे रणे ॥ ७७३ ॥
ततः कासिमखानेन दृष्ट्वा काश्मीरसैनिकम्।
कारागृहस्थितो रोषाद्धतो हैदरचक्रकः ॥ ७७४ ॥
लोठं कृत्वा गते सैन्ये वाजिवारणवाससाम्।
प्रभाते स च याकूबो रात्रियुद्धान्न्यवर्तत ॥ ७७५ ॥
रात्रौ दुर्जनचक्रताडनमलं राज्ञि स्वयं कुर्वति
तारारत्नसमूहमम्बरवणिग्व्यस्तारयत्सर्वतः।

प्रातश्चण्डकरे प्रभौ कमलकोशोत्पाटनं तन्वति
प्रालेयश्रमवारिणाकुलतरं सोगोपयत्तं क्षणात् ॥ ७७६ ॥

जाते प्रभातसमये शशिनि प्रयाते
चास्तं क्षणाद्दिनकरेण तमो निरस्तम् ।
याकूबभूपतिरतीव बभूव भीतः
सोभूच्च मुद्गलजनः सकलः समेतः ॥ ७७७ ॥

प्रातश्चलति याकूबे यवना नगरान्तरम् ।
मुमुषू रात्रियुद्धेन रोषसंततमानसाः ॥ ७७८ ॥

याकूबं चलितं ज्ञात्वा दृष्ट्वा भग्नं स्वसैनिकम् ।
स्वयं कासिमखानोपि निर्जगाम जयोत्सुकः ॥ ७७९ ॥

येन येन स याकूबो मार्गेण चलितोभवत् ।
तेन तेन हि कासिमखानको निर्ययौ स्वयम् ॥ ७८० ॥

तस्य कासिमखानस्य बहुलोकसमावृतः ।
अलंमाशिरखानाख्यो बभूव चरणानतः ॥ ७८१ ॥

अलंमाशिरखानस्य तैलग्रामनिवासिनः ।
मित्रेण शंशचक्रेन युद्धमासीत्परस्परम् ॥ ७८२ ॥

फतेहखाननामाभून्मुद्गलो बहुसैनिकः ।
नगरान्तररक्षार्थं सिकन्दरपुरस्थितः ॥ ७८३ ॥

युद्धं याकूबभूपालखानकासिमयोरभूत् ।
काश्मीरक्षिप्तपाषाणशरतोमरदारुणम् ॥ ७८४ ॥

अथ काश्मीरलोकानां विरोध उद्भूत्पुनः ।
राजाहमेव राजाहमिति कोलाहलान्वितः ॥ ७८५ ॥

विरोधमुत्थितं ज्ञात्वा सहायभ्रातृचोदितः ।
ययौ याकूबभूपालः काष्ठवाटान्तरं पुनः ॥ ७८६ ॥

ततो यूसुवखानेन मीरमह्मदकेन च ।
संधिः कासिमखानस्य विहितो शरणार्थिना ॥ ७८७ ॥
तेन कासिमखानेन जल्लादीनभूभृतः ।
यूसुबखानप्रमुखाः प्रहिताश्चरणान्तिकम् ॥ ७८८ ॥
ज्यल्लालदीनभूपेन समस्ताश्चरणानताः ।
संमानिताः सदा वित्तैः खानयूसुबकादयः ॥ ७८९ ॥
कश्मीरेषु महाशीतव्यथितानेकमानवः ।
आययावथ हेमन्तो द्वितीय इव मुद्गलः ॥ ७९० ॥
ततो यवनगेहेषु पपात हिमसंततिः ।
विजये विहिते सद्यः पुष्पवृष्टिरिवाम्बरात् ॥ ७९१ ॥
याकूबभूपस्य कृतश्रमस्य
रणाय कुर्वाण इवोपकारम् ।
पुष्पोत्करैः संस्कृतसर्वमार्गो
वसन्तकालः प्रकटीबभूव ॥ ७९२ ॥
अथ याकूबभूपालः काष्ठवाटप्रदेशतः ।
आययौ मुद्गलाञ्जेतुं बहुलोकसमावृतः ॥ ७९३ ॥
तस्य कासिमखानोपि वार्तां श्रुत्वा जिगीषया ।
निर्ययावथ हस्त्यश्वव्याकुलीकृतभूभृतः ॥ ७९४ ॥
तयोर्याकूबभूपालखानकासिमयोरभूत् ।
क्षेत्रदेशे महायुद्धं शरपाषाणदुर्दिनम् ॥ ७९५ ॥
अथ याकूबभूपालः प्रस्थानं नगरं प्रति ।
चकारालक्षितो भूत्वा मुद्गलैरनुयायिभिः ॥ ७९६
धान्यराशिसमीपस्थं नगमाश्रित्य दुर्गमम् ।
याकूबभूपः सहसा युयुधे सह मुद्गलैः ॥ ७९७ ॥

निर्मलासिततनुत्राणबिम्बितार्कमरीचिभिः ।
प्रकाशमन्धकारेपि बभूव वनगह्वरम् ॥ ७९८ ॥
अनेकविगलल्लोकशोणितासवपूरिताः ।
बभुस्तत्र शिरस्त्राणा यमस्य चषका इव ॥ ७९९ ॥
अनेकक्षिप्तपाषाणचूर्णीकृतमहीरुहाः ।
पर्वतस्यापि काश्मीरा उन्नतत्वं न सेहिरे ॥ ८०० ॥
मृतशोणितसंलिप्तनिर्झराम्बुच्छलेन किम् ।
अभवद्यमराजस्य क्रीडतः कुङ्कुमद्रवः ॥ ८०१ ॥
इत्थं याकूबभूपालखानकासिमयोरभूत् ।
युद्धं तन्मासमात्रेण न जयो न पराजयः ॥ ८०२ ॥
अदूलखाननामापि खानकासिमचोदितः ।
जगाम सबलो योद्धुं काश्मीरान्पर्वतस्थितान् ॥ ८०३ ॥
युद्धे संनिहिते तेषां मेघैराच्छादितो गिरिः ।
म्लेच्छानामिव कुर्वद्भिः कालरात्रिसमानताम् ॥ ८०४ ॥
रराज ध्वनिते मेघे विद्युन्मालातिचञ्चला ।
जिह्वेव यमराजस्य स्वादुचर्वणताडिता ॥ ८०५ ॥
धारासारजले मेघे चलिते निजसैनिके ।
अदूलखाननामायं स्वर्गमार्गमथारुहत् ॥ ८०६ ॥
श्रीरङ्गो नाम राजाभूज्जल्लालदीनसेवकः ।
सोपि तत्समरं प्राप्य स्वर्गमार्गमशिश्रियत् ॥ ८०७ ॥
सदाशिवपुरे दुर्गे कृत्वा तिष्ठति मुद्गले ।
ज्येष्ठरुद्रसमीपस्थः काश्मीरैराश्रितो गिरिः ॥ ८०८ ॥
तत्र संनिहिते युद्धे निर्ययुः शोणितापगाः ।
बभूव संगमो यासां सह नद्या वितस्तया ॥ ८०९ ॥

[ मेर्जाआदूलनामा पातिशाहिसेवको युद्धार्थं जगाम । तस्मिन्नवसरे काश्मीरालंशिरखानकलोकैर्याकूबलोकस्य युद्धं बभूव । तयोर्युद्धे संनिकृष्टे आदूलखानोपि जगाम । आदूलखानमायातं दृष्ट्वा याकूबलोको वदति स्म । इह मुगला आगताः । ते चालंशिरखानसैनिकं त्यक्त्वा आदूलखानं जगृहुः । तेन सह युद्धमभूत् । अलंशिरखानलोकोपि आदूलखानसहायतां चकार । याकूबेन सह युद्धं चकार । आदूलखानोप्यलंशिरखानस्य संतुष्टो बभूव । पातिशाहिकार्यं त्वया कृतमिति वचनमुवाच । श्रीरङ्गोपि रायसिंहबद्धसंबन्धो बभूव तस्य निकटे चत्वारिंशद्राजपुत्रा आसन्वर्षे पतिते । श्रीरङ्गो राजपुत्रानवदत् । भो राजपुत्रा यूयं चलत । अहं पङ्गुरस्मि चलितुं समर्थो नास्मि । ते चावदन् मैवं राजपुत्रजातौ चलनं न वर्तते पातिशाहो राजपुत्रेषु संमानं करोति । अत एव अस्माभिर्लज्जा रक्षणीयेति । ते राजपुत्रा न चेलुः ]

इत्थं विधाय समरं निहते च लोके
कासीमखानयवनस्य बभूव भीतिः ।
भग्नानवेक्ष्य यवनान्परिभूयमानाः
काश्मीरलोकनिकराः सहसा ववल्गुः ॥ ८१० ॥

वार्तामेतादृशीं श्रुत्वा जल्लालदीनभूपतिः ।
सैदयूसुबखानस्य चकाराज्ञां जिगीषया ॥ ८११ ॥

वार्ता यूसुबखानस्य श्रुत्वा याकूबभूपतिः ।
चचाल गर्जितं ज्ञात्वा मृगेशस्येव जम्बुकः ॥ ८१२ ॥

श्रीकश्मीरसरोजमध्यनिरतं लोभाशया संगतं
याकूबाभिधषट्पदं भययुतं कुर्वन्क्षणान्निर्भयं
कासिम्खानकषट्पदं भययुतं कुर्वन्क्षणान्निर्भयं
सूर्योयं जयति प्रकाशसहितो यूसूबखानाभिधः ॥ ८१३ ॥

शंशाचक्कादयो लोका मिर्जायूसुबवार्तया ।
चेलुरुड्डयनत्रस्ताः श्येनस्येव कपोतकाः ॥ ८१४ ॥
यूसुबखान आयाते भयात्कासीमखानकः ।
निर्ययावुदिते सूर्ये चक्राह्वो विरहादिव ॥ ८१५ ॥
मिर्जायूसुबखानस्य कश्मीरजनसंयुतः ।
मह्मदमीरनामाभूत्सदासेवनतत्परः ॥ ८१६ ॥
मिर्जायूसुबखानेन जल्लालदीनभूपतेः ।
काश्मीरा बहवो लोकाः प्रहिताश्चरणान्तिकम् ॥ ८१७ ॥
अथ याकूवभूपाल आययौ काष्ठवाटतः ।
तथैव मुद्गलाञ्जेतुं पतङ्गोऽग्निं यथा मदात् ॥ ८१८ ॥
मिर्जायूसुबखानेन मह्मदाभिधसंयुतः ।
हाजीमीरकनामापि प्रहितस्तज्जिगीषया ॥ ८१९ ॥
तस्याचलेभवत्सेना मुगलानां च भूतले ।
ते उभे तुलया धृत्वा विधिर्बलमिवैक्षत ॥ ८२० ॥
यवनैर्नैर्ऋते भूमौ काश्मीरैश्च नगोपरि ।
अन्योन्यसंनिकर्षं तु गन्तुं शक्ता न तेभवन् ॥ ८२१ ॥
सिंहनादोभवन्मध्ये सेनयोरुभयोस्तयोः ।
लोकजिघत्सया शब्दो यमदंष्ट्रोद्भवो यथा ॥ ८२२ ॥
ततोभूत्तुमुलं युद्धं देवदानवभीषणम् ।
महायोधगुणग्रामनिकषोपलसंनिभम् ॥ ८२३ ॥
काश्मीरक्षिप्तपाषाणकम्पितानन्तपल्लवाः ।
आसन्युद्धं द्रुमा दृष्ट्वा भयाद्धूतकरा इव ॥ ८२४ ॥
महायोधकृतानन्तसिंहनादापदेशतः ।
क्रन्दन्निवाभवत्तत्र पर्वतोपि भयाकुलः ॥ ८२५ ॥

योधक्षिप्तशरव्रातच्छन्नस्कन्धा महाद्रुमाः ।
तद्दृष्ट्वा तुमुलं युद्धमासन्रोमाञ्चिता इव ॥ ८२६ ॥
युद्धं बहुविधं कृत्वा तुष्टं मुद्गलसैनिकम् ।
स्वबलं भग्नमालोक्य याकूबोभूद्भयाकुलः ॥ ८२७ ॥
मद्योधचन्द्रमा मन्ये ग्रस्तो यवनराहुणा ।
केवलोहं कथं शक्तो म्लेच्छसङ्ग्रामसागरे ॥ ८२८ ॥
इत्युक्त्वा स च याकूबः केवलोप्यचलत्ततः ।
काष्ठवाटान्तरं प्राप लज्जमानो दिने दिने ॥ ८२९ ॥
जल्लालदीनसेवार्थं गते यूसुबखानके ।
भ्राताभून्मिर्जबद्धाकः कश्मीरेष्वधिकारवान् ॥ ८३० ॥
विचारे विहिते तेन निर्ववौ सकलो जनः ।
चकोर इव शीतांशावुदयं प्रति गच्छति ॥ ८३१ ॥
कुर्वन्तमेकदा हिंसां वणिजं निजवेश्मनि ।
कण्ठे निबद्ध्य तन्मांसं नगरं प्रत्यवलगयत् ॥ ८३२ ॥
यः कश्चित्पुरुषो मोहात्प्राणिहिंसां करिष्यति ।
एतादृशं महत्कष्टमवाप्स्यति न संशयः ॥ ८३३ ॥
एकदा यवनः कश्चिदपराधविनाकृतम् ।
कश्चिज्जघान काश्मीरं पुरुषं मदविह्वलः ॥ ८३४ ॥
निहतं पुरुषं सम्यगन्तर्धाय जलान्तरे ।
न मया निहतः कश्चिदित्यूचे स मृषा वचः ॥ ८३५ ॥
विज्ञप्तस्तत्कुटुम्बेन तत्क्षणं मिर्जबद्धकः ।
उवाच हेतुना केन काश्मीरो निहतस्त्वया ॥ ८३६ ॥
उवाच यवनस्तं च नैव कश्चिन्मया हतः ।
यद्ययं निहतस्तस्य कबन्धः कुत्र तिष्ठति ॥ ८३७ ॥

इत्थं कृतप्रतिज्ञेस्मिन्यवने मिर्जबद्धकः ।
लोकानाज्ञापयामास सरस्यन्तर्विलोक्यताम् ॥ ८३८ ॥
सरस्यालोडिते सम्यक्कबन्धे निर्गतेपि च ।
यवनस्यापराधोभूत्पुरुषं निघ्नतस्तदा ॥ ८३९ ॥
अपराधिनमालोक्य यवनं मिर्जबद्धकः ।
शास्त्रोक्तेन विधानेन दण्डं तस्य समादिशत् ॥ ८४० ॥
ततो जल्लालदीनेन पृष्टो यूसुबखानकः ।
उवाचानन्तकाश्मीरगुणानानतमस्तकः ॥ ८४१ ॥
कश्मीरदेशो विहितो विधात्रा
स्वर्गस्य निर्माण इव द्वितीयः ।
शेषः समर्थो रसनासहस्र-
द्वयेन वक्तुं न गुणांस्तदीयान् ॥ ८४२ ॥
द्राक्षाफलानि क्षणमात्रनश्यन्माधुर्यपूराणि विहाय यस्मिन् ।
शृङ्गारिलोका अमृतं स्रवन्ति पिबन्ति कान्ताधरपल्लवानि॥८४३॥
यत्राङ्गनानां सततं मुखानि विलासलोलाक्षिपरम्पराणि ।
चकासति क्षिप्रचलद्द्विरेफमालाश्रितानीव सरोरुहाणि ॥८४४॥
हाहा तुषारं व्यथयत्यजस्रमिति च्छलाद्धस्तयुगं विधूय ।
यस्मिन्नभीष्टं पतिलोकमध्ये नारी विलासं प्रकटीकरोति॥८४५॥
अन्येपि मन्त्रिणस्तस्य जगदुर्जगतीश्वरम् ।
चक्रवर्तिन्नसंख्याता गुणाः कश्मीरसंभवाः ॥ ८४६ ॥
यस्मिन्भगवती संध्या संध्यानां त्रितये सदा ।
ददाति दर्शनं ग्रीष्मे सलिलागमनिर्गमैः ॥ ८४७ ॥
यत्रामरेश्वरः साक्षाद्धिममूर्तिधरो विभुः ।
वर्धते शुक्लपक्षेसौ कृष्णपक्षे च हीयते ॥ ८४८ ॥

भगवान्स्वयमग्निः स यत्र जाज्वल्यते सदा ।
नेन्धनं विद्यते यस्य नाङ्गारो यस्य दृश्यते ॥ ८४९ ॥

अथ जल्लालदीनोसौ श्रुत्वा कश्मीरजान्गुणान् ।
निर्ययौ दर्शनार्थाय लाहोरनगरान्तरात् ॥ ८५० ॥

जल्लालदीनभूपालः कश्मीरनगरान्तरम् ।
आषाढशुक्लपञ्चम्यामाससाद ससैनिकः ॥ ८५१ ॥

आषाढशुक्लसप्तम्यामाशीर्वादपरायणान् ।
पुपोष स्वर्णदानेन भूपो ब्राह्मणबालकान् ॥ ८५२ ॥

ततो मार्तण्डमाश्रित्य गोप्रदानानि भूपतिः ।
मुक्तासुवर्णयुक्तानि ब्राह्मणेभ्यः समार्पयत् ॥ ८५३ ॥

द्राक्षाटङ्कफलाक्षोटभव्यतालीवनान्वितम् ।
कश्मीरदेशमालोक्य तुतोष धरणीपतिः ॥ ८५४ ॥

वितस्तातीरमाश्रित्य पश्यतो नगरस्थितिम् ।
जल्लालदीनभूपस्य बभूवातीव कौतुकम् ॥ ८५५ ॥

ज्येष्ठरुद्रसमीपस्थं नानापुष्पोपशोभितम् ।
सरः संपश्यतस्तस्य चमत्कारो महानभूत् ॥ ८५६ ॥

जल्लालदीनपादत्रपवित्रीकृतमस्तकः ।
चरणं शरणीकर्तुं याकूबोपि समाययौ ॥ ८५७ ॥

शरणार्थिनमायातं याकूबं चरणानतम् ।
मानसिंहमहीपालसेवकं कृतवान्नृपः ॥ ८५८ ॥

देशान्तरं समासाद्य चक्रवर्तिसमर्पितम् ।
सुखं चकार याकूबो मानसिंहपदानतः ॥ ८५९ ॥

जल्लालदीनभूपालो दृष्ट्वा कश्मीरमण्डलम् ।
देशं यूसुबखानाय दत्त्वा देशान्तरं ययौ ॥ ८६० ॥

मिर्जायूसुबखानोसौ नृपसेवाविचक्षणः ।
देशं ररक्ष निःशेषमादेशेन विशेषतः ॥ ८६१ ॥
श्रीमज्जल्लालदीनेन मिर्जायूसुबरोषतः ।
विहितः काजिआलाख्यः कश्मीरेष्वधिकारवान् ॥ ८६२ ॥
वार्षिके ढौकिते तेन मिर्जायूसुबसेवकाः ।
अधिकारविहीनास्ते गृहे प्राघुर्णिका इव ।
न दत्तं तेन कस्मैचिन्न भुक्तं स्वयमेव वा ॥ ८६३ ॥
किंतु राशीकृतं धान्यं हृत्वा स्वर्णमिवाखुना ।
लोका यूसुबखानस्य काजिआलेन भर्त्सिताः ॥ ८६४ ॥
बभूवुः क्षुधयाक्रान्ता निदाघेनेव चातकाः ।
धान्यं राशीकृतं दृष्ट्वा काजिआलेन वर्धितम् ॥ ८६५ ॥
आययावथ काश्मीरलोकस्तद्धरणेच्छया ।
दुष्टेन काजिआलेन द्रविणेन व्ययीकृते ॥ ८६६ ॥
अथ मुद्गललोकस्य विरोधोभूत्परस्परम् ।
भ्राता यूसुबखानस्य मिर्जायाद्गारकोकरोत् ॥ ८६७ ॥
संधिं कश्मीरलोकेन काजिआलजिघांसया ।
विधाय विविधं युद्धं काजिआलोचलत्तदा ॥ ८६८ ॥
पर्वतारोहणादश्वे मृते स्वर्गं च सोगमत् ।
हुसैनबेगनामाभूज्जल्लालदीनसेवकः ।
विधाय समरं सम्यग्जीवन्प्रत्याययौ च सः ॥ ८६९ ॥
चित्तं विधाय कुटिलं यदनेन वित्तं
संरक्षितं तु रिपुभिः खलु भक्षितं तत् ।
हा संहृतं कथमिति प्रकटप्रहास-
मस्तोकशोकरहितं वदति स्म लोकः ॥ ८७० ॥

येन यत्संचितं वित्तं वञ्चयित्वा कृषीवलान् ।
तत्सर्वं निजलोकेभ्यो मिर्जायाद्गारको ददौ ॥ ८७१ ॥

जल्लालदीनभूपालपादसेवापराङ्मुखः ।
जग्राह मिर्जायाद्गारो राज्यं कश्मीरमण्डले ॥ ८७२ ॥

तद्दृष्ट्वा भाविसङ्ग्रामभीतिचञ्चलमानसाः ।
ततः समस्तकाश्मीरा हाहेति जगदुर्जनाः ॥ ८७३ ॥

इत्थं निशम्य चरितं यवनस्य तस्य
जल्लालदीननृपतिः सहसा जगाम ।
रोषेण रुद्धकटकं कटकं विसार्य
चूर्णीचकार च स पर्वतदुर्गमार्गम् ॥ ८७४ ॥

ततो जल्लालदीनेन बहुलोकसमन्वितः ।
श्रीमच्छेखफरीदाख्यः प्रहितस्तज्जिगीषया ॥ ८७५ ॥

स रुरोह ततो हस्तिगंजपर्वतमस्तकम् ।
उदयाद्रिमिव प्राप्तः साक्षाद्भास्करसारथिः ॥ ८७६ ॥

तस्मिन्नवसरे मिर्जायाद्गारो निजसेवकैः ।
प्राप्य शूरपुरग्रामं निहतो द्रोहकर्मणा ॥ ८७७ ॥

हतं तं पतितं दृष्ट्वा जम्बूकश्वाशितामिषम् ।
स्वामिद्रोहीति थूत्कृत्य सहसा जगदुर्जनाः ॥ ८७८ ॥

आयात एष भगवानिह चक्रवर्ती
पूजाद्यनेकविधिना च मया विधेया ।
इत्याकलय्य स उपायनभक्तियुक्ति
याद्गारको रचितवान्निजजीवितेन ॥ ८७९ ॥

मिर्जायाद्गारके तस्मिन्निहते निजसेवकैः ।
ततः शेखफरीदाख्यः स प्राप नगरान्तरम् ॥ ८८० ॥

साक्षाच्छेखफरीदेन रक्षिते नगरान्तरे ।
चौराणां नाभवन्मार्गे उलूकानामिवोषसि ॥ ८८१ ॥
ततो जल्लालदीनोसौ द्रष्टुं कश्मीरमण्डलम् ।
आययौ कुङ्कुमाक्षोटफलपुष्पोपशोभितम् ॥ ८८२ ॥
काचिद्दर्शनकाङ्क्षिणीं प्रियसखीं संदर्शयन्ती नृपं
व्यग्राभूदपरा चमूपतिरयं दृष्टो मयेत्यब्रवीत् ।
काचिद्रुद्धपयोधरं समचलत्संतर्जयन्ती शिशु-
मित्थं भूपविलोकने समभवत्पौराङ्गनानां त्वरा ॥ ८८३ ॥
ततः काश्मीरलोकेन कृते भूपतिदर्शने ।
सद्यः प्रतिगृहं नित्यं प्रावर्तत महोत्सवः ॥ ८८४ ॥
पुरा चक्रकुलोत्पन्नैर्भूपैर्जातिविरोधतः ।
ब्राह्मणेभ्यस्तदा दण्डो गृहीतः किल वार्षिकः ॥ ८८५ ॥
यो ररक्ष निजां जातिं कुलशीलसमन्वितः ।
स ददौ वार्षिकं राज्ञे करं प्रतिगृहं द्विजः ॥ ८८६ ॥
ब्रह्मयज्ञोपवीतस्य रक्षणाय समर्पितः ।
प्रत्यब्दं ब्राह्मणै राज्ञां चत्वारिंशत्पणाः कराः ॥ ८८७ ॥
उत्तमो ब्राह्मणो देशं तत्याज म्लेच्छदूषितम् ।
तत्याज मध्यमो लज्जां जातिं तत्याज चाधमः ॥ ८८८ ॥
म्लेच्छमेघे स्थिते तस्मिन्नन्धकारितदिङ्मुखे ।
विप्रा देशान्तरं जग्मुर्मराला इव मानसम् ॥ ८८९ ॥
तादृशान्ब्राह्मणाञ्ज्ञात्वा जल्लालदीनभूपतिः ।
चक्रवंशक्रमायातं विप्रदण्डं न्यवारयत् ॥ ८९० ॥
कश्मीरदेशे विप्राणां यो यः पूजां करिष्यति ।
तस्मै तस्मै प्रदास्यामि तत्क्षणं पारितोषिकम् ॥ ८९१ ॥

कश्मीरदेशे विप्रेभ्यो वार्षिकं यो ग्रहीष्यति।
अचिरात्तस्य भूपालो गृहमुत्पाटयिष्यति ॥ ८९२ ॥
इत्यादेशेन भूपस्य हतवार्षिकसाध्वसाः।
आशीर्वादपरा आसन्ब्राह्मणा ब्रह्मवादिनः ॥ ८९३ ॥
साक्षाज्जल्लालदीनोयं जीयाद्वर्षशतार्बुदः।
योस्माकं वार्षिकं दण्डं वारयामास भूपतिः ॥ ८९४ ॥
चक्रवंशप्रभूणां हि भूपतीनां मदाज्ञया।
नित्यं धेनुसहस्रस्य मृत्युरासीदवारितः ॥ ८९५ ॥
म्लेच्छान्धकारविध्वस्ता मित्रदर्शनवर्जिताः।
ब्राह्मणा अन्वतप्यन्त रात्रौ पद्माकरा इव ॥ ८९६ ॥
देशेस्मिन्म्लेच्छदावाग्निशोषिताशेषवृत्तयः।
नावभुर्ब्राह्मणाः सर्वे दग्धारण्ये मृगा इव ॥ ८९७ ॥
क्वचिद्वासः क्वचित्त्रासः क्वचिच्चैव निभर्त्सनम्।
जम्बुकस्येव विप्रस्य पथि संचरतोभवत् ॥ ८९८ ॥
जल्लालदीनभूपालनित्यसेवनतत्परः।
बभूव रामदासाख्यो विप्राणामुपकारकः ॥ ८९९ ॥
तादृशान्ब्राह्मणान्दृष्ट्वा रामदासो महायशाः।
वितीर्णस्वर्णदुर्वर्णो बभौ कर्ण इवापरः ॥ ९०० ॥
यद्वर्षणैरमृतमेष ददाति मेघ-
स्तद्वर्जितेन स विकथ्यत एतदेव।
दानं सदैव ददतो न बभूव तस्य
श्रीरामदासनृपतेर्हृदयेभिमानः ॥ ९०१ ॥
मान्धातर्मन्ददाता भवसि गुणगणैः कर्ण कर्णौ पिधेहि
व्रीडा जीमूतवाह त्वयि भवति न वा किं बले त्वं बलीयान्।

सत्यं त्वावेद्मि नित्यं किमु तव यशसा विक्रमादित्य कृत्यं
दानं सम्यग्विधानं वितरति चतुरं रामदासः सदा सः॥९०२॥

[ अकबरसेवकेन रामदासेन ब्राह्मणगृहं प्रति रजतमुद्राशतं सुवर्ण-मुद्रासहितं समर्पितम् । रजतमुद्रापञ्चाशत्सहस्राणि रामदासेन ब्राह्मणानां दारिद्र्यदूषितानां परिकल्पितानि ।

यावदन्तरमदानदानयो रामदास जगतीसुरद्रुम ।
अन्यदीयभवदीयदानयोस्तावदन्तरमिति प्रतीयते । ]

निवेद्याशीर्वचस्तस्मै ब्राह्मणा ब्रह्मवादिनः ।
गृहं प्रत्याययुः सर्वे पण्डिता निर्मलादयः ॥ ९०३ ॥
अन्येद्युरपि सर्वे ते प्रह्लादा निर्मलादयः ।
संमानिता नरेन्द्रेण वचसामृतवर्षिणा ॥ ९०४ ॥
श्रीमज्जल्लालदीनोपि रामदासनिवेदितान् ।
विप्रान्निर्वापयामास चकोरानिव चन्द्रमाः ॥ ९०५ ॥
ग्रामेषु तेन दत्तेषु बभौ पण्डितमण्डलम् ।
मेघे वर्षति दावाग्निसंतप्तमिव काननम् ॥ ९०६ ॥
जल्लालदीनभूपालसदासेवनतत्परः ।
अभूद्राजानकादित्यो भूमिदाने विवेचने ॥ ९०७ ॥
विपक्षं गुणिनं हित्वा स्वपक्षं गुणवर्जितम् ।
पुपोष भूमिदानेन स ज्ञातिस्नेहमोहितः ॥ ९०८ ॥
कश्मीरेष्वथ रामदासवचनक्षुब्धाचलस्फारितं
भूदानामृतमुत्थितं सुविमलं श्रीराजगेहाम्बुधेः ।
आदित्याभिधराहुणा सविबुधान्हा वञ्चयित्वा कथं
नीतं दुर्जनबन्धुदैत्यसुमहत्संतृप्तये तत्क्षणम् ॥ ९०९ ॥
साक्षाज्जल्लालदीनोसौ करुणामृतसागरः ।
स्वर्णदुर्वर्णदानेन भिक्षुलोकमपूपुरत् ॥ ९१० ॥

[ ततः पातिशाहिः शिखाफैजं समादिशत् । भवता भाण्डागारे रौप्यमुद्रासहस्राणि गृहीत्वा ग्रामे चाटव्यां च सर्वेषु स्थानेषु ब्राह्मणानां भिक्षुकाणां च द्रविणं समर्पणीयमिति तेनापि तथैव कृतम् ]

देशं यूसूबखानाय समर्प्य पुनरेव सः ।
जल्लालदीनभूपालो देशान्तरमथागमत् ॥ ९११ ॥
देशे यूसुबखानेनाश्रिते ते निर्वबुर्जनाः ।
उदयाद्रिं गते सूर्ये प्रातः पद्माकरा इव ॥ ९१२ ॥
समर्पिताः प्रतिग्रामं कार्षिकाः कृतवार्षिकाः ।
धानुष्काश्च पुनर्युद्धशङ्कया तेन वारिताः ॥ ९१३ ॥
प्रवर्तते यथा हंसः क्षीरनीरविवेचने ।
तथाभूत्सोपि धानुष्ककृषीवलविचारणे ॥ ९१४ ॥
जल्लालदीनसेवार्थं गते यूसुबखानके ।
मिर्जोलश्करनामाभूत्तत्पुत्रोत्राधिकारवान् ॥ ९१५ ॥
कलङ्करहितः साक्षात्सदा सर्वशिरोमणिः ।
सुधामयवपुः सोयं बालचन्द्र इवाबभौ ॥ ९१६ ॥
सेवको यवनो लोकं वितस्तातीरमाश्रितः ।
उह्यतां काष्ठभारोयमित्यादिश्य व्यमर्दयत् ॥ ९१७ ॥
तादृशं यवनं दृष्ट्वा मिर्जोलश्करकः स्वयम् ।
उवाच सचिवाञ्शीघ्रं पश्यायं हन्ति मानवान् ॥ ९१८ ॥
अहो मत्सेवका लोकान्काश्मीरान्व्यथयन्ति किम् ।
जल्लालदीनभूपालान्न भयं वर्तते कथम् ॥ ९१९ ॥
मार्गे नास्ति विलुण्ठनं न च भयं चौरान्न वा दुर्जना-
ग्द्रामे वा नगरे प्रयच्छति वणिग्लोको न शुल्कं क्वचित् ।
मेघे वर्षति मेदिनी फलयुता सद्वार्षिकाः कार्षिका
देशं रक्षति न क्षितेः क्षतिरहो जल्लालदीनाभिधे ॥ ९२० ॥

अधुना भवता शीघ्रं यवनोयं निरुध्यताम् ।
इत्याज्ञप्तो निरोद्धुं तमधावत्सचिवः क्षणात् ॥ ९२१ ॥
चलिते यवने तस्मिन्भयार्त्तं सचिवोब्रवीत् ।
भगवन्यवनः सोयं त्वद्भयेन पलायितः ॥ ९२२ ॥
इत्युक्ते तेन भूयः स मिर्जालश्करकोवदत् ।
अधुना चलिते तस्मिन्ममुक्तं वचनं कुरु ॥ ९२३ ॥
मध्येवितस्तमानीय नावं काष्टसमन्विताम् ।
तथा दहन्तु लोकानां यथा भीतिर्भविष्यति ॥ ९२४ ॥
तथाविधे कृते तेन मन्त्रिणा यवनास्तदा ।
ज्वलन्तीं नावमालोक्य भयेनासन्मृता इव ॥ ९२५ ॥
यः कश्चिद्यवनो मोहात्काश्मीरान्पीडयिष्यति ।
स निजस्यापराधस्य सत्वरं फलमाप्स्यति ॥ ९२६ ॥
भूतलान्निर्गता रेजे कुङ्कुमाङ्कुरसन्ततिः ।
शरद्दिदृक्षया शेषशिरःपङ्क्तिरिवोत्थिता ॥ ९२७ ॥
प्रादुरासीत्ततो हित्वा निर्मलाङ्कुरचोलकम् ।
शिखा कुङ्कुमपुष्पाणां लज्जयेव शनैःशनैः ॥ ९२८ ॥
कुङ्कुमपुष्पशोभाढ्यं द्राक्षाक्षोटसमन्वितम् ।
दृष्ट्वा पद्मपुरग्रामं निनिन्द त्रिदिवं जनः ॥ ९२९ ॥
खारीके वापिते बीजे श्रावणे भुवि कार्षिकैः ।
अर्धखारीप्रमाणानि पुष्पाण्यवचितानि तैः ॥ ९३० ॥
प्रातर्यावन्ति पुष्पाणि चितानि धरणीतलात् ।
आसञ्चितानि तावन्ति सायं मध्याह्नयोरपि ॥ ९३१ ॥
यदाप्रभृति नागेन तक्षकेण प्रदर्शितम् ।
तदाप्रभृति तादृक्षं कुङ्कुमं नाभवद्भुवि ॥ ९३२ ॥

कश्चित्पुष्पावचयनिरतो ढौकयानोपि कश्चि-
त्कश्चिद्भारप्रमथितशिरा नौशयानोपि कश्चित् ।
कश्चिन्नित्यं तुलननिरतो रक्षणे कोपि सक्त-
स्तस्मिन्काले बहुलघुसृणव्याकुलो लोक आसीत् ॥ ९३३ ॥

॥ इति कुङ्कुमोत्पत्तिवर्णनम् ॥

अष्टवर्षेष्वतीतेषु जल्लालदीनभूभृता ।
यूसुबखानादाहृत्य देशोन्येषु समर्पितः ॥ ९३४ ॥
असाफखान आयाते मिर्जायूसुबसैनिकम् ।
पृथक्पृथग्ययौ याते वायाविव रजोभरः ॥ ९३५ ॥
श्रीमज्जल्लालदीनेन प्रहितौ निजसेवकौ ।
अह्मद्खानसुल्तानमह्मद्कुलखानकौ ॥ ९३६ ॥
असाफखानस्तौ ज्ञात्वा जल्लालदीनसेवकौ ।
देशाधिपतितां दत्त्वा प्रभुपादान्तिकं ययौ ॥ ९३७ ॥
कश्मीरेष्वपि तौ सम्यग्दुर्विचारं विचेरतुः ।
अन्धकारं सदा पृथ्व्यां सूर्याचन्द्रमसाविव ॥ ९३८ ॥
अकबरनृपतेरथाज्ञया तौ प्रवरपुरान्तिकशारिकासमीपे ।
विदधतुरगमाकलय्य दुर्गं नगनगरीति निरुद्धनामधेयम् ॥ ९३९ ॥
बहुविधतपसा विधूय देहं
त्रिदिवनतिः खलु जन्मनि द्वितीये ।
इह नगनगरीं विलोक्य लोक-
स्त्रिदिवमिदं न समीहतेधिगन्तुम् ॥ ९४० ॥
तस्मिन्नवसरे गेहे रुद्धे भूपालसेनया ।
दुःखं बभूव लोकानां नगरान्तरवासिनाम् ॥ ९४१ ॥
तादृशं दुःखमालोक्य वणिग्लोकनिवेदितम् ।
लोकान्निर्वापयामास निदेशेनेति भूपतिः ॥ ९४२ ॥

नवीननगरीमध्ये मामकाः सन्तु सेवकाः ।
यः पीडयति काश्मीरान्सोपराधी भविष्यति ॥ ९४३ ॥
आदेशे विहिते तेन जल्लालदीनभूभृता ।
अथ मुद्गललोकोयं शिश्रिये नगरीं नवाम् ॥ ९४४ ॥
शारिकापर्वते रेजे नगरी सा सुधासिता ।
राजधानीं समीपस्थां हसन्तीव पुरातनीम् ॥ ९४५ ॥
निर्गते यवने लोकस्तुतोष विहितोत्सवः ।
जल्लालदीनभूपालसदाशीर्वादतत्परः ॥ ९४६ ॥
द्विसहस्रगृहोपेतमलाबदीननिर्मितम् ।
अकस्मादथ मध्याह्ने जज्वाल नगरं क्षणात् ॥ ९४७ ॥
मुद्गलान्निर्गतान्दृष्ट्वा नवीननगरीस्थितान् ।
विरहादिव जज्वाल नगरी सा पुरातनी ॥ ९४८ ॥
गृहशालादिविस्तीर्णं नानाचित्रोपशोभितम् ।
वह्निना क्षणमात्रेण भस्मशेषमभूत्पुरम् ॥ ९४९ ॥
पुराणनगरीदाहे सा बभौ नगरी नवा ।
सपत्नीविरहे जाते नूतनोढेव वल्लभा ॥ ९५० ॥

॥ इति पातिशाहिअकबरजल्लालदीनस्य कश्मीरप्राप्तिवर्णनम् ॥

॥ इति श्रीप्राज्यभट्टकृता चतुर्थी राजतरङ्गिणी ॥

---